गभर्णमेण्ट-काव्य-द्वितीय-परीक्षापाठ्यम्

# दशकुमार-चरितम्

( अपहारवर्म्म-चरितान्तम् )

कविवर—

श्रीमद्दण्ड्याचार्य्य-प्रणीतम्

—०—

। जयाख्यया टीकया संस्कृत-वङ्गानुवाद-हिन्दिभाषानुवाद-कौ[illegible]

काव्यसमालोचना-प्रभृतिभिश्च समलङ्कृतम् ।

प्रख्याताध्यापक—

श्रीमद्गुरुनाथविद्यानिधि-भट्टाचार्य्येण

कलिकातास्थ—राजकीय-संस्कृत-महाविद्यालयान्यतरप्रधानाध्यापक—

काव्य-व्याकरण-तर्कतीर्थ-विद्यावारिधि—

श्रीकालीपद-तर्काचार्य्येण च

सम्पादितम्

श्रीगोविन्दचन्द्रकाव्यतीर्थेन परिशोधितम्




1937

 [मूल्यं सार्द्धैकरूप्यकम—१॥०

# कविवृत्तम्

कविकुलललामभूतो दण्डी भूमण्डले विस्तार्य्य काव्यकलामतिप्रख्यातो जात इति विदितमस्ति सर्व्वेषामेव काव्यानुशीलनशुद्धबुद्धीनां सताम्। नानागुणगुम्फितानि चास्य काव्यानि सन्ततमेव काव्येषु प्राधान्यमस्य प्रख्यापयन्ति, स चायं किम्परिचय इति प्रश्नावतारे बहुभिरेव बहुविधमभिमन्यते, तत्र केचिदाहुः यथा—आलेक्जेण्डारो भारतवर्षमाक्रमितुमुपगतो दण्डिनं कञ्चिदुपलेभे, स एवायं काव्यादर्शदशकुमारनिर्म्माता, तेन आलेक्जेण्डारसमये अस्य सत्तायाः प्रमाणात् खृष्टजननात् पूर्व्वं चतुर्थशताब्दी एवास्य जन्मकाल इति निश्चितम्। केचिच्च दशकुमारचरितस्य पूर्व्वपीठिकायां प्रथमोच्छ्वासे निबद्धस्य चन्द्रगुप्तमन्त्रिणश्चाणक्यस्य वृत्तमालोचयन्तः खृष्टषष्ठशताब्दीमस्य सत्ताकालं ब्रुवते। अयञ्च प्रवादः प्रचरति यथा—वर्षासु ब्रह्मचारिणां नगरवासो विहितः। तद्विधानानुवर्त्तनेन यदा दण्डी कुत्रचित् नगरे वासमुपकल्पयामास, तदा तत्रत्याधिपतिना नगरपतिना स्वकन्यकागणानां शिक्षणाय तं शिक्षकपदे न्ययोजयत्, नियोजितस्य च तस्य रसिकताप्रकर्षं स्वीयकन्यासमीपे श्रुत्वा राजा तदीयनिष्ठासु परं संशयं गत इति विज्ञाय दण्डी राजानं दारिद्र्यविषयवर्णनाय समनुरुरोध। अनुरुद्धश्चासौ राजा दारिद्र्याष्टक-

विनिर्म्माणं कृत्वा यदैव दण्डिनः समीपे प्रादात्, तदैव दण्डिनं सह्लासमवलोक्य अवगततन्मनोभावो स ज्ञा एवमेव निश्चिकाय यथा—"अननुभूतदैन्यस्यापि यथा मम दैन्यवर्णनप्रकर्षस्तथैवास्य नैष्ठिकस्यापि कृत्रिमा रसिकता सम्भाव्यते, नतु दुष्टतया" इति, तदवधि च तस्य ब्रह्मचर्य्यप्रकर्षं निश्चित्य सम्मानविशेषमरचयदिति। अस्तु नाम यथा तथा, दण्डी वस्तुत एव कविषु परां ख्यातिमलभत; इत्यत्र नास्ति किमपि वैमत्यमिति। विस्तारोऽस्य अस्मत्प्रकाशिते काव्यचिन्तापुस्तके द्रष्टव्यः।

—

## संक्षिप्त-कथा

आसीत् मगधेषु पुष्पपुरी नाम नगरी, तत्र राजहंसस्य राज्ञी वसुमती नाम महिषी। मन्त्रिणश्च धर्म्मपालपद्मोद्भवसितवर्म्माख्यास्त्रयः। धर्म्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुती रत्नोद्भवश्च, सितवर्म्मणः सुमतिः सत्यवर्म्मा चेति पुत्रा आसन्। तेषाञ्च सत्यवर्म्मा तीर्थभ्रमणे, कामपालो वाराङ्गनोपभोगे, रत्नोद्भवश्च वाणिज्यविधौ लग्न आसीत्। परं च पितृभिरधिकृतेषु मन्त्रिपदेष्वेव स्वान् योजयामासुः।

अथ कदाचित् मगधेश्वरः मालवाधीशं विजित्य पुनःशिवानुग्रहलब्धाया गदायाः प्रभावेण मालवाधीश्वरेण विजितो जातः। मूर्च्छितश्चासौ समरे मगधेशो दैवात् विन्ध्याटवीं प्राप्तः। मन्त्रिभिः पूर्व्वमेव तत्र नीतैर्म्महिष्यादिभिः जनैः सह सम्मिलितो निशीथवार्तेन लब्धसंज्ञो वामदेवोपदेशात् प्रवर्त्तयितुमभिलषितात् कष्टतपश्चरणात् विनिवृत्तः कालेन वसुमतीगर्भे राजवाहनं नाम सुपुत्रं लेभे। तदैव च सुमतिसुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुता यथाक्रमं पुत्रा जज्ञिरे। अथैकदा कश्चित्तपस्वी राजहंससमीपे कञ्चित् बालकमुपस्थाप्य अकथयत्,—देव! कुशसमित्संग्रहव्यापृतेन मया वनमध्ये मिलितायाः कस्याश्चिद्वृद्धाया मुखात् अस्य बालकस्य वृत्तान्तः एवमवगतः यथा—अयं बालकः

मिथिलाधिपतेः प्रहारवर्म्मणः, भवच्छत्रुणा मानसारेण संग्रामं विदधतस्तस्य सर्व्वाणि बलानि यदा हीनबलानि जातानि तदा पलायमानस्यास्य पुत्रयोः धात्रीभावं गते सा तद्दुहिता च तदनुसरणं कर्त्तुं न पारयामासतुः, सा कञ्चित् भीषणं व्याघ्रमवलोक्य भीता पादस्खलनेन शिलातले पतिता अभूत्। पाणिभ्रष्टश्चायं गोपञ्जरे प्रविष्टः, तदानीमेव धनुर्म्मुक्तः शरः शार्दूलस्य प्राणान् जहार। तद्दुहिता च कुतोऽपि भ्रष्टा। वृद्धा तु मिथिलेशमेकाकिन्यपि अन्वगच्छत्, बालकश्चायं शबरैश्चण्डिकामन्दिरे विचित्य नीतः कथञ्चिन्मया प्राप्तः भवत्समीपे आनीतश्च। राजा तु उपहारवर्म्मेत्यस्य नाम विधाय पुत्रवत् परिपुपोष। अथ कदाचित् मगधराजः तीर्थ-स्नानप्रसङ्गतः शबरपल्लीं निकषा प्रव्रजन् शबर्य्याः कस्याश्चित् अङ्के स्थितं कञ्चन सुन्दराकारं शिशुम् अवलोक्य प्रश्नेन मिथिला-राजस्य एवायं तनय इति ज्ञात्वा बहुभिः धनैः तस्याः सन्तोषं विधाय बालकमपहारवर्म्मेति नाम्ना संज्ञाप्य वसुमत्यै ददे, सापि पुत्रवदेनं पुपोष। एकदा वामदेवस्य शिष्यः सोमदेवो नाम कञ्चिद्बालकं राजहंससमीप आनीय व्यज्ञापयत्—रामतीर्थात् प्रत्यावर्त्तमानेन मया काचिदबला दृष्टा, पृष्टा च कथयामास मगधराजस्य मन्त्रिपुत्रो रत्नोद्भवः कालयवनद्वीपे कालगुप्तस्य वणिजो दुहितरं सुवृत्तां परिणीय कालेन सोदरदर्शनवासनया पोतेन समुद्रमुत्तरन् यानस्य भङ्गेन तीरसमीपे जलमग्नो जातः, अहं सुवृत्तया सह काष्ठफलकमेकमुपलभ्य तीरं प्राप्ता। तत्र

सुवृत्ता पुत्रमेकं प्रसूतवती, ग्रामपथलाभाय गर्भत्यागकष्टेन मोहं गतायाः सुवृत्तायाः सकाशे बालकं स्थापयित्वा न गन्तव्यमिति बालकमपि आनीतवती। ततः कश्चिद्दण्डिनमोच्यमाणा सा यदा बालकमपहाय पलायिता, तदा स दण्डी करेण बालकं गृह्णन् सिंहाक्रान्तः तमूर्द्धं निचिक्षेप, वृक्षाग्रस्थितः कोऽपि वानरो बालमेनं पक्कफलभ्रमेण गृहीत्वा फलभिन्नं ज्ञात्वा वृक्षस्कन्धे समस्थापयत्, प्रस्थिते च ततस्तस्मिन् वानरे अन्तरालात् दृष्टसकलार्थः तं बालं संगृह्य आनीतवान्, राजा च तमेनं पुष्पोद्भवनाम्ना आख्याय सुश्रुतसमीपे प्रादात्।

परेद्युश्च राजहंसो राज्ञीक्रोड़े बालमेकमवलोक्य पृष्ट्वा अज्ञास्यत् यत्—निशाया अवसाने काचित् दिव्याङ्गना राज्ञीमपगतनिद्रां विधाय अकथयत्—"देवि! अहं मणिभद्रनाम्नो यक्षस्य कन्या तारावली नाम; तव मन्त्री कामपालो मम भर्त्ता। तव पुत्रस्य भाविराजचक्रवर्त्तिनो राजवाहनस्य परिचरणाय एनमानीतवत्यस्मि" इत्युक्त्वा सा तिरोदधे, राजा तस्य अर्थपाल इति नाम कृत्वा मन्त्रिणे सुमित्राय दत्तवान्।

अथ परेद्युः कश्चित् शिशुमादाय अन्यो वामदेवशिष्यो राजानमुपेत्यावोचत्,—देव! कावेरीतीरे बालमेनं दधतीं काञ्चिद्वृद्धामवलोक्य प्रश्नेन जानामि स्म यत्—मगधराजमन्त्रिणः सितवर्म्मणः कनिष्ठ आत्मजः सत्यवर्म्मा नाम, स तत्र गत्वा स्वेन परिणीताया कालीनामधेयाया ब्राह्मणदुहितुरनपत्यतया तस्या एव भगिनीं गौरीं परिणीय तस्यां तनयमेकं लेभे, सा वृद्धा

तस्य पुत्रस्य धात्री, काली सापत्न्यरोषात् तया सह एनं बालं कदाचित् कावेर्य्यां निक्षिप्तवती, सा तु वृक्षा काश्चित् शाखामाश्रित्य तीरं लिप्सुः सर्पेण दष्टा। अहं विषौषधान्वेषणं विधाय प्रत्यावृत्य तामुपरतामवालोकयम्, सत्यवर्म्मणश्च अन्वेषणमसम्भवं मन्यमानः त्वत्समीपमिनमानीतवानास्म। राजा तस्य बालकस्य सोमदत्तेति नाम विधाय सुमतये समर्पितवान्। अथ राजवाहनस्य तैः कुमारैः सह चूड़ादिसंस्काराः सम्यगभवन्। विद्यादिषु सुतरां चातुर्य्यञ्च तेषां सर्व्वेषामेव समुपयन्नं, राजा कुमाराणां सर्व्वतोमुखीमुन्नतिं समीक्ष्य आत्मानं सहायसम्पन्नं मन्यमानः परमहृष्टो जातः। इति पूर्व्वखण्डे प्रथमोच्छ्वासः ॥१॥

अथ राजहंसो वामदेवेनोपदिष्टः स्वपुत्रं राजवाहनं सवयस्यगणं दिग्विजयारम्भे नियोजयामास। ततश्च राजवाहनः सवयस्यो विन्ध्यारण्यमुपेत्य यज्ञसूत्रालङ्कृतं विकटाकारं कञ्चित् जनं दृष्ट्वा तं पृष्टवान्,—"कीदृशस्ते परिचयः, कथं वा तवात्र स्थिति"रित्यादि। ततः स प्राह—देव! अत्र केचित् निन्दितचरित्रा ब्राह्मणाः प्रतिवसन्ति, अहं तेषामन्यतमः मातङ्गो नामाहं, दस्युवृत्तिसाधनप्रक्रमे कदाचित् मम सहचरजनैः कञ्चित् ब्राह्मणं हन्यमानमवलोक्य तत्प्रतिषेधं कुर्व्वाणः अहमेव तैर्निहतो यमपुरं गत्वा यमं दृष्टवान्। यमस्तु "नायमस्य मृत्युकालः, ब्राह्मणार्थे च जीवनत्यागादस्य महत्पुण्यम् अतःपरमस्य सुमतिरुदेष्यति, तदयमत्रस्थितानां

पापिनां दुर्दशामवलोक्य, पुनः पूर्व्वं देहं लभताम्" इति चित्रगुप्तमकथयत्। चित्रगुप्तेन च यमपुरे स्थितानां पापिनामवस्थां दर्शितोऽहं पूर्वशरीरं प्राप्तवान्। मया रक्षितपूर्व्वेण च तेन ब्राह्मणेन विविधासु विद्यासु शिक्षितः शिवपूजायामुपदिष्टश्च—"अद्य शिवपूजां कुर्व्वन् इह तिष्ठामि।" अथ स मातङ्गो राजवाहनं वयस्यगणात् दूरं नीत्वा प्राह—देव! गतरजन्याः शेषयामे शिवेन स्वप्ने समादिष्टोऽस्मि यथा—"दण्डकारण्यान्तरचारिण्यास्तटिन्यास्तटभूमौ स्फटिकस्य शिवलिङ्गस्य पश्चात् गौरीपदाङ्कलाञ्छितस्य शिलाफलकस्य समीपतः विलमेकं प्राप्तव्यं, तत्र वर्त्तमानस्य ताम्रशासनस्य लेखमनुसृत्य कृतव्यापारेण त्वया पातालाधीश्वरेण भवितव्यम्। अविलम्बमेव तव साहाय्यार्थं कश्चित् राजपुत्र आगमिष्यती"ति। तदत्र मे साहाय्यं विधाय अनुकूलयं मे पातालाधिपत्यम्। राजवाहनोऽपि तत्र स्वीकारं कृत्वा निशि परिहाय वयस्यान् मातङ्गेन सह प्रतस्थे। प्रभाते च राजवाहनस्य वयस्यास्तत्र राजवाहनमदृष्ट्वा परस्परं मिलनदेशं विज्ञाप्य तस्य अन्वेषणार्थं प्रतस्थिरे। ततो मातङ्गो राजवाहनसाहाय्येन प्रोक्तविलमुखमुपेत्य पातालं प्रविष्टो नगरमेकं लब्ध्वा तत्रत्यसरोवरस्य समीपे शिवादेशानुसारादुपपादितेन घृतेन प्रज्वलिते वह्नौ निजशरीरं दग्ध्वा दिव्यं देहं प्राप्तः काञ्चित् सुन्दराकृतिं युवतिं समुपस्थितामपश्यत्, सा च पृष्टा प्राह—असुरदुहिताहं कालिन्दी नाम, विष्णुना मम पितरि निहते तच्छोकविक्लवां मां कश्चित्तापस

एवमुक्त्वा समाश्वासयामास यथा—"केनचित् सुन्दराकारेण युवकेन अत्रागतेन तव भर्त्तृपदमधिष्ठाय पातालराज्यं पालयितव्यम्। तदद्य मां परिणीय पातालराज्यमधितिष्ठे"ति मातङ्गोऽपि तथा तथा चकार।

अथ राजवाहनः कालिन्दीदत्तं क्षुत्पिपासाहरं मणिं गृहीत्वा परिचितपूर्व्वेण विलमार्गेण भुवं लब्ध्वा कुत्रचित् उद्यानभागे विश्रामाय समुपविष्टः, शिविकागतं सस्त्रीकं कञ्चन पुरुषं दृष्ट्वा सोमदत्त इति निश्चित्य सम्भाषणादितः परं तदीयं वृत्तं वर्णयितुमादिदेश। इति पूर्व्वखण्डे द्वितीयोच्छ्वासः ॥२॥

अथ सोमदत्तः कथयितुमारेभे—देव! भवदन्वेषणाय भूमण्डलभ्रमणात् परिश्रान्तः कदाचित् पिपासाकुलः नदजलं पातुं प्रवृत्तस्तत्र कञ्चित् मणिं लब्ध्वा कुत्रचित् देवमन्दिरे गत्वा ब्राह्मणमेकं वृद्धं दीनं दृष्टवान्, कथाक्रमेण तस्य ब्राह्मणस्य समीपनस्य वीरकेतोः स्वकन्याया वामलोचनाया निमित्ते मत्तकालेन सह विरोधवृत्तान्तमुपश्रुत्य तस्मै ब्राह्मणाय तन्मणिदानमकरवम्। तस्मिंश्च मणिमादाय तन्मन्दिरात् अपक्रान्ते पथि श्रमवशात् निद्रामुद्रितलोचनोऽभवम्। अथ कियत्क्षणानन्तरं कैश्चित् भटैरनुगतो बद्धः स ब्राह्मणः तस्मिन्नेव देवमन्दिरे आगत्य मां चौर इति निरदिशत्। सैनिकास्ततो ब्राह्मणं विमुच्य मां बद्ध्वा कारामनयन्। क्रमेण कारागारे स्थितैरपरैः सह संलापात् मणिवृत्तान्तं विज्ञाय सखिभावं गतैस्तैः सह कारां भङ्क्त्वा

निरगमम्। परेद्युश्च वीरकेतोर्मन्त्रिणा मानपालाख्येन सह समरभूमिमवतीर्य्य शत्रोर्मत्तकालस्य मस्तकं अच्छिन्दम्। मदीयविक्रमसन्तोषेण वीरकेतुः स्वतनयां वामलोचनां मह्य-मेव निष्पादितवान्। तत एव सिद्धादेशविश्वासेन महाकाल-निवासिनो महादेवस्य पत्नीसहितः समाराधनप्रवृत्तो भवतः पादमूलं गतोऽस्मि। अथ राजवाहनोऽपि निजवृत्तमस्मै विनिवेद्य पुष्पोद्भवं निरीक्षमाणः तच्चरितं वर्णयितुमादिदेश।
इति पूर्व्वखण्डे तृतीयोच्छ्वासः ॥३॥

अथ पुष्पोद्भवः कथयितुं प्रारेभे,—देव! त्वदन्वेषणाय भुवं परिभ्रम्य श्रान्तः कदाचित् कस्यचित् शैलतटप्ररूढ़स्य वृक्षस्य छायायां समुपविष्टः भूतले कूर्म्माकृतिं मानुषच्छाया-मेकामवलोक्य ऊर्द्ध्वं चालितमुखो महारयेण पर्व्वतात् पतन्तं कञ्चित् पुरुषं दृष्ट्वा पतनपथमध्य एव तं धृत्वा शनैः भूतले-ऽस्थापयम् क्रमेण च शुश्रूषया तस्य चेतनां जनयित्वा तन्मु-खात् तद्वृत्तान्तं श्रुतवान्। तदैव दूरे नारीक्रन्दनमाकर्ण्य तत्र गतो ज्वलिते वह्नौ आत्मत्यागव्यापृतां काञ्चिद् वनितां कयाचिद् वृद्धया सान्त्वनावाक्येन निवार्य्यमाणामवालोकयम्। ततस्ते नार्य्यौ प्रकृतव्यापारात् विनिवार्य्य पूर्व्वमस्मदाश्रिते वृक्षतले उपस्थाप्य सर्व्वं वृत्तान्तमवगत्य प्राप्तं पुरुषं मम पितरमग्निप्रवेशव्यवसायपराञ्च मम जननीं निश्चित्य कस्य-चित् तापसस्य आश्रमपदे तौ स्थापयित्वा, ध्वंसावशिष्टं कञ्चित् प्राचीनं नगरमुपेत्य तस्यैव मुनेः शिष्यगणस्य आनु-

कौशल्येन वृक्षमूलस्थितानि बहूनि धनानि समुपलभ्य द्रव्यान्तर-व्यमिषेण निकटवर्त्ति वणिक्कटकं नीतवान्। चन्द्रपाल-नामानं वणिक्पुत्रञ्च सखायं विधाय उज्जयिनीनगरमिलितः पितरावपि तत्रैव समस्थापयम्, चन्द्रपालस्य जनकेन बन्धु-पालेन च सह मालवनाथमुपेत्य तदनुमोदनक्रमेण तत्र वासं निरधारयम्। ततो बन्धुपालेन सह तव समागमसूचकं शुभशकुनं ज्ञातुकामो वनं गतो यदा तत् प्रान्ते विचरणपर आसं, तदा बन्धुपालकन्याया बालचन्द्रिकायाः प्रणयेन मुग्धो जातः, सापि तरुणी मयि समनुरक्ता जज्ञे। अन्यस्मिन् दिवसे तत्रैव मिलिताया बालचन्द्रिकाया मुखात् दारुवर्म्मणो दुर्नय-माकर्ण्य कूटोपायेन तद्वधं संसाध्य बालचन्द्रिका परिणयेन प्राप्ता। ततश्च अद्य शुभशकुनदर्शनेन बन्धुपालनिर्दिष्टे शुभदिवसे तव समागमं भाविनं मत्वा अत्रागत्य त्वां प्राप्तवानस्मि। इति पूर्व्वखण्डे चतुर्थोच्छ्वासः ॥४॥

अथ कदाचित् वसन्तोदये मानसारदुहिता अवन्तिसुन्दरी स्वीयया सख्या बालचन्द्रिकया सह वसन्तकालोचितां मदन-पूजां प्रस्तुवन्ती रेमे, तत्र च पुष्पोद्भवेन सह राजवाहनो मिलितस्तस्यामवन्तिसुन्दर्य्यामतितरामासक्तो जज्ञे। अवन्ति-सुन्दर्य्यापि राजवाहनलावण्यमुग्धा तत्र परमामासक्तिं दधाना तदैव तत्र तस्या जननी मिलिता इति सापि तया सह तत्स्थानं विहाय प्रस्थिता मदनव्याकुला जाता। बाल-चन्द्रिका राजकन्याया मदनाक्रान्तिमनुभूय तया लिखितं

पत्रमेकं पुष्पोद्भवभवने राजवाहनं प्रापयामास। राजवाहनस्तत्पत्रलाभात् अवन्तिसुन्दरीमात्मनि सुतरामनुरक्ता-मवेत्य विद्येश्वराख्यस्य ऐन्द्रजालिकस्य चातुर्य्येण सर्व्वेषां पश्यतामिव अवन्तिसुन्दरीं परिणिनाय, तेन च निर्व्वाणं गतो द्वयोरेव मदनव्याधिः। इति पूर्व्वखण्डे पञ्चमोच्छ्वासः ॥ ५ ॥

अथैकदा सुरतश्रान्ता अवन्तिसुन्दरी सुप्तोत्थिता राजवाहनं रजतशृङ्खलाबद्धपादयुगलमालोक्य मुक्तकण्ठं प्रारुदत्, तच्छ्रुत्वा राजपुररक्षिणः "किं वृत्त" मिति सम्भ्रान्तास्तत्रागत्य तथावस्थं राजवाहनमालोक्य तदानीन्तनाय राज्ञे मानसार-भागिनेयाय चण्डवर्म्मणे यथादृष्टमकथयन्। स तु चण्डवर्म्मा राजवाहनं काष्ठमये पञ्जरे निरुरोध। तदनन्तरमङ्गराज-कन्याया अम्बालिकाया लाभकाम्यया तस्याः पितरमङ्गराजं विजेतुमिच्छुश्चण्डवर्म्मा अविश्वस्तहृदयो दारुपञ्जरं राज-वाहनाधिष्ठितं सहैवादाय गत्वा चम्पेश्वरं विजिग्ये। अम्बा-लिकायाः परिणयञ्च निशावसानभाविनं प्रचारयामास। एतस्मिन्नन्तरे दर्पसारो दूतमुखेन राजवाहनस्य निधननिदेशं प्रेषयामास, श्रुत्वा चैतच्चण्डवर्म्मा चण्डपोताख्येन दन्तावलेन प्रातरेव तन्निधनमाज्ञापितवान्। अथ प्रभाते राजवाहन-चरणनिरोधकारिणी, रजतशृङ्खला सुरतमञ्जरी नाम अप्सरो-वनिता भूत्वा स्वस्य शापं तेन रजतशृङ्खलीभावं वीरशेखरेण आत्मनो लाभं राजवाहनस्य पादबन्धनंतालाभञ्च विज्ञाप्य अन्तर्हिता बभूव। तदैव अम्बालिका-पाणिग्राहकामुक-

चण्डवर्म्मा प्रसह्य केनचित् वीरयुवकेन शस्त्रिकाप्रहारैः पञ्चत्वं प्रापितः। राजवाहनः समुपगतं चण्डपोतमारुह्य परिक्रम्य चण्डवर्म्मघातकमपहारवर्म्माणं विज्ञाय तस्मिन्नेव समारोप्य चण्डवर्म्मपक्षं पराभूय नगराद्‌बहिर्गतः गङ्गातीरे समुपस्थाय तस्मात् दण्डिनः समवततार। तदैव उपहारवर्म्मप्रभृतयो मिथिलप्रहारवर्म्मादिभिः सम्मिलितो धनमित्रश्च तत्रैव समुपस्थिताः, क्रमेण राजा राजवाहनः यथास्वं वृत्तं वर्णयितुंताननुरुरोध, तत्र प्रथमं अपहारवर्म्मा स्वं वृत्तं वर्णयितुमारेभे।

इति उत्तरखण्डे प्रथमोच्छ्‌वासः ॥ १ ॥

अथापहारवर्म्मा प्राह—देव! भवदन्वेषणाभिलाषी अङ्गेषु प्रविष्टो विख्यातस्य तत्र मरीचिनामकस्य मुनेः सकाशात् भवतो गतिदेशं विज्ञातुकामोऽभवम्। स च मुनिः मरीचिं नाम मुनिं काममञ्जर्य्या नाम वेश्यया उपहृतात्मानं तमुक्त्वा आत्मन एव तन्मुनित्वं विज्ञाप्य स्वल्पेन कालेन मत्कर्म्मोपयोगितां भाविनीं शशंस। अथाहं गच्छन् नगरं प्रति रोदनपरं कञ्चिदवलोक्य रोदनकारणं पृष्ट्वा अज्ञासिषं तस्य नाम विरूपकेति, काममञ्जरी च तस्य महदनिष्टं विदधे इति। ततो विरूपकं सुबहु समाश्वास्य धनानां पुनस्तया वेश्यया एव प्रतिपादनीयतामुद्‌घुष्य द्यूतक्रीड़या तत्र नगरे बहूनि धनानि सञ्चित्य विमर्द्दकस्य तदानीमेव कृतस्य सुहृदो मुखात् तन्नगरावस्थामामूलमुपश्रुत्य कस्यचित् क्षपणस्य

धनिनो गृहात् बहूनि धनानि चौर्य्येण आत्मसात् कृत्वा प्रतिष्ठमानः पथि कुलपालिकाख्यां काञ्चित् वणिग्दुहितरमुपलब्धवान्, अनन्तरञ्च तां तत्प्रियावासं नयन् तामनुसरतो रक्षिणः कपटप्रयोगेण प्रतार्य्य मत्प्रियतमस्य धनमित्रस्य समीपे उपस्थाप्य तेन मैत्रीमस्थापयम्, ततस्तां बालां तज्जनकस्य कुबेरदत्तस्य आलयं नीत्वा तत्रत्यानि सर्व्वाणि वस्तूनि अपहृत्य राजमार्गे बहिर्गतः, पार्श्वगतमेकं हस्तिनमारुह्य उपस्थितान् रक्षिणो विजित्य तेनैव हस्तिना अर्थपतेर्गृहमुन्मूल्य धनमित्रगृहं प्राप्तः सुप्तिं लेभे। अथ प्रातः समाश्रितचातुर्य्यो धनमित्रेण चर्म्मभस्त्रिकावृत्तं राजसमीपे प्रचार्य्य धनमित्रसमन्वितः गोष्ठीगतः काममञ्जरीभगिन्या रागमञ्जर्य्याः सङ्गीतश्रवणमुग्धस्तस्यां प्रणयवान् जातः। तदनन्तरं चर्म्मरत्नलोभात् रागमञ्जर्य्या जननीं माधवसेनां तद्भगिनीं काममञ्जरीञ्च प्रलोभ्य गुणशुल्कां तां विवाहयामास। अथ काममञ्जर्य्यै चर्म्मरत्नमुपनीय तया विरूपकाय स्वधनानि वितार्य्य धनमित्रप्रयोगेण राज्ञा अर्थपतेः काराप्रवेशं वारयित्वा काममञ्जर्य्या अर्थपतिना चर्म्मरत्नस्य चोरणमावेद्य अर्थपतिनिर्व्वासनं संसाध्य नित्यमेव चौरवृत्तिमकरवम्। अथैकदा सुरामत्तोऽहं राजपथे चौरत्वेन राजपुरुषैः शङ्क्यमानः संरुद्धः शृगालिकायै कार्य्यं निवेद्य तैः कारायां प्रवेशितोऽभवम्। तत्र च राजकन्यामभिलषतः कान्तकस्य अनुमोदनेन सुरङ्गां विधाय तं हत्वा राजकन्यया मिलित आसम्। ततः पुनः

कारायां प्रविश्य सिंहघोषस्य किञ्चिदुपदिश्य शृगालिका-समभिव्याहृतो राजपथे प्रसरन् उन्मत्तभावमभिनीय रक्षिणः प्रतार्य्य गत्वा रागमञ्जरीगृहे उपस्थाय निशामनैषम्। अथ प्रातः मरीचिमुखात् भवत्समागमं विज्ञाय तत्परिणय-स्थानं स्तुतिपाठकैः सहितः प्रविश्य अम्बालिकायाः परिणय-व्यापाराय सोद्योगं चण्डवर्म्माणं हत्वा भवता आमन्त्रितः सुहृत्समागमसुखभागी संवृत्तोऽस्मीति।

इति उत्तरखण्डे द्वितीयोच्छ्वासः॥ २॥

———

# सोमदत्तचरितम्

सत्यवर्म्मतो गौरीगर्भे सोमदत्तः समजनि। विमाता चास्य कालो नाम। स चैकदा राजवाहनमन्वेष्टुमवनीं पर्य्यटन् परिश्रान्तः पिपासुः काञ्चित् सरितमवतीर्य्य पयःपानावसरे मणिमेकमवाप। अथ गच्छति काले धात्रीसहायः सोमदत्तो विमात्रा नदीतीरे निक्षिप्तः धात्री तु दैवगत्या स्रोतसानीयमानेन काष्ठफलकेन तमुद्धृतवती, पञ्चत्वं गतवती च सा तत्काष्ठफलकलग्नाहिदंशनेन। अथानाथः स सोमदत्तः वामदेवशिष्येण केनचिद्द्विजेन नीतः प्रदत्तश्च राजहंसाय। अत्रान्तरे वीरकेतुकन्यायाः वामलोचनायाः पाणिमादित्सुना मत्तकालेन सह वीरकेतोः कलहः सञ्जातः। कलहायमानो मत्तकालो हि राजधानीनिकटे समाविशितकटको विराजमानोऽभूत्। अथास्मिन्नेव समये पथि गच्छन् सोमदत्तः कस्मिंश्चिद्देवमन्दिरसन्निधाने कञ्चित् प्रवयसं विप्रमवलोक्य तन्मुखान्मत्तकालस्य वीरकेतुकन्याग्रहणार्थमध्यवसायं श्रुत्वा तस्मै विप्राय तं मणिमदात्, ब्राह्मणो मणिमादाय प्रस्थितः, स्वयञ्च सोमदत्तोऽध्वश्रमवशान्निद्रामवाप। अथास्मिन् पथि गच्छद्भिर्मत्तकालानुचरैर्मणिग्राही द्विजोऽसौ चौर इति मन्यमानैराबद्धो नीतश्च सोमदत्तपुरतः। द्विजोऽपि 'अयं चौर' इति सोमदत्तं निर्द्दिश्यानुचरकरमुक्तः प्रस्थितवान्, सोमदत्तश्चानुचरैराबद्धः काराबद्धोऽभूत्। अथ स तत्र कारारुद्धजनान्तरेभ्यस्तन्मणिवृत्तान्तं श्रुत्वा तैः सह सख्यं विधाय कारातो निर्गतः तत्परदिने वीरकेतुमन्त्रिणा मानपालेन सह समरभूमिं गत्वा निक्रान्त

तस्य विरोधिनो मत्तकालस्य शिरः। वीरकेतुरपि तस्य पराक्रमं सुबहुमन्यमानस्तस्मै कन्यां ददौ। ततः सिद्धादेशेन सपत्नीकः स महाकालवासिनं शिवमाराधयितुमागच्छन् राजवाहनसाहित्यमवाप।

## पुष्पोद्भवचरितम्

अथैकदा राजवाहनमन्वेष्टुमनाः पुष्पोद्भवः पथि गच्छन् श्रान्तः कस्मिंश्चिद्विटपिमूले उपविष्टो दृष्टवांश्चान्तरीक्षाद्भूतले पतन्तं कूष्माण्डाकारं छायास्वरूपं कमपि मानुषम्। ततस्तून्मुखः स पतन्तं तं पुरुषविग्रहमन्तरीक्ष एव जग्राह, शुश्रूषया च तं सचेतनीचकार। अथासौ नारीकण्ठरवमाकर्ण्य तमनुसरन् प्रज्वलितपावके पिपतिषुं काञ्चिन्नारीमवलोक्य तां वह्निप्रवेशतो वारयित्वा कयाचिद्वृद्धया सह तस्मिन् तरुतले समानीय 'नारीयं जननी, पुरुषः स च पिते'ति वृद्धामुखादवगतवान्, ततः संस्थाप्य च तौ कस्यचिन्मुनेरधिष्ठाने, तदीयशिष्येण सह समीपस्थं ध्वंसावशिष्टं किञ्चिन्नगरमागत्य आसाद्य च तत्र भूतलप्रोथितानि विविधधनानि सन्निहितं कञ्चिद्वणिक्कटकमाससाद। ततस्तत्सार्थाधिपतिना चन्द्रपालेन सह सख्यं विधाय उज्जयिनीं गत्वा जनकावपि तत्र नीत्वा चन्द्रपालजनकेन बन्धुपालेन सह मालवनाथनिदेशतस्तत्र वासमकरोत्। अथ स राजवाहनवृत्तान्तसूचकं शुभशकुनागमनं विजानता बन्धुपालेन सममुपवनमाजगाम, ततोऽन्तिके विचरन्तीं बन्धुपालकन्यामवलोक्य तस्यामासक्तमना बभूव। सापि च तथानुरागवती तस्मिन् पुष्पोद्भवे संवृत्ता।

अथास्मिन्नुपवने स बालचन्द्रिकामुखाद् दारुवर्म्मविवरणमाकर्ण्य तद्विनाशार्थं कूटकौशलमाविष्कृत्य कपटस्त्रीवेशेन सह बालचन्द्रिकया तद्गृहे प्रविश्य निहत्य च तं, बालचन्द्रिकां परिणिनाय। अनन्तरं बन्धुपालत: शुभशकुनेङ्गितं ज्ञात्वा तदनुसरणक्रमेण सह राजवाहनेन सङ्गतोऽभूत् पुष्पोद्भव:।

## अपहारवर्म्मचरितम्

प्रियंवदाया: प्रहारवर्म्मतो लब्धजन्मापहारवर्म्मा शैशवे शबराहृत: शबरीक्रोडमलमकार्षीत्। तत: स काले तीर्थस्नानं गतस्य भूपते: राजहंसस्य नयनपथे पपात। ततो भूपतो राजहंसस्तं चक्रवर्त्तिलक्षणयुक्तमुपलक्ष्य प्रचुरतरधनदानेनादाय महिष्यै ददौ। अथापहारवर्म्मा राजवाहनमन्विष्यन्नङ्गेषु गङ्गातटं विचरन्नेकदा चम्पानगरोपान्तमागत्य काममञ्जर्य्याध:पातितस्य मुनेर्मरीचेर्वृत्तजातमश्रौषीत्। ततोऽसौ नगरं भ्रमन् क्रमेण विरूपकनाम्ना केनचिज्जनेन मिलित:, श्रुतश्च तन्मुखात् सा काममञ्जरीनाम्नी वेश्या तमपि विरूपकं नि:स्वं चकारेति। तत: 'सा पुनस्तुभ्यं तद्धनं प्रत्यर्पयिष्यतो'ति विरूपकमाश्वास्य प्रविश्य च नगरं द्यूतक्रीड़या दीनाराणां षोड़श सहस्राणि जितवान्, ततो विमर्द्दकेन नाम्ना केनचिज्जनेन सह सख्यं विधाय तन्मुखान्नगरवृत्तान्तमाकर्ण्य कस्यचित् कृपणस्य सर्व्वस्वमपहृतवान्। ततो राजपथे विचरन्नेकदा कुलपालिकानाम्नीं युवतिमेकाकिनीमवलोक्य तामादाय धनमित्रनाम्ने तत्प्रियाय दत्त्वा तेन सह सख्यं चकार। ततो धनमित्र-

सहायः स कुबेरदत्तस्य सर्व्वस्वं चोरयित्वा पथि निर्गच्छन् गजारूढ़ान् रक्षिपुरुषान् पराजित्य तेनैव गजेनार्थपतिपुरं भूमिसात् कृत्वा धनमित्रगृहमासाद्य सुष्वाप। ततः प्रभाते केनचिच्छद्मना धनमित्रमुखेन चर्म्मरत्नवृत्तान्तं राज्ञे विज्ञाप्य कस्याञ्चिदामोदपरिषदि काममञ्जरीभगिन्या रागमञ्जर्य्याः सङ्गीतमाकर्ण्य तस्यां समासक्तोऽभूदकथयच्च तस्यै चर्म्मरत्न-प्रभावम्। ततश्च चर्म्मरत्नलोभेन रागमञ्जरीमाता माधवसेना भगिनी काममञ्जरी च तस्य वशमीयतुः। अथ स रागमञ्जरीं परिणीय काममञ्जर्य्यै चर्म्मरत्नं दत्त्वा तद्विनिमयेन विरूपकाय पूर्व्वापहृतधनानि प्रदापयामास। ततो धनमित्र-प्ररोचनया कञ्चिदभियोगमुद्भाव्य अर्थपतिं कारागारे प्रक्षिप्य पुनरपि काममञ्जरीमुखेन चर्म्मरत्नचौर्य्यापराधं तस्मिन्नारोप्य तं निर्वासयामास। एकदा सुरापानमत्तश्चौर्य्यापराधविधृतः स कारावद्धोऽपि प्राप्तेङ्गितया शृगालिकया पुनर्मुक्तः सुरङ्गापथेन बहिर्गच्छन् काराद्वाररक्षकं कान्तकं कृतान्तकरसात् कृत्वा राजकन्ययाम्बालिकया सह सङ्गतोऽभूत्; ततः सुरङ्गापथेन पुनः कारागारं प्रविश्य कारावासकाले सञ्जातसौहार्द्दं सिंहघोषं किञ्चिदुपदिश्य पुनर्निर्गत्य उन्मत्तभावं प्रकटय्य रक्षिपुरुषान् वञ्चयित्वा रागमञ्जरीगृहे यामिनीमयापयत्। ततः स प्रभाते मरीचिमुखादपहारवर्म्मवृत्तान्तं श्रुत्वा स्तुतिपाठकैः सह तत् विवाहशालां प्रविश्य अम्बालिकाग्रहणोत्सुकं चण्डवर्म्माणं छुरिकाघातेन निहत्य राजवाहनदर्शनमवाप।

# अथ मङ्गलाचरणम्

सालङ्कारपदा सदा सदनुगा सङ्गीतरागोचिता
निर्दोषा गुणगुम्फिता सुललिता रीतिप्रकर्षाञ्चिता ।
सद्वृत्ता कलुषार्त्तिहा रसवती योग्या सदर्थान्विये
साकाङ्क्षा चिरमस्तु वस्तुविषये वाणी कृपाकारिणी ॥ १
नीलिमा नयनयुग्मतारयो: पादपङ्कजयुगे च शोणिमा ।
सर्वविग्रहगतश्च पाण्डिमा यस्य तद्विजयतां सितं महः ॥ २
कविरविकृदितो दण्डी भूमण्डलमण्डनीभूत: सततम् ।
यस्य हि कवितासार्थं सुधासदृशं बुधा भजन्ते ॥ ३
कविना तेन निबद्धं दशकुमारमुत्तमं काव्यम् ।
व्याख्यामस्य विधास्ये जयाभिधानां निवेशेन ॥ ४
गुणदोषालङ्कृतीनां सविवेकानुशीलनम् ।
भावार्थप्रभृतीनाञ्च कृतमत्र निवेशनम् ॥ ५
गुणो माधुर्य्यसंज्ञोऽत्र रीति: पाञ्चालिका मता ।
शृङ्गारो रस एकाङ्गी कुमारा दश नायका: ॥ ६
प्रधाननायकस्तत्र कुमारो राजवाहन: ।
अवन्तिसुन्दरी चापि नायिकात्र महत्तमा ॥ ७
असौ टीका जयानाम्नी नामव्युत्पत्तियोगत: ।
विजित्य सकलां व्याख्यां भूयादेव यशस्विनी ॥ ८
ज्ञातव्यानामशेषाणां न कोऽप्यंशो जिज्ञासित: ।
लाघवात् त्रुटितं यत्नस्तत्क्षमन्तां विपश्चित: ॥ ९
मर्त्त्यमात्रगता भ्रान्तिस्त्रुटिरत्र सुसम्भवा ।
तस्माद्दोषपरित्यागात् गुणान् गृह्णन्तु साधव: ॥ १० ॥

# दशकुमार-चरितम्

## पूर्वपीठिका

### प्रथमोच्छ्वासः

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रै विक्रमो वो वितरतु विबुधद्वेषिणां कालदण्डः ॥ (क)

(क) ओं नमो गणेशाय । कविकुलललामभूतो विविधकाव्यकलाकल्पनानिष्णातः श्रीमान् दण्डिनामा कविः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः-

## মঙ্গলাচরণ

ব্রহ্মাণ্ডরূপ ছত্রের দণ্ডস্বরূপ, ব্রহ্মার উৎপত্তিকমলের মৃণাল-দণ্ডস্বরূপ, ধরণীরূপ তরণীর গুণবৃক্ষ-( মাস্তল )স্বরূপ, প্রস্রুত মন্দাকিনীরূপ বৈজয়ন্তীর ধারণদণ্ডস্বরূপ, জ্যোতিষ্কসমূহরূপ রথ-চক্রের অক্ষদণ্ডস্বরূপ, ত্রিভুবনের বিজয়স্তম্ভস্বরূপ, দেববিদ্বেষী-দিগের সাক্ষাৎ কালদণ্ডস্বরূপ, নারায়ণের চরণস্তম্ভ তোমা-দিগের ( শ্রোতা ও বক্তার ) সর্ব্ববিধ শুভসাধন করুক্ ।

परनिर्वृतये कान्तासम्मिततयोपदेशयुजे" इत्याद्यालङ्कारिकवचनार्थमाधैपर्यालोचनेन काव्य-मात्रस्यैव निखिलश्रेयःसाधनतामधिगत्य गद्यपद्यभेदेन काव्यस्य द्वैविध्याद् गद्यकाव्यं निर्मातुकामः, प्रारिप्सितस्य तस्य निर्विघ्नपरिसमाप्तिकामस्य विघ्नविध्वंसकुशलस्य नारायणस्य चरणारविन्दस्मरणं प्रस्तौति—ब्रह्माण्डेत्यादिना। ब्रह्माण्डं समस्तः संसारः, तदेव छत्रम् आतपत्ररूपं तस्य दण्डः आश्रयभूता यष्टिः, तथाच यथा आश्रयदण्डव्यतिरेकेण छत्रं न स्थातुमर्हति, तदभावे च रौद्रवर्षादिकानामुपद्रवमपनेतुम् अनुपयुज्यमानं लोकाना मुपकारसाधनाय नालं भवति, तथैवायं संसारो महनीयकल्याणकरस्य श्रीमन्नारायण-चरणारविन्दस्य आश्रयं विना नोपयुज्यते शरीरिणां सुखादिसम्पादने, तस्य पालकत्वात्, तदाश्रयाभावेन एकान्ततः सत्ताया एव असम्भवापातात्। अपि च शतधृतिः ब्रह्मा संसारस्य स्रष्टा "शम्भुः शतधृतिः स्रष्टा" इति कोषात्। तस्य भवनम्, भवत्यस्मिन् अस्माद् वा इति व्युत्पत्त्या जन्मस्थानम् आश्रयभूमिर्वा, तदेव अम्भोरुट् कमलं नाभिसरोजमित्यर्थः। तस्य नालं नाभिकमलस्य तृतीयपादस्य च एकस्थानप्रकृततया तृतीयपादे नाभिकमलनालदण्डत्वारोपः समञ्जसः। अपि च क्षौणी पृथिवी सा एव नौः तरणी तस्याः कूपदण्डः गुणवृक्षकः "कूपको गुणवृक्षक" इत्यमरः। एतेन यथा नौकायाः कूपदण्डसद्भावेन प्रतिकूलवाय्वादिपराभवेऽपि नौका कर्णधारैः सुखं चालयितुं शक्यते, तथा सांसारिकाः तस्य भगवतः चरणसमाश्रयसद्भावे प्रबलविपक्षसमुद्वेगदशायामपि राजत्वादिकं चालयितुं शक्नुवन्तीति भावः। अपि च क्षरन्ती धाराकारेण प्रस्रवन्ती या अमरसरित् सुरतरङ्गिणी गङ्गा, सा एव पट्टिका वैजयन्तीवस्त्रं तस्याः केतुदण्डः, तथाहि यस्य चरणतलात् त्रिभुवनपावनी जाह्नवी प्रसुस्राव इति भावः। एतेन अस्यापि अतिपावनत्वम्, तेन च तत्समाश्रयणेन स्वीयकाव्यस्य दोषाशानां तत्प्रभावत एव परिशुद्धिसम्भावना व्यज्यते। अपि च ज्योतींषि ग्रहनक्षत्रादीनि, तान्येव चक्राणि रथाङ्गानि ज्योतिश्चक्राणि ग्रहादिसमूहा एव चक्राणि तेषाम् अक्षदण्डः नाभिक्षेपं काष्ठम्, यदालम्बनेन चक्रस्य विषमभावोपस्थानजन्यस्वाश्रितरथविपर्यासो न स्यात् तथाभूतः काष्ठदण्ड इत्यर्थः। एतेन ज्योतिश्चक्राणि यत् नियतदेशस्थानि चिरं विचरन्ति, न कदापि स्वस्थानात् भ्रष्टानि जगतां महोपकारञ्च साधयन्ति, तद तच्चरणानुग्रहशक्तिरेव विजयते,

तथाहि ममापि मतिं प्रकृतवर्णनीयविषयाणाम् अतिसूक्ष्मभावेष्वपि सः अचुषां परिचालयिष्यति, अतस्तत्स्मरणं मया प्रस्तुतमिति ग्रन्थकाराभिप्रायः। अपि च त्रिभुवनस्य त्रिलोक्याः स्वर्गमर्त्त्यपातालभेदेन लोकत्रयस्य इत्यर्थः। त्रिभुवनेत्यत्र समाहारद्विगुसद्भावेऽपि भुवनशब्दस्य पात्राद्यन्तर्गतत्वात् न नदादित्वम्, न च तत्प्रयुक्तः स्त्रियामीप्प्रत्ययः। विजयः पराभवः प्रकर्षवशादधिकार इत्यर्थः। तस्य स्तम्भदण्डः विजयविज्ञापकस्तम्भविशेषः। तथाहि वलियज्ञे नारायणो यत् वलिं सम्प्रार्थ्य त्रिभुवनमधिकृत्य तद्व्यापारे चरणं सृष्टवान् तस्य चिह्नभूतमेव तृतीयं नाभिकमलसमुत्थितं चरणमिति भावः। एतेन त्रिभुवनविजयसाधनाय प्रवर्त्तितस्य महाशक्तिसम्पन्नस्य नारायणचरणस्य प्रभावेण मया प्रस्तुतमिदं काव्यं सर्वानेव कवीन् विजित्य विजयस्तम्भरूपं मे भविष्यतीति गूढतात्पर्य्यम्। अपिच विबुधाः देवाः तान् द्विषन्ति इ पबुद्धा पश्यन्ति ये तेषां देवद्वेषिणाम् असुराणामित्यर्थः, कालदण्डः धर्मराजस्य सर्वान्तकरदण्डरूपप्रहरणविशेषः। एतेन ममेदं काव्यं न विबुधद्वेषं प्रथयिष्यन्ति, तथात्वे मृतादेव नारायणचरणात् भयापातसम्भवात्। अथच विबुधाः पण्डिताः तान द्विषन्ति ये तेषां, तथाहि ये मया प्रस्तुतं काव्यं प्रति गुणानां सत्त्वेऽपि अनास्थां करिष्यन्ति, तेषां विज्ञजनजुगुप्साकारिणाम् अविनयं नारायणचरणमेव निवर्त्तयिष्यतीति। त्रिविक्रमस्य नारायणस्य अयं त्रैविक्रमः, तस्येदमित्यण्, अत्र त्रिविक्रमशब्देन वामनावतारगतपादत्रयवत्त्वरूपवैशिष्ट्यस्य स्मरणात् नारायणस्य नाभिकमलोद्भूतः तृतीयपाद एव प्राधान्येन प्रस्तुतः। अङ्घ्रिदण्डः पादस्तम्भः वः युष्माकं एतद्ग्रन्थपाठार्थिनां साधारणानां श्रोत्रादीनां वा श्रेयः मङ्गलं निःश्रेयसलक्षणं सुकृतादिलक्षणं वा वितरतु ददातु। तथाच ये एतस्य ग्रन्थस्य आलोचनां करिष्यन्ति, तेषां परमिष्टमेव नारायणकृपाप्रभावेण सम्पत्स्यत इति एतद्ग्रन्थालोचनायाः इष्टसाधकत्वाशंसनात् प्रवृत्तिरनुकूलिता भवति। अत्र ब्रह्माण्डे ऊर्द्ध्वकटाहात्मके एव छत्रत्वस्यारोपौचित्यात् तद्दण्डत्वम् ऊर्द्ध्वप्रसारिचरणे आरोप्यं ब्रह्मभवनाम्भोरुहनालदण्डत्वं नाभिसमुत्थिते चरणे, क्षौणीनौकूपदण्डत्वम् अधोगते चरणे इत्येवम् अनुसन्धेयम्। अत• ब्रह्माण्डे छत्रत्वारोपस्य चरणे तद्धारणदण्डत्वारोपं प्रति

## कथारम्भः

अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी (ख), तत्र वीरभटपटलोत्तरङ्गतुरङ्ग- कुञ्जर - मकर- भीषण- सकल - रिपुगण- कटक- जलनिधि-

निमित्तत्वात्, चौर्य्यां नौत्वारोपस्य कूपदण्डत्वारोपं प्रति, अम्बरमणेरिति पट्टिकात्वारोपस्य च केतुदण्डत्वारोपं प्रति हेतुत्वात् अश्लिष्टशब्दनिबन्धनं परम्परितरूपकमेव, ज्योतिश्चक्रे शेषगम्यचक्रत्वारोपस्य चरणे अक्षदण्डत्वारोपं प्रति हेतुत्वात् श्लिष्टपरम्परितञ्च, अन्यत्र च निरङ्गं केवलरूपकमिति, तेषाञ्च मिथो निरपेक्षाणां संसृष्टिः। अत्र त्रितयत्वान्ते नैव वाक्यस्य परिसमाप्त्या, पुनर्विबुधद्वेषिणां कालदण्ड इति विशेषणमात्रेण वाक्यादानात् समाप्तपुनरात्ततादोषः, "श्रेयस्त्रिविक्रमो वो विबुधरिपुरिपुः सन्ततं सम्प्रदेया"दित्यादि दिशा कथञ्चित् समाधेयः। अत्र श्रेयोवितरणकर्तुरङ्घ्रिदण्डस्य विशेषणानां सर्वेषामेव साभिप्रायकतया बहुसाभिप्रायविशेषणकत्वरूपः परिकरालङ्कार इति निपुणाः। दण्डशब्दस्य असकृदुपादानेऽपि न अनवीकृतत्वं तत एव प्रकृते वैचित्र्यातिशयजननात्, वैचित्र्यत्रुटिकारणस्यैव दोषत्वौचित्यात्। एतेन प्रकृतकाव्यकारिणो दण्डिनः त्रिविक्रमचरणस्य सर्वशक्तिमत्त्वसूचनतः वैष्णवत्वमेव प्रतीयते इति केचिद्वदन्ति, वयन्तु "शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः" इत्यादिशास्त्रप्रमाणतो भगवतः शब्दस्वरूपतावगमेन, शब्दमयवस्तुनिर्माणे तत्स्मृतिमेव साधीयसीं मन्यामहे। अथवा सार्थकनाम्नो दण्डिनः मुक्तिपथप्रवृत्तेः काव्यमार्गेणापि मुक्तिलाभसम्भावनया तत्र प्रवृत्तस्य "मुक्तिमिच्छेज्जनार्दना"दिति प्रमाणपरिप्राप्त्या जनार्दनस्मरणमिति अनेनैव पद्येन आख्यायिकालक्षणोक्तस्य पद्यकरणकदेवनमस्कारस्य विबुधद्वेषिणामित्यादिना खलनिन्दादीनाञ्च निर्वाहः प्रतिपत्तव्यः। अतिशयेन प्रशस्यं श्रेयः, "प्रशस्यस्य श्र"

इति गणसूत्रेण प्रशस्यशब्दस्य श्रादेशः। वितरतु इत्यत्र आशंसायां लोट्। स्रग्धरावृत्तम्। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेय'मिति तल्लक्षणम्।

(ख) अस्तीति। समस्तानां यावतीनां नगरीणां पुरीणां निकषवत् कषपाषाणवत् आचरन्ती निकषायमाणा। सकलानामेव नगरीणाम् उत्कर्षापकर्षपरीक्षायां प्रमाणभूता इत्यर्थः। एतेन सकलनगरापेक्षया सर्वेष्वेव गुणेषु तस्याः परमोत्कर्षख्यातिर्व्यज्यते, निकषायमाणेत्यनेन गुणपरीक्षाविधौ प्रामाण्यरूपेण धर्मेण कषपाषाणेन सह साम्यादुपमा क्यङ्प्रत्ययगा। शश्वत् निरन्तरम् अगण्यैः गणनाऽयोग्यैः असंख्यैरित्यर्थः। पण्यैः विक्रेयभूतैः विस्तारितैः आपणादिषु विक्रयाद्यर्थम् अवतारितैः मणिगणादिवस्तुजातैः मणिप्रभृति-नानापदार्थैः व्याख्यातं विशेषेण आख्यातं विज्ञापितमित्यर्थः। कथनार्थस्य धातोर्ज्ञानानुकूल-व्यापारात्मकविज्ञापनार्थकतया तदर्थः, न तु वाचा कथनमेव व्याख्यानम्। रत्नाकरस्य रत्नालयस्य जलनिधेः माहात्म्यं महिमा यया तथाभूता। तथाहि यथा रत्नाकरं निकषा सैकताभूमौ तदुत्थानि रत्नानि तरङ्गसङ्घातैः प्रसारितानि भवन्ति, तथा अत्रापि आपणे वणिग्भिः विक्रयार्थं पण्यभूतानि रत्नादिमहार्घवस्तूनि, इति रत्नाकरसाम्यम्। एतेन नगर्या विपुलमैश्वर्य्यं व्यज्यते। अथवा व्याख्यातं विज्ञापितं रत्नाकरस्यैव माहात्म्यं यया इति तदर्थः। प्रथमकल्पे विज्ञापनस्य स्मरणात्मकतया सदृशवस्तुदर्शनाद् वस्तु-स्मृत्यात्मकस्मरणालङ्कारः। द्वितीयकल्पे तु उपमा लुप्ता। मगधदेशस्य शेखरीभूता शिरोभूषणस्वरूपा, तद्देशे सर्वश्रेष्ठा इत्यर्थः। अत्र नगर्या मगधदेशशेखरत्वारोपात् रूपकम्। पुष्पपुरी नाम तदभिधाना, तस्याः सौन्दर्य्यातिशयेन पुष्पवन्मनोहारितया पुष्पवत् विलास-साधनविधौ सुतराम् उपयोगितया वा इदं नाम इति केचिदामनन्ति, तत्तु नाति-युक्तिसहम्, यदृच्छाप्रवर्त्तितानां संज्ञानां बहुस्थलेष्वेव सार्थकताया अदर्शनात्। नगरी राजधानी, नगरलक्षणं यथा "यत्राष्टशतग्रामीयव्यवहारस्थानं मध्यवर्त्ति तन्नगरम्" इति।

সমস্ত নগরের মধ্যে শ্রেষ্ঠ, নিরন্তর অগণ্য বিক্রেয় মণিপ্রভৃতি শ্রেষ্ঠ দ্রব্য-সম্ভারে রত্নাকরের গৌরবযুক্ত, মগধদেশের অলঙ্কারস্বরূপ, পুষ্পপুরীনামক একটী নগরী আছে। সেই স্থানে রাজহংস নামে রাজা ছিলেন। তাঁহার

**मथन-मन्दरायमाण-समुद्दण्ड-भुजदण्डमण्डलः (ग), पुरन्दर-**

रघुनाथस्तु "देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः। नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनं" इति प्राह। व्युत्पत्तिस्तु नगा इव प्रासादादयः सन्ति यत्र तत् नगशब्दादस्त्यर्थे रप्रत्ययः, तेन राजधान्येव नगरीपदवाच्या। अयमर्थः—पुष्पपुरी नाम नगरी मगधदेश-मध्ये सकलनगरापेक्षया उत्कृष्टा, तत्र हि ये गुणपरीक्षाकरणक्षमा विद्वांसः सन्ति, श्रेष्ठा वणिक्प्रभृतयश्च नित्यमेव वाणिज्यं कुर्वन्ति, तेन च भूयो धनागमः सम्भवति इत्यादि। अत्र नगर्याः सुमहदैश्वर्यं वर्णितमिति उदात्तालङ्कारं व्याचक्षते।

(ग) तत्र तस्यां पुष्पपुरीनगर्यां "राजहंसो नाम भूपो बभूव" इति वक्ष्यमाणेनान्वयः। अथ तमेव राजानं विशेषणप्रयोगेण विशिनष्टि—वीरभटेत्यादिना। वीराः शौर्यसम्पन्नाः ये भटाः योधपुरुषाः तेषां पटलैः समूहैः, वीरमर्दैन सन्ततमेव तरङ्गतुलनया चाञ्चल्यमाश्रितैरित्यर्थः। उत्तरङ्गं वीरयोद्धृरूपतरङ्गजटिलमित्यर्थः। तुरङ्गाः योधवाह्या अश्वाः कुञ्जराः हस्तिनश्च तत् मकराः जलग्राहा इव तैः भीषणम् अतिभयजनकं साधारणानामिति शेषः। सकलानां समराणां रिपुगणानां शत्रुनिव-हानां तत् कटकं सैनासन्निवेशः तत् जलनिधिः समुद्र इव तस्य मथने विशृङ्खलतासम्पादने तस्य विक्षेपणविधौ इत्यर्थः। मन्दरः, सुरासुराणां समुद्रमथने मन्थानदण्डभूतः पर्वतभेदः, तद्वत् आचरत् तत्साम्यसम्पन्नम् इत्यर्थः। समुद्दण्डं समुत्क्षिप्तं भुजदण्डमण्डलं बाहुमण्डलं यस्य तथाभूतः, गदाप्रहरणस्य करवालसहायस्य च वैरिनाशरतस्य भुजः मण्डलाकारेण परिभ्रमति इति मण्डलशब्दप्रयोगः। मन्थानदण्डस्यापि मण्डली भवति। अत्र मन्दराय-माणेति क्यङ्प्रत्ययेन उपमार्थप्रस्तावात् सर्वत्रैव उपमा लुप्ता, न रूपकम्, तदङ्गतया एव तेषां तत्सादृश्यविन्यासौत्थानात्। एतेन प्रबलप्रभावतया तस्य रिपुकुले महान् पराक्रमः निर्भीकत्वम् उत्साहातिरेकश्च वीरगुणा व्यज्यन्ते। स प्रबलानपि रिपून् तदीयप्रबल-सैनासहायविघट्टनेन विहन्तीति भावः। वीरभटपटलैरुत्तरङ्गताप्रत्यायनात् वीराणां तरङ्गसाम्यं गम्यम्।

ভুজমণ্ডল বীর যোদ্ধৃবৃন্দে উত্তরল অশ্ব ও হস্তিরূপ মকর দ্বারা ভীতিজনক

पुराङ्गन - वन- - विहरणपरायण - तरुण - गणिकागण- गीयमानया, अतिमानया, शरदिन्दु -कुन्द-घनसार - नीहारहार-मृणाल-मराल-सुरगज - नीर - क्षीर - गिरीशाट्टहास - कैलास - काश -नीकाश-मूर्त्त्या रचितदिगन्तरालपूर्त्त्या कीर्त्त्या अभितः सुरभितः (घ), स्वर्लोक-

(घ) अथास्य लोकातिशायिनीं शुभां कीर्त्तिं प्रतिपादयति—पुरन्दरेत्यादिना सुरभित— इत्यन्तेन। पुरन्दरस्य स्वर्गनायकस्य इन्द्रस्य पुरम् अमरावतीनगरी तस्य अङ्गनम् अजिरस्थानम्, तत्र यत् वनं नन्दनकाननं तत्र विहरणपरायणाः विहाररताः ये तरुणगणिका-गणाः युवतयः स्वर्गाङ्गनाः ताभिः गीयमानया सङ्गीतकादिरूपेण पठ्यमानया, कीर्त्त्या इति वक्ष्यमाणपदार्थस्य विशेषणमिदम्, एतेन स्वर्गपर्य्यन्तं कीर्त्तिव्याप्तिरुक्ता। विहरणपराणां गणिकानां विलासमात्र एव आसक्तिस्वभावात् तत्रापि तत्कीर्त्तिप्रस्तावकथनात् सर्वेषामेव तत्कीर्त्तौ सर्ववस्त्वपेक्षया अधिका हृद्यता व्यक्ता सौन्दर्य्यादिप्रकर्षश्च विशेषेण। मानं परि-माणम् अतिक्रान्ता तया अपरिमितया। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति द्वितीया-तत्पुरुषः। अथवा अति महान् मानः सम्मानः यस्याः तथाभूतया असाधारणत्वेन सर्वैरेव अभ्यर्चितया इत्यर्थः। शरदिन्दुः शारदचन्द्रमाः, शरत्कालीनस्य एव इन्दोः मेघादितिरोधानविरहात् निर्मलतायाः सम्यगुपलब्धेरतिनिर्मलताप्रत्ययाय शरद्विशेषणम्। कुन्दं माघ्यं पुष्पम्, घनसारः कर्पूरः, घनः शारदः शुभ्रमेघः, सारः क्षीरस्य सारभाग इति वा, नीहारहारः नीहारश्रेणी, नीहारः तुषारः, हारः मुक्तामाला इति वा, मृणालः पद्मनालः, मरालः राजहंसः, सुरगजः ऐरावतः, नीरं जलम्, 'जलस्य वर्णः शुक्लः' इति दार्शनिक-निरुक्तिः। क्षीरं दुग्धम्, गिरीशस्य महादेवस्य अट्टहासः विकटं हास्यम्, अथवा गिरीशः महादेवः "ध्यायेन्नित्यं महेशं रजतगिरिनिभ" मित्यादिना तस्य श्वैत्यप्रसिद्धेः, स च अट्ट-हासश्च इति द्वन्द्वः। हासे धावल्यं कविप्रसिद्धम्। कैलासः तदाख्यः शैलः, काशं काशपुष्पं तानि, तेषां नीकाशा सदृशी तद्वत् सुधवला इत्यर्थः, मूर्त्तिः आकृतिः यस्याः तथाभूतया,

समস্ত রিপুগণের সেনাসন্নিবেশরূপ সমুদ্রমন্থনে মন্দরের ন্যায় আবর্ত্তনাদি

शिखरोरुरुचिर - रत्न - रत्नाकर- वेलामेखलावलयित-धरणी - रमणी-सौभाग्य-भोग-भाग्यवान् (ङ), अनवरत-याग-दक्षिणा-रक्षित-शिष्ट-

कलङ्कलेशेनापि परिशून्यया अतिनिर्म्मलया इत्यर्थः। रचिता सम्पादिता दिशां ककुभाम् अन्तरालानां च दिशां विदिशाञ्च इत्यर्थः, पूर्त्तिः पूरणं यया समाक्रान्तसमस्तदिग्भागया सर्वदिग्व्याप्तया इत्यर्थः। कीर्त्त्या शौर्य्यसौन्दर्य्यगाम्भीर्य्यादिप्रभवेण यशसा इत्यर्थः। अभितः समन्ततः सुरभितः प्रख्यातः। कीर्त्तेरपि शुभत्वं कविप्रसिद्धम्, तथाच "धवलता वर्ण्यते हासकीर्त्त्यो"रिति दर्पणे। सुरभित इति "सुगन्धे च मनोज्ञे च वाच्यवत् सुरभिः स्मृत" इति हेमवचनात् सुरभिः मनोज्ञः कृत इत्यर्थे वा, सुरभिशब्दात् करोत्यर्थे णन्तात् क्तप्रत्ययेन तत्पदसिद्धिः। "किञ्चिच्छ्रुते विहसितमट्टहासो महीयसि" इति हेमः।

(ङ) अथास्य सम्राट्त्वं व्यनक्ति—स्वर्लोकेत्यादिना। स्वर्लोकानां स्वर्गवासिनां देवानां शिखरेषु शिरोभागेषु स्थितानीति शेषः। उरूणि महार्घाणि रुचिराणि दृष्टिसुभगानि रत्नानि मणिजातानि यस्य तथाभूतः, बहुलमहार्घरत्नप्रसूतिरित्यर्थः। यः रत्नाकरः सागरः तस्य वेला तीरभूमिः सैव मेखला काञ्चीभूषणं तया वलयिता वलयाकारेण परिवेष्टिता धरणी वसुन्धरा एव रमणी कामिनी तस्याः सौभाग्यस्य ऐश्वर्य्यस्य सौन्दर्य्यस्य च भोगे उपभोगे भाग्यवान् भाग्यसम्पन्नः समग्रवसुन्धराधीश्वर इत्यर्थः। अत्र सागरवेलायां मेखलात्वारोपस्य धरण्यां रमणीत्वारोपं प्रति हेतुत्वात् परम्परित-रूपकम् अश्लिष्टशब्दनिबन्धनम्।

(च) अनवरतः अविरतप्रवृत्तः यागः देवानुद्दिश्य वस्तुदानात्मको दर्शपौर्ण-मासादियागभेदः, तत्र याः दक्षिणाः कर्म्मणः साङ्गतासम्पादनाय ऋत्विक्सातकर्त्तव्यं

করিত, তাহার শরচ্চন্দ্র কুন্দ-কুসুম কর্পূর প্রভৃতির ন্যায় নির্ম্মল শুভ্র সমস্ত দিগ্‌ব্যাপী কীর্ত্তিসমূহ অমরালয়ে নন্দনকাননে অপ্সরোবৃন্দ সানন্দে সঙ্গীতচ্ছন্দে গান করিত। বিবিধ গুণে তিনি চারিদিকে বিখ্যাত ছিলেন।

দেবভোগ্য রত্নসঙ্কুল রত্নাকররূপ মেখলায় বেষ্টিতা বসুধার সমগ্র

**विशिष्ट-विद्यासम्भार-भासुरभूसुरनिकरो (च), विरचितारातिसन्तापेन प्रतापेन सतत-तुलित-वियन्मध्यहंसो राजहंसो नाम घनदर्पकन्दर्प-सौन्दर्य्य-सोदर्य्य-हृद्य-निरवद्यरूपो भूपो बभूव (छ)**

धनादिकम्, ताभिः रक्षिताः परिपालिताः शिष्टाः सद्भावसम्पन्नाः विशिष्टानां परमार्थतत्त्वाद्याबेदिकानां विद्यानां ब्रह्मविज्ञानादीनां सम्भारेण समवधानेन भासुराः दीप्तिमन्तः सम्यक् प्रस्फुरितभास इत्यर्थः। भूसुरनिकराः भूदेवसमूहाः ब्राह्मणगणा येन तथाभूतः, एतेन राज्ञो नित्यं प्रधानयागकर्मकारितया वेदादिविश्वासः, ऋत्विक्प्रभृतीनां दक्षिणाद्यैः परिपालनाच्च देवद्विजेषु महती भक्तिर्व्यक्ता।

(छ) विरचितः उत्पादितः अरातीनां शत्रूणां सन्तापः पराजयः येन तथाभूतेन जनितसकलशत्रुपराभवेण प्रतापेन तेजोगर्वेण सततं निरन्तरं तुलितः सदृशीकृतः वियन्मध्यहंसः गगनतलसञ्चारी सूर्य्यः येन तथाभूतः, तेजसा सूर्य्यादपि अधिकतर इत्यर्थः। घनः अतिमहान् दर्पः गर्वः यस्य तथाभूतः सौन्दर्य्ये अतिप्रसिद्धतया अहङ्कारी यः कन्दर्पः कामदेवः तस्य यत् सौन्दर्य्यं लावण्यं तस्य सोदर्य्यं सुसदृशं परमरमणीयं निरवद्यम् अनिन्दनीयं रूपं सौन्दर्य्यं यस्य तथाभूतः, कामतुल्यलावण्य इत्यर्थः। राजहंसो नाम राजहंसाभिधानः भूपः पृथिवीपालः बभूव। एतेन राज्ञो महत् तेजस्वित्वं सौन्दर्य्यशालित्वञ्च व्यज्यते। तथाहि सर्वेष्वेव गुणेषु निरुपमो मगधदेशनायको राजहंसः पुष्पपुरीमधितिष्ठन् पृथिवीमासागरं शशास इति संक्षिप्तार्थः।

ঐশ্বর্য্য তাঁহারই অধীন ছিল, নিরন্তর যজ্ঞক্রিয়ায় তৎপ্রদত্ত দক্ষিণাযোগ্য ধনসমূহে পণ্ডিত তেজঃসম্পন্ন ব্রাহ্মণবৃন্দ প্রতিপালিত হইতেন। তিনি স্বীয়প্রতাপে সমস্ত অরাতিবৃন্দকে পরাভূত করিয়াছিলেন, তাঁহাকে গগনতলে প্রদীপ্ত সূর্য্যমণ্ডলের ন্যায় বোধ হইত এবং তিনি অনুপম-সৌন্দর্য্যের গর্ব্বদৃপ্ত কন্দর্পকেও পরাজয় করিয়াছিলেন। ( খ—ছ )

तस्य वसुमती नाम सुमतिर्लीलावतीकुलशेखरमणी रमणी बभूव (ज)। रोषरूक्षेण निटलाक्षेण भस्मीकृतचेतने मकरकेतने तदा भयेनानवद्या वनितेति मत्वा तस्या रोलम्बावली केश-जालं (झ), प्रेमाकरो रजनीकरो विजितारविन्दं वदनं (ञ), जय-

---

अत्र किञ्चित् किञ्चिदिव पुनरुक्तत्वं दृश्यते, तच्च ग्रन्थसौन्दर्य्यसाधनाय अलङ्कार-चातुर्य्यसमर्ज्जनाय च उपस्थितमिति सन्तोष्टव्यम्।

(ज) तस्य मगधाधिनायकस्य राजहंसस्य वसुमती नाम वसुमत्यभिधाना, शोभना मतिः बुद्धिः यस्याः तथाभूता निरवद्यबुद्धिः, लीलावतीनां विलासिनीनां रमणीनां कुलस्य समूहस्य शेखरमणिः शिरोभूषणमणिरूपा, लीलावतीति भिन्नं पदं वा, तत्पक्षे कुलशेखरमणिरित्यस्य कुलस्य स्वीयवंशस्य शेखरमणिः मस्तकाधानयोग्यरत्नसदृशी वंशानुक्रमेण प्रचलितानां नियमानाम् अनुष्ठाने सुकुशला सकलगुणसम्पदा वंशगौरवमापादयन्तीति वा अर्थः। रमणी महिषी बभूव। अत्र वसुमत्यां तादृशशेखरमणित्वा-रोपात् रूपकम्। रमणी रमणीति यमकम्, तस्य प्रकरणनियम्यत्वेन तथा।

(झ) अथास्या अङ्गादिशोभा क्रमेण निर्वक्ति—रोषेत्यादिना समभूवन्निव इत्यन्तेन। रोषेण स्वीयसमाधिभंशहेतुभूत-मनोविकारजननजन्यक्रोधेन रूक्षः भयङ्करः निष्ठुर इत्यर्थः। तेन, निटले ललाटदेशे अक्षि नेत्रं यस्य तथाभूतेन त्रिलोचनेन रुद्रेण इत्यर्थः। मकर-केतने मकरध्वजे कामे भस्मीकृता विलोपं नीता चेतना संज्ञा यस्य तस्मिन्, तदा तस्मिन् काले कामस्य देहदाहावसाने सतीत्यर्थः। भयेन स्वाश्रयीभूतकामदाहकादात्मनामपि दाह-शङ्कया अनवद्या अगर्ह्या वनिता रमणी इति मत्वा निश्चित्य, तथाहि इयं पुतरां रमणीया, तद्यदि इमामाश्रित्य वयं तिष्ठेम, तदा एतद्दर्शनेनैव एतदधीनतां गमिष्यन् रुद्रो नास्मान् दग्धुं क्षमिष्यते इति विभाव्येत्यर्थः। रोलम्बावली भ्रमरश्रेणी कामप्रहरणाङ्गीभूत-धनुर्ज्यास्वरूपा इत्यर्थः। तस्या अतुलनीयलावण्यायाः वसुमत्याः केशजालं कुन्तलपाशः एतेन तस्याः केशपाशः भ्रमरवत् सुकृष्णः, दृष्टिमात्रेण मदनसमुद्दीपकश्च इति भावो व्यक्तः।

ध्वजायमानो मीनो जायायुतोऽक्षियुगलं (ट), सकलसैनिकाङ्गवीरो मलयसमीरो निश्वासः (ठ), पथिकहृद्दलनकरवालः प्रवालःस्याधरबिम्बं (ड), विजयशङ्खो बन्धुरा लावण्यधरा कन्धरा (ढ),

(ञ) प्रेम्णः प्रियतायाः आकरः उत्पत्तिनिधानं रजनीकरः निशाकरः, विजितं पराभूतम् अरविन्दं कमलं येन तथाभूतं कमलादपि उत्कृष्टं वदनं मुखम्। तथाच प्रेमाकर इति रजनीकरविशेषणेन तत्स्वारूप्यस्य च मुखे वर्णनात् मुखदर्शनमात्रेणैव अत्र जायते भूयान् प्रेमा इति भावो व्यज्यते। रजनीकरपदेन चन्द्रबोधनात् तस्या मुखस्य नक्तन्दिवमेव समा शोभेति अरविन्दविजये। हेतुरपि समुद्भावितः। वदनस्य शोभासम्पदादिभिः कमलविजयित्ववर्णनं चन्द्रस्वारूप्यमनुकूलयति, तथाहि चन्द्रोऽपि निशायां समुद्गतः कमलानि निमीलयति इदमपि लज्जाप्रदानेन तथेति भावः।

(ट) अक्षिशोभां वर्णयति—जयेत्यादिना। जयध्वजः विजयचिह्नभूता पताका तद्वत् आचरन् कामस्य विजयध्वजकल्पः मीनः, कामस्य मी... जायया स्वीयकान्तया युतः मिलितः, अक्षियुगलं द्वे चक्षुषी, तथाहि कामस्य ध्वजभूतः मीनः यां भार्य्यात्वेन जग्राह, तस्या अपि तत्सदृशप्रेमादिसद्भावस्यौचित्यात् वसुमत्याः नेत्रद्वयमेव शफरतुल्यं प्रेमसमुद्भावकञ्च इति व्यज्यते।

(ठ) निश्वासप्रकर्षं वर्णयति—सकलेत्यादिना। सकलेषु सर्व्वविधेषु सैनिकाङ्गेषु सेनाङ्गनिवहेषु आत्मनः कोकिलादिषु परविजयप्रसाधनेषु बलेषु मध्ये वीरं सर्व्वश्रेष्ठं बलं सातिशयपराक्रमः सफलशौर्य्यश्च इत्यर्थः। मलयसमीरः मलयानिलः निश्वासः, एतेन तन्निश्वासस्पर्शोऽपि कामोद्दीपक इति भावः। पद्मिनीस्वभावात् निश्वासे सौगन्ध्यं, तच्च मलयजगन्धसम्पृक्तमलयानिलस्वारूप्येण उत्प्रेक्षितम्।

(ड) अधरशोभां वर्णयति। पथिकानां विरहतप्तानां हृदः अन्तःकरणस्य दलने स्फोटने, दर्शनगोचरतां प्राप्य सुतरां कामज्वालासमुद्दीपकतया करवालः खड्गरूपः।

বসুমতী নামে তাঁহার এক মহিষী ছিলেন, তিনি বিলাসিনী

पूर्णकुम्भौ चक्रवाकाऽनुकारौ पयोधरौ (ण), ज्यायमाने मार्द्दवासमाने विसलते च बाहू (त), ईषदुत्फुल्ललीलावतंसकह्लार-

प्रवाल: नवपल्लव', अधरबिम्बम्। तस्यापि कामोद्दीपकतया तत्प्रहरणसाम्यमभ्युपेयम्। एतेन विरहिजना: तस्या: अधरबिम्बमालोक्य उद्दीप्तेन कामेन अभिभूयन्ते इति भाव:।

(ढ) ग्रीवाशोभामाह। विजयशङ्ख: कामस्य इति शेष:। विजयप्रयाणकाले वादनीय: शङ्ख इत्यर्थ:। बन्धुरा उन्नतावनता तरङ्गिता इत्यर्थ:। लावण्यधरा सौन्दर्य्यभाजनभूता कन्धरा ग्रीवा, तथाहि शङ्खे यथा सुस्पष्टौ रेखावयौ वर्त्तेते रेखाद्वयमन्तरा च उच्छूनता, तथैव अस्या: ग्रीवा रेखात्रयाङ्किता अन्तरा उच्छूनमांसा च इति गम्यते। एतस्या: कन्धरामवलोकयता तत्स्वरं श्रुतवताञ्च हृदयात् कामविरोधिभावा विलयं गच्छन्ति, कामाधिपत्यञ्च तत्र व्यवतिष्ठते, यथा तस्य विजययात्राकाले विजयशङ्खशब्दश्रवणेन अपरेषां प्रतिपक्षाणाम्।

(ण) स्तनशोभामाह, पूर्णकुम्भौ कामस्य विजययात्राकाले व्यवहरणीयौ पूर्णकलसौ चक्रवाकानुकारौ चक्रवाकौ अनुकुरुत: यौ तथाभूतौ पयोधरौ स्तनौ, अत्र पयोधरपदेन स्तनोपन्यासात् पयोधरपदवाच्यो मेघो यथा सन्तप्तस्य वारिप्रदानेन तापं नाशयति तथैव स्पर्शादिना कामतप्तानां तापहरणयोग्यत्वं प्रतीयते, पूर्णकुम्भस्य जलपूर्णगर्भतया पयोभाजनीभूतस्तनरूपत्वमेव युज्यत इत्यपि।

(त) बाहुशोभामाह। ज्यायमाने कामस्य धनुर्ज्यावत् आचरन्ती मार्द्दवेन कोमलतागुणेन असमाने अतुल्यने सर्वत: समुत्कर्षेण कोमले इत्यर्थ:। विसलते मृणालवल्ल्यौ बाहू भुजौ। यथा ज्यासाहाय्येन काम: यस्य उपरि बाणान् क्षिपति, स एव मुह्यति, तथैव इयं यदि बाहुभ्यां पुष्पं सञ्चित्य कस्यचिदुपरि क्षिपति, स इव काममुग्धो भवतीति भाव:। अत्र एतत् स्मर्य्यं यत् प्रथमत एव रोलम्बावल्या: कामज्यात्वकथनम् अत्र च मृणाललतायां पुनस्तत्सादृश्यमिति कथञ्चित् समाधेयम्।

রমণীগণের মস্তকমণিস্বরূপ অতি-সমাদরের পাত্র। যখন রুদ্রদেব ক্রোধোদ্দীপ্ত তৃতীয়নেত্রে কামদেবকে দগ্ধ করিলেন, তখন রাণী

**कोरको गङ्गावर्त्त-सनाभिर्नाभिः (थ), दूरीकृतयोगिमनोरथो जैत्ररथोऽतिघनं जघनं (द), जयस्तम्भभूते सौन्दर्य्य भूते विघ्नित-यति-जनारम्भे रम्भे चोरुयुगम् (ध), आतपत्रसहस्रपत्रं पादद्वयम् (न),**

(थ) नाभिशोभामाह। ईषत् फुल्लम् ईषत विकसितं यत् लीलावतंसकह्लारं कर्णाभरणभूतं कह्लारं तस्य कोरकः गङ्गायाः भागीरथ्याः आवर्त्तः घूर्णमानो जलप्रवाहः तस्य सनाभिः, समानः नाभिः। तथाहि तस्याः नाभिः सुगभीरः कामसमुद्दीपकश्चेति भावः।

(द) जघनशोभामाह। दूरीकृतः अपनोदितः योगिना तपस्विना मनोरथः अभिलाषः ब्रह्मलाभादिवासना येन तथाभूतः, सकलानामेव मनसः समुन्मादजनक इत्यर्थः। जैत्रः विजयसाधकः रथः स्यन्दनम्, चैत्ररथः इति पाठे तदाख्यं कुवेरस्य उद्यानम् इति, अतिघनं सुसंश्लिष्टं निरन्तरम् इत्यर्थः। जघनं कटीपुरोभागः।

(ध) ऊरुशोभामाह। जयस्तम्भभूते जयस्तम्भस्वरूपे कामस्येति शेषः। सौन्दर्य्यम् अतिरमणीयत्वं भूते प्राप्ते "भू प्राप्तावात्मनेपदी" इति वचनात् भुवः प्राप्त्यर्थत्वं रूपम्। मूर्त्तिमत्सौन्दर्य्यरूपे वा। विघ्नितः सविघ्नः कृतः जनितप्रतिबन्ध इत्यर्थः। यतिजनानां सन्न्यासिनाम् आरम्भः प्रयत्नः क्रियाकलाप इति यावत् यया तथाभूते, निगृहीतसर्वेन्द्रियाणां यतिजनानामपि हृदयविकारसमुत्पादके इत्यर्थः। रम्भे कदलीयुग्मं ऊरुयुगम्।

(न) पादशोभामाह। आतपत्रं कामस्य छत्रस्वरूपं यत् सहस्रपत्रं सहस्र-दलपद्मं तत् पादद्वयं तस्याः चरणयुगलम्, तथाहि अतिसुन्दरः कामः यदेव सहस्र-दलं पद्मम् आतपत्ररूपेण शिरसि दधाति स्म, तदेव अस्याः चरणरूपेण परिणतमिति महान् प्रकर्षो नायिकाया इति भावः। तस्याः पादद्वयं सहस्रपत्रपद्मवत् सुन्दरमिति तात्पर्य्यम्।

---

বসুমতীকে সকল রমণীকুলের শ্রেষ্ঠ রত্ন মনে করিয়া কামদেবের বস্তু-সম্ভারের অন্তর্গত ভ্রমরশ্রেণী বসুমতীর কেশপাশ, প্রেমভাজন চন্দ্র মুখ-পদ্ম, জয়ধ্বজ মীন স্বীয়কান্তাসমভিব্যাহারে নেত্রযুগল, কামের সেনাগণের

अस्त्रभूतानि प्रसूनानि तानीतराण्यङ्गानि समभूवन्निव (प)। विजितामरपुरे पुष्पपुरे निवसता सा वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि (फ)। तस्य राज्ञः परमविधेया धर्मपाल-पद्मोद्भव-सितवर्मनामधेया धीरधिषणावधीरित-विबुधाचार्य्य-विचार्य्य-कार्य्य-साहित्याः कुलामात्यास्त्रयोऽभूवन्। तेषां

(प) अपरेषामङ्गानामपि शोभावत्त्वमाह। अस्त्रभूतानि कामस्य प्रहरणभूतानि प्रसूनानि कुसुमानि तानि प्रसिद्धानि इतराणि तेभ्यः अपराणि अन्यानि अवयवाः समभूवन् जातानि। अस्या एव क्रियायाः सर्वत्र वचनव्यत्ययेन अन्वयः कर्त्तव्यः। सर्वमानेन तस्याः वसुमत्याः सर्वाङ्गप्रशस्तिः व्यक्ता।

(फ) विजितं पराभूतम् अमराणां देवानां पुरं येन तथाभूते स्वर्गापेक्षया अतिरमणीये पुष्पपुरे तदाख्ये मगधदेशान्तःपातिनि राजाधिष्ठाने नगरे राजधान्यामित्यर्थः। निवसता वासं रचयता मगधराजेन राजहंसेन, सा पूर्वोक्ता सुप्रसिद्धा वा वसुमती तदभिधाना महिषी वसुमती वसुन्धरा स्वेनाधिकृता इत्यर्थः। इव यथासुखं सुखमनतिक्रम्य अन्वभावि भुक्ता। वसुमतीशब्देन पृथिव्या उपादानम् पृथिवीसमुत्थधनरत्नादीनामिव भोगसाधनतया इति मन्तव्यम्। अत्र उपमा अलङ्कारः।

---

অগ্রগণ্য মলয়ানিল নিশ্বাস, বিরহীর বেদনাপ্রদ প্রবাল অধরবিম্ব, বিজয়-শঙ্খ বন্ধুর ও সুন্দর গ্রীবা, পূর্ণকুম্ভ চক্রবাকসদৃশ স্তনদ্বয়, ধনুগুর্ণস্থানীয় অতিকোমল মৃণাললতাদ্বয় বাহুযুগল, অনতিপরিস্ফুট কহ্লারকোরক গঙ্গার আবর্ত্তসদৃশ নাভি, যোগিগণের চিত্তোন্মাদক জৈত্ররথ অতিঘন জঘন, যতিজনের কর্ম্মবিঘ্নকারী জয়স্তম্ভায়মান সৌন্দর্য্যের একমাত্র আশ্রয়ীভূত রম্ভাযুগল উরুদ্বয়, আতপত্র স্থানীয় সহস্রদলপদ্ম পাদযুগল এবং তাহার অস্ত্ররূপ অপরাপর পুষ্পসমূহ অপরাপর অঙ্গরূপে পরিণত হইয়াছিল। (ঝ—প)

सितवर्म्मणः सुमति-सत्यवर्माणौ, धर्मपालस्य सुमन्त्र-सुमित्र-कामपालाः ; पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति तनयाः समभूवन् (ब)। तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी देशान्तरमगमत् (भ)। विट-नट-

(ब) तस्य राज्ञः राजहंसस्य परमम् अतिशयेन विधेयाः आज्ञानुवर्त्तिनः धर्म्मपालेत्यादीनि त्रीणि अमात्यानां नामानि, तन्नामधेयाः। धीरा धैर्य्यवती विमृष्य-कारिणीत्यर्थः या धिषणा मतिः तया अवधीरितम् अवज्ञातम् अतिक्षुद्रतया मतम् इति यावत्, विबुधानां देवानाम् आचार्य्यस्य गुरोः बृहस्पतेरपि विचार्य्य निपुणभावेन आलोच्य कार्य्यसाहित्यं कर्मसमूहः यैः तथाभूताः, बृहस्पतेरपि अतिशयितसूक्ष्मबुद्धय इत्यर्थः। त्रयः कुलामात्याः कुलक्रमेण आगताः सचिवाः अभूवन्। एतेन मन्त्रणादोषादपि तस्य राज्यस्य क्षतिसम्भावना निरस्ता, अपि च वसुमत्याः भोगं प्रति स्वाच्छन्द्यमपि अव्याहतं प्रतिभाति, राज्यचिन्तायाः सचिवैः करणेनैव निर्वाहादिति भावः। अथ तेषाम् अमात्यानां पुत्रानाह,—तेषाम् अमात्यानां मध्ये सितवर्म्मणः तदाख्यसचिवस्य सुमतिः सत्यवर्मा च इति द्वौ धर्मपालस्य क्रमात्तनयाः त्रयः पद्मोद्भवस्य द्वौ इति उक्तरूपाः तनयाः समभूवन् जाताः।

(भ) धर्मे सुकृतकर्मणि शीलं स्वभावः यस्य सः धर्मप्रवण इत्यर्थः। संसारस्य स्वादृष्टोपनिबद्धशरीरपरिग्रहात्मकस्य जगतः असारतां विनश्वरतां अव-

---

স্বর্গাপেক্ষা উৎকৃষ্ট পুষ্পপুর নগরে মগধরাজ রাজহংস সাম্রাজ্য বিস্তার করিয়া বসুন্ধরার ন্যায় বসুমতীর (মহিষীর) স্বচ্ছন্দ উপভোগ করিতে লাগিলেন। (ফ)

সেই রাজার পরম অনুগত কুলক্রমে আগত ধর্ম্মপাল পদ্মোদ্ভব ও সিত বর্ম্মা নামে তিন মন্ত্রী ছিলেন, তাঁহারা বৃহস্পতিও সহসা যে কার্য্যে প্রবৃত্ত হইতে সঙ্কুচিত হয়েন, সে কার্য্যেরও অনায়াসে মীমাংসা করিয়া ফেলিতেন।

वारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम (म)। रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत्। इतरे मन्त्रिसूनवः पुरन्दरपुरातिथिषु पितृषु यथापूर्वमन्वतिष्ठन् (य)। ततः कदाचिन्नानाविध-

भङ्गुरतामित्यर्थः। बुद्ध्वा निश्चित्य, तीर्थयात्रायां तीर्थभ्रमणार्थं प्रस्थाने अभिलाषी आसक्तिमान् देशान्तरं स्वदेशाद् बहिरन्यं देशम्।

(म) कामपालस्य वार्त्तामाह। विटः धूर्त्तः रसादिलम्पटश्च नटः नाट्यादिकलाचतुरः वारनारी वेश्या ता एव परम् उत्तमम् अयनम् आश्रयः यस्य तथाभूतः केवलेषु व्यसनेष्वेव रतिमान् दुर्विनीतः दुर्विनयः। जनकः पिता, अग्रजन्मा अग्रजश्च तयोः, पितुः ज्येष्ठभ्रातुश्च इत्यर्थः। शासनम् आज्ञाम् अतिक्रम्य उल्लङ्घ्य भुवं पृथ्वीं बभ्राम। तथाहि सः अतिमात्रं दुर्विनीतभावमेवावलम्ब्य विजहार इति भावः।

(य) वाणिज्ये वणिग्व्यवसाये निपुणतया कौशलेन पारावारस्य समुद्रस्य तरणम् अतिक्रमम् अकरोत् समुद्रपोतादिना इति शेषः। तथाहि रत्नोद्भवः वाणिज्यविषये समुद्रपोतसहायः समुद्रमुत्ततार इति भावः। इतरे उक्तेभ्यः अपरे मन्त्रिसूनवः मन्त्रिपुत्राः सुमतिप्रभृतयः, पितृषु स्वीयजनकेषु पुरन्दरस्य पुरम् इन्द्रपुरं स्वर्गः, तदतिथिषु तत्र गतेषु इत्यर्थः। यथापूर्वं पूर्ववत् पितृपदमधिकुर्वाणा इत्यर्थः। अन्वतिष्ठन् वासं चक्रुः।

---

তাঁহার মধ্যে সিতবর্ম্মার সুমতি ও সত্যবর্ম্মা নামে দুই পুত্র, ধর্ম্মপালের সুমন্ত্র, সুমিত্র ও কামপাল নামে তিনপুত্র, পদ্মোদ্ভবের সুশ্রুত ও রত্নোদ্ভব নামে দুই পুত্র হয়।

তন্মধ্যে ধর্ম্মশীল সত্যবর্ম্মা সংসারের অসারতা হৃদয়ঙ্গম করিয়া তীর্থপর্য্যটনমানসে দেশান্তরে গমন করিলেন।

বিট নট বারনারী প্রভৃতির অনুগত দুর্ব্বিনীত কামপাল পিতা ও

महायुध - नैपुण्य - रचितागण्य-जन्य-राजन्य-मौलिपालि-निहित—निशित-सायकौ मगधनायकौ मालवेश्वरं प्रत्यग्रसंग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति सहेलं न्यक्कृत-जलधिनिर्घोषा-हङ्कारेण भेरीभाङ्कारेण हठिकाकर्णनाक्रान्त-भय-चण्डिमानं दिग्दन्तावल-वलयं विघूर्णयन् निजभर-नमन्मेदिनीभरेण आयस्तभुजगराज-मस्तकबलेन चतुरङ्गबलेन संयुतः संग्रामाभि-लाषिणा रोषेण महताविष्टौ निर्ययौ (र)। मालवनाथोऽपि अनेकानि-

(र) नानाविधानाम् अनेकप्रकाराणां महतां सुप्रशस्तानाम् आयुधानाम् अस्त्राणां नैपुण्येन कौशलेन रचितेषु सम्पादितेषु अगण्येषु विपुलविपुलेषु जन्येषु संग्रामेषु राजन्यानां क्षत्रियभूपतीनां मौलिपालिषु मुकुटप्रान्तभागेषु निहिताः संस्थापिताः निशिताः शाणकर्म्मणा समुज्ज्वलीकृताः सायकाः बाणनिवहाः येन तथाविधः, मगधानां नायकः अधीश्वरः। "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्" इति मेदिनी। "पालिः कर्णलतायां स्यात् प्रदेशे पङ्क्तिचिह्नयोः" इत्यजयः। मालवेश्वरं मालव-देशाधिपतिं प्रत्यग्रं अभिनवं संग्रामे समरे घस्मरं विपक्षसैन्यसंक्षयसाधकं जयोद्दीप्त-मित्यर्थः। समुत्कटः अतिमहान् मानस्य सम्मानस्य सारः स्थिरांशः यस्य तथाभूतम्। अथवा समुत्कटः मानः सम्मानः सारः बलञ्च यस्य तथाभूतं, मानसारं तदाख्यं राजानं प्रति उद्दिश्य सहेलं सावज्ञं न्यक्कृतः तिरस्कृतः जलनिधेः समुद्रस्य निर्घोषाहङ्कारः घनध्वानगर्व्वः येन तथाभूतेन, जलनिधिमपेक्ष्य अपि गभीरतरघोषेण इत्यर्थः। भेर्य्याः स्वनामख्यातवाद्यविशेषस्य भाङ्कारेण भाम् इत्यव्यक्तशब्देन हठिकेन

অগ্রজের আদেশ না মানিয়া পৃথিবী ভ্রমণ করিতে লাগিলেন। রত্নোদ্ভবও বাণিজ্যে অত্যন্ত নিপুণ বলিয়া (বাণিজ্যার্থে) সমুদ্রযাত্রা করিলেন। অপর মন্ত্রিপুত্রগণ স্ব স্ব পিতা স্বর্গে প্রস্থান করিলে পিতৃবৎ মন্ত্রিকার্য্য করিতে লাগিলেন। ( ব—২ )

कपयूथ-सनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम (ल)। तयोरथ रथतुरङ्गखुर-क्षुण्ण-क्षोणीसमुद्भूते करि-

अकस्मादुपगतेन आकर्णनेन श्रवणेन तस्य भाङ्कारस्य एव इति शेषः। आक्रान्तः समारूढः भयचण्डिमा भीतिसाहस्यं येन तथाभूतम् आकस्मिकवीरभेरीशब्दश्रवण-भीतम् इत्यर्थः। दिक्षु ये दन्तावला हस्तिनः, तेषां वलये समूहे विघूर्णयन् विपर्यासयन् भयविकम्पनेन समुच्चालयन् इत्यर्थः। निजभरेण स्वीयविष्टम्भेन नमन् अवनतिं गच्छन् मेदिनीभरः वसुन्धराभागसमूहः यस्य तथाभूतेन आयस्ता प्राप्तायास भुजगराजस्य अनन्तस्य मस्तकबलं शिरःशक्तिः यस्मात् तथाभूतेन स्वीयबलदर्पात् कम्पितभुजग राजशक्तिना इत्यर्थः। चतुरङ्गबलेन सयुतः विशिष्टः। हस्त्यश्वरथपादातरूप-चतुरङ्गसेनासमभिव्याहृत इत्यर्थः। महता समुद्दीप्तेन रोषेण क्रोधेन आविष्टः अभिभूतः संग्रामाभिलाषेण समरकामनया निर्ययौ पुरात् निर्गतः बभूव। सर्वविधान्युपकरणानि समादाय मानसारं प्रति विजयप्रयाणं चकार इति भावः। अत्र दिग्दन्तावलादीनां सञ्चालनाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। राजन्य-मौलीत्यादिना सकलराजन्यापेक्षया राजहंसस्य आधिक्यकथनाद्व्यतिरेकः। न्यक्कृतेत्यादा-वपि व्यतिरेक एव।

(ल) मालवनाथः मालवेश्वरः मानसारः अपि। अपिकृतस्य राजहंसस्य समुच्चायकः। अनेकेषां बहूनाम् अनेकपानां द्विपानां हस्तिनामित्यर्थः। यूथैः सनाथः युक्तः। सविग्रहः शरीरी विग्रहः संग्राम इव। साग्रहः अतिमात्रेण आग्रहेण उद्दीपितः अभिमुखीभूय सम्मुखगामितामिव स्वीकृत्य भूयो निर्जगाम पुरात्

অনন্তর একদা যুদ্ধবিদ্যাবিশারদ রাজন্যগণের পরাজয়কারী মগধেশ্বর রাজহংস উৎকট অভিমানে দৃপ্ত নবসংগ্রামে উদ্দাম মালবদেশাধিপতি মানসারের উদ্দেশে অতিক্রোধসহকারে যুদ্ধাকাঙ্ক্ষায় যাত্রা করিলেন, বিজয়প্রয়াণের গভীর ভেরীনিনাদ দিগ্‌গজসমূহকে সহসা ভীত করিয়া

घटा-कट स्रवन्मदधारा-धौतमूले नववल्लभ-वरणागतदिव्य-कन्यकाजन-जवनिकापटमण्डल इव वियत्तलव्याकुले धूलीपटले दिविषदध्वनि धिक्कृतान्यध्वनि-पटहध्वानवधिरिताशेष-दिगन्त-रालं शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि (व)।

बहिरभवत्। एतेन मालवेश्वरस्यापि बलाधिक्यं निर्भीकता च व्यज्यते। तथाहि राजहंसः मानसारश्च इति उभावेव परस्परं प्रति योद्धुकामौ प्रतिष्ठेतामिति भावः। अत्र मालवनाथे असम्भवतः सविग्रहविग्रहत्वस्य सम्भावनात् तस्य इवशब्देन व्यञ्जनाच्च वाच्या स्वरूपोत्प्रेक्षा।

(व) अथ अनन्तरं पक्षद्वयस्य एव विजययात्राप्रवर्त्तने इत्यर्थः। तयोः राजहंस-मानसारयोः रथानां तुरङ्गाः अश्वाः तेषां खुरैः क्षुण्णा प्राप्तघाता या क्षौणी पृथिवी तस्याः समुद्भूते समुत्थिते करिघटानां हस्तिसमूहानां कटेभ्यः गण्डस्थलेभ्यः स्रवन्ती प्राप्तप्रवाहा या मदधारा मदवारिसमूहः तया धौतं प्रक्षालितं मूलं निम्नभागः यस्य तथाभूते, नवः नूतनः यः वल्लभः पतिः तस्य वरणाय अभ्यर्थनाय आगतानां समुपस्थितानां दिव्यकन्यकाजनानां स्वर्गीयकुमारीलोकानां जवनिकापटमण्डले प्रच्छादनवस्त्रभूते इव वियत्तलं आकाशतलं व्याकुले विशृङ्खलमिव सुप्रसृते धूलीपटले भूरजःसमूहे दिविषदां देवानाम् अध्वनि पथि आकाशमार्गे धिक्कृताः पराभूताः

তুলিল। রাজার সমভিব্যাহারে প্রস্থিত চতুরঙ্গ বাহিনীর গর্ব্বক্ষিপ্ত পাদভরে অনন্তদেবের মস্তক অতি কষ্টে ধরণীর ভার সহ্য করিল। মালবেশ্বরও বহু হস্তিযূথে পরিবৃত হইয়া সাগ্রহে মূর্ত্তিমান্ বিগ্রহের ন্যায় তাহারই অভিমুখী হইয়া যুদ্ধযাত্রা করিলেন। (র—ল)

পরে তাহাদের রথবাহক অশ্বের খুরাঘাতে ক্ষুণ্ণ ভূমি হইতে ধূলিপটল আকাশমার্গ আচ্ছন্ন করিল, উক্ত ধূলিপটলের তলদেশ গজঘটার কট-প্রস্রুত মদজলে সিক্ত হইয়াছিল এবং মনে হইতেছিল যেন নব স্বামীর

**तत्र मगधराजः प्रक्षीण-सकलसैन्यमण्डलं मालवराजं जीवग्राह-मभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास (श)। ततः स रत्नाकर-मेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तरमर्च्चयामास ( ष )।**

अन्तरिता इत्यर्थः, अन्ये ध्वनयः शब्दाः यैः तथाभूता ये पटहध्वाना ढक्काध्वनयः तैः बधिरितानि बाधिर्य्यं प्रापितानि अशेषाणि दिगन्तरालानि समस्तानां दिशां मध्यभागा येन तथाभूत शस्त्रेण शस्त्रेण प्रहृत्य वृत्तं हस्तेन हस्तेन प्रहृत्य वृत्तं तद्यथा स्यात् तथा परस्परम् अन्योन्यम् अभिहत सैन्यं यत्र तथाभूत जन्यं युद्धम् अजनि जातम्। उभयोः पक्षयोस्तुमुलं युद्ध प्रावर्त्तत इति भावः। अत्र धूलीपटले तादृशजवनिकापट-मण्डलत्वसम्भावनाया इवशब्देन व्यञ्जनात् उत्प्रेक्षा। धिक्कृतेत्यादिना अन्यध्वन्य-पेक्षया व्यतिरेकप्रत्ययात् व्यतिरेकः, अशेषदिशां बाधिर्य्यासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः।

( श ) तत्र जन्ये मगधराजः राजहंसः प्रक्षीणं क्षयं प्राप्तं सकलं समस्तं सैन्यमण्डलं सेनासमूहः यस्य तथाभूतं सैन्यानां सर्व्वेषामेव विनाशेन बलहीनमित्यर्थः। मालवराजं मानसारं जीवं गृहीत्वा जीवग्राहम् अभिगृह्य "कषादिषु तैरेवानुप्रयोगः" इति अनुप्रयोगोऽपि ग्रहेरेव, तथा च सजीवमेव तं समास्कन्द्य इत्यर्थः। कृपालुतया तं प्रति दयापरवशतया पुनरपि यथापूर्व्वम् इत्यर्थः। स्वराज्ये तस्यैव मालवराजस्य स्वीयाधिपत्ये प्रतिष्ठापयामास प्रतिष्ठितमकरोत्, तस्य राज्यं तस्मै एव पुनरुपजहार। एतेनास्य सुमहदौदार्य्यं राजहंसस्य सूच्यते, इत्थं प्राप्तस्य राज्यस्य साधारणेन परिहातुमशक्यत्वात्।

( ष ) ततः मानसारस्य स्वराज्ये प्रतिष्ठापनस्य विजयप्रयोजनस्य उत्पत्त्यनन्तर-

বরণক্রিয়ার জন্য দিবা কন্যকাগণ জবনিকাপটমণ্ডল বিস্তীর্ণ করিয়াছে, সেই ধূলিপটলের অন্তরালে উভয় পক্ষের শস্ত্রে শস্ত্রে হস্তে হস্তে ঘোরতর

अथ कदाचित् तदग्रमहिषी 'देवि! देवेन कल्पवल्लीफल-
माप्नुहि' इति प्रभातसमये सुस्वप्नमवलोकितवती (स)।

मित्यर्थः। रत्नाकरः समुद्रः एव मेखला काञ्ची यस्याः तथाभूताम्, अत्र रत्नाकरशब्देन समुद्रबोधने मेखलायाः रत्नादिमयत्वात् रत्नाकरत्वस्यैव कथञ्चित् तत्स्वारूप्ये उपयोगात्। अनन्यशासनाम् एकातपत्राम् इला धरित्री "गोर्भूर्वाचस्त्विडा इला" इत्यमरः। शासत् परिपालयन्, दुष्टानां दमनेन शिष्टानां पालनेन च इति भावः। शासिजक्षादिभ्य इति शासदिति रूपम्। अनपत्यतया सन्तानराहित्येन हेतुना सकलानां लोकानां भुवनानाम् एकं प्रधानतमं सर्वोपरि वर्त्तमानमित्यर्थः। कारणं जनकस्वरूपं सकलोत्पत्तिनिदानमित्यर्थः। नारायणं नित्यमिदं भगवन्तं केशवमित्यर्थः। निरन्तरं नक्तन्दिवम् अर्च्चयामास आराधयामास। तथाहि यतः सः सकलानां भुवनानां निर्म्माता अतएव राजहंसस्य पुत्रनिर्म्माणेऽपि स एव प्रभुरिति कृत्वा तस्यैव अर्च्चनायां सर्व्वकर्म्मपरित्यागेन रतो जात इति भावः। सर्व्वसुखानामभिगमे केवलमनपत्यता-जन्यं दुःखं तस्य आसीत् इति तात्पर्य्यम्। अत्र रत्नाकरे मेखलात्वारोपात् रूपकम्।

(स) अथ अनन्तरं कदाचित् तस्य राजहंसस्य अग्रमहिषी प्रधाना राजमहिषी पट्टमहादेवीत्यर्थः। देवेन महाराजेन सह कल्पवल्लीफलं कल्पलतायाः फलम् आप्नुहि लभस्व इति उक्तरूपं सुस्वप्नं शुभावेदकं स्वप्नं प्रभातसमये उषसि अवलोकितवती,

যুদ্ধ হইতে লাগিল, উভয় পক্ষেরই বহুসৈন্য হতাহত হইল, যুদ্ধের পটহ শব্দ স্বপ্রভাবে দিগ্‌বর্ত্তী সমস্ত শব্দ তিরোহিত করিয়া দিগন্তরাল বধির করিয়া দিল। সেই যুদ্ধে মালবরাজের সকল সৈন্য ক্ষয়প্রাপ্ত হইলে মগধরাজ তাহাকে জীবিত অবস্থায় গ্রহণ করিয়া দয়াবশে পুনরায় স্বরাজ্যে প্রতিষ্ঠিত করিলেন। পরে একচ্ছত্রাধিপত্যে সমুদ্রমেখলা পৃথিবীর শাসন করিয়াও অনপত্যতাবশতঃ সর্ব্বজনের শরণ নারায়ণের নিরন্তর অর্চ্চনা করিতে লাগিলেন। (ব—য)

सा तदा दयितमनोरथपुष्पभूतं गर्भमाधत्त। राजाऽपि सम्पन्न्यक्कृताखण्डलः सुहृन्नृपमण्डलं समाहूय निजसम्पन्मनोरथानुरूपं देव्याः सीमन्तमहोत्सवं व्यधत्त (ङ)। एकदा हितैः सुहृन्मितपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो माल-

देवीत्यादि देव्या स्वप्ने अनुभूतस्य कस्यचित् वचनं, प्राभातिकस्वप्नस्य अवश्यं फलोन्मुखत्वात् अनेन स्वप्नेन वसुमत्याः सन्ततिलाभोऽचिरभावीति व्यज्यते। स्वप्नोऽयमप्रस्तुतप्रशंसात्मकः अप्रस्तुतेनानेन प्रस्तुतस्य सन्तानस्य लाभाशंसनात्।

(ङ) सा वसुमती तदा इति तदनन्तरमित्यर्थः, अथवा तदा तस्मिन् काले, अलौकिकस्यास्य वृत्तान्तस्य फलं प्रति अपि अलौकिकत्वस्य विस्मयाजनकत्वात्। दयितस्य स्वीयप्रियतमस्य राज्ञः राजहंसस्य मनोरथस्य अभिलषितविषयस्य फलात्मकस्य इत्यर्थः। पुष्पभूतं कुसुमस्वरूपं दयितेति मनोरथविशेषणं वा। गर्भम् आधत्त धारयामास। राजा राजहंसः सम्पदा समृद्ध्या न्यक्कृतः तिरस्कृतः आखण्डलः वासवः येन तथाभूतः आखण्डलादपि विपुलतरैश्वर्यशाली, सुहृन्नृपमण्डलं मित्रराजसमूहं समाहूय निजसम्पदा स्वीयमहैश्वर्य्येण मनोरथस्य अभिलाषस्य च अनुरूपं विपुलार्थव्ययादिसाध्यमित्यर्थः। देव्याः वसुमत्याः सीमन्तमहोत्सवं सीमन्तोन्नयनाख्यं संस्कारभेदं व्यधत्त। "षष्ठेऽष्टमे वा सीमन्त" इत्यादि शास्त्रस्मृतेः यथाकालमेव सीमन्तोन्नयनसंस्कारेण गर्भमङ्गलमाचरयामास इति भावः।

---

পরে একদিন তাঁহার প্রধানা মহিষী প্রভাত সময়ে একটী সুস্বপ্ন দেখিলেন, যেন কেহ বলিতেছে "দেবি! তুমি মহারাজের সহিত কল্পলতা ফল লাভ কর।" তৎপর মহিষী স্বামীর একমাত্র আকাঙ্ক্ষিত পুত্ররূপ ফলের পুষ্পস্বরূপ গর্ভ ধারণ করিলেন। সম্পদে ইন্দ্র অপেক্ষা প্রশস্ততর ভূপতিও মিত্র রাজগণকে আমন্ত্রণ করিয়া স্বীয় সম্পৎ ও মনোরথের অনুরূপ মহিষীর সীমন্তোন্নয়ন মহোৎসব সমাধা করিলেন। একদা গৌরবান্বিত রাজহংস

स्थल-न्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि—"देव! देवसन्दर्शन-लालसमानसः कोऽपि देवेन विरच्यार्च्चनार्हो यतिर्द्वारि निवसती"ति। तदनुज्ञातेन तेन स संयमी नृपसमीपमनायि (ख)। भूपतिरायान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढ़चार-भावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणत-मेनं मन्दहासमभाषत—"ननु तापस! देशं सापदेशं भ्रमन् भवान् तत्र तत्र भवदभिज्ञातं कथयतु" इति (ग)। तेना-

(ख) हितैः कुशलानुवर्त्तिभिः सुहृद्भिः बन्धुभिः मित्रैः ज्ञातिभिः, अथवा सुहृद्भिः मित्रैः पुरोहितैश्च सह इति सहार्थे तृतीया। सिंहासनासीनः सिंहासनोपविष्टः। गुणैः राजगौरवैः अहीनः युक्तः समस्तगुणालङ्कृत इत्यर्थः। भालस्थले ललाटस्थले न्यस्तः स्थापितः अञ्जलिः पुटीकृतं करद्वयं येन तथाभूतेन करशिरःसंयोगतः प्रणतेन इत्यर्थः। द्वारपालेन दौवारिकेण व्यज्ञापि निवेदितः वक्ष्यमाणं वस्तु इति शेषः। देवस्य महाराजस्य सन्दर्शने लालसं साभिलाषं मानसं यस्य तथाभूतः। देवेन अमरेण विरच्याम् आयोजिताम् अर्च्चनाम् अर्हति यः तथाभूतः देवपूजाया अपि लाभे योग्य इत्यर्थः। यतिः संयमी द्वारि द्वारदेशे निवसति आस्ते इति व्यज्ञापीति पूर्व्वेणान्वयः। तेन राज्ञा अनुज्ञातेन आदिष्टेन तेन द्वारपालेन। नृपस्य राजहंसस्य राज्ञः समीपम् अनायि, नयतेर्द्विकर्म्मकस्य प्रधानकर्म्मणि उक्तार्थतानियमात् स संयमीति कर्म्मणि प्रथमा, इतरत्र द्वितीया।

সহৃদয় মিত্র ও পুরোহিতগণের সহিত সভাস্থলে রাজসিংহাসনে আসীন রহিয়াছেন, এমন সময় ললাটে হস্তাঞ্জলি স্থাপন করিয়া সসম্মানে দ্বারপাল বিজ্ঞাপন করিল "মহারাজ! দেবতার সম্মানযোগ্য একজন সন্ন্যাসী মহারাজের দর্শনাভিলাষে দ্বারে দণ্ডায়মান রহিয়াছেন," পরে রাজার আদেশে দ্বারপাল সন্ন্যাসীকে তাঁহার নিকট লইয়া আসিল। (স—ক্ষ)

भाषि भूभ्रमणबलिना प्राञ्जलिना—"देव! शिरसि देवस्याज्ञामादायैनं निर्दोषवेशं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्त्तमानस्तस्य राज्ञः समस्तमुदन्तजातं विदित्वा प्रत्यागमम् (ख)। मानी मानसारः स्वसैनिकायुष्मत्ताऽ-

(क) भूपतिः राजा राजहंसः आयान्तम् आगच्छन्तं तं यतिम्। सम्यक् यथायथं ज्ञातः अनुसृतः तदीयः यतिसम्बन्धी गूढस्य गुप्तस्य चारस्य भावः येन तथाभूतः "मया यतिवेशमास्थाप्य देशवृत्तान्तविज्ञानाय प्रहितः स गुप्तचरोऽय"मिति स्मृत्वा इत्यर्थः। अनुचरनिकरम् अनुयायिवर्गं परिवारानित्यर्थः। विसृज्य तस्मात् स्थानादपसरणाय आदिश्य इत्यर्थः। मन्त्रिजनसमेतः अमात्यमात्रजुष्टः प्रणतं प्रश्रयावनतम् एनं यतिवेशधारिणं चरं मन्दहासं यथा तथा अभाषत वक्ष्यमाणवाक्यार्थः कर्म। सापदेशं सव्याजं भ्रमन्निति गौणक्रियाविशेषणम्। भवता अभिज्ञातम् अधिगतं वस्तु।

(ख) भुवः समस्तायाः पृथिव्याः भ्रमणे बली शक्तिमान् तेन, प्राञ्जलिना कृताञ्जलिना, तेन यतिना अभाषि ऊचे, विशेषणद्वयेन राज्ञो माहात्म्यं चारस्य च अतिविनीतत्वं व्यज्यते। सकलभूभ्रमणशक्तिमत्त्वेऽपि तत्समीपे प्राञ्जलित्वात्। एनं मया धृतपूर्वं निर्दोषवेशं पवित्रं यतिजनयोग्यं वेशं स्वीकृत्य गृहीत्वा। एतद्वेशधारिणां लोकानां स्वत एव पवित्रताबोधस्य समुदयात् सर्वत्र निर्बाधगतिकतया गुप्तवृत्तान्तोपलम्भे सौकर्य्यात् इति। मालवेन्द्रनगरं मानसारपुरं प्रविश्य तत्र मालवेन्द्रनगरे गूढतरम् अतिगूढभावेन। उदन्तजातं वृत्तान्तसमूहं विदित्वा ज्ञात्वा प्रत्यागमम् पुष्पपुरीं पुनः प्राप्तः अस्मि।

রাজা তাঁহাকে আসিতে দেখিয়া সে যে স্বীয় গুপ্তচর তাহা সম্যক্ বুঝিতে পারিলেন। সন্ন্যাসী তাঁহাকে প্রণাম করিলেন, পরে সমস্ত পরিজন বিদায় দিয়া রাজা মন্ত্রিগণ সমভিব্যাহারে থাকিয়া ঈষৎ হাস্য সহকারে তাঁহাকে বলিলেন। (ক)

न्तराये सम्पराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयोऽपि दत्तदयो महाकालनिवासिनं कालीविलासिनमनश्वरं महेश्वरं समाराध्य तपःप्रभावसन्तुष्टादस्मादेकवीरारातिघ्नीं भयदां गदां लब्ध्वा आत्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युक्तः। ततः परं देव एव प्रमाण"मिति (ग)

(ग) मानी अभिमानपरः मानसारः तदाख्यः मालवदेशराजः, स्वर्गनिकाना स्वीयसैन्यानाम् आयुष्मत्ता प्रशस्तायुष्कत्वं दीर्घजीवित्वमिति यावत्। तस्याः अन्तराये विघ्नभूते, निजलोकानाम् अकालमृत्युसाधके इत्यर्थः। सम्पराये युद्धे "अथापदि युद्धायत्योः सम्परायः" इत्यमरः। भवतः त्वत्सकाशात् इत्यर्थः। पराजयः पराभवम् अनुभूय लब्ध्वा। वैलक्ष्यस्य त्वत्तः पराजयेन जातायाः लज्जायाः लक्ष्यम् आश्रयः हृदयं यस्य तथाभूतः। दत्ता प्राप्ता त्वत्सकाशादिति शेषः दया येन तथाभूतः, तव दयया पुनः स्वराज्ये प्रतिष्ठापित इत्यर्थः। महाकाले तन्नामके प्रदेशे निवसति यः कालीविलासिनं गौरीपतिम् अनश्वरं ध्वंसरहितं महेश्वरं महादेवं समाराध्य प्रपूज्य तपसः तद्विषयकसमाधेः प्रभावात् महत्तया सन्तुष्टात् प्राप्तसन्तोषात् अस्मात् महेश्वरात् एकं वीरम् अतिशूरम् अरातिं शत्रुं हन्ति या तथाभूतां दुर्मदशत्रुविध्वंससाधनीभूतां भयदां भीतिजनिकां गदां गदाप्रहरणं लब्ध्वा। न विद्यते प्रतिभटः प्रतिपक्षयोद्धा

হে তপস্বিবর! ছল সহকারে আপনি বহুদেশ পর্য্যটন করিয়া সেই সেই স্থানে যাহা জানিতে পারিয়াছেন, তাহা প্রকাশ করুন।

সমস্ত পৃথিবীপর্য্যটনে শক্ত সেই সন্ন্যাসী কৃতাঞ্জলি হইয়া রাজাকে বলিতে লাগিলেন। মহারাজ! আপনার আদেশ শিরোধার্য্য করিয়া এই নির্দ্দোষ বেশ (সন্ন্যাসীর বেশ) অবলম্বনপূর্ব্বক মালবেন্দ্র মানসারের নগরে প্রবেশ করিলাম এবং তথায় যাইয়া গূঢ়ভাবে রাজার সমস্ত বৃত্তান্ত অবগত হইয়া আসিয়াছি। (ঘ)

तदालोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत्। "देव! निरुपायेन देवसहायेन योद्धुमरातिरायाति, तस्मादस्माकं युद्धं साम्प्रतमसाम्प्रतम्। सहसा दुर्गसंश्रयः क्रियता"मिति। तैर्बहुधा विज्ञापितोऽपि अखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव (घ)। शितिकण्ठदत्तशक्तिसारो मानसारो योद्ध-

यस्य तथाभूतं मन्यमानः, मम तुल्यः कोऽपि प्रतिद्वन्द्वी नास्ति इति जानन् इत्यर्थः। मदाभिमानः महता गर्व्वेण दृप्तः। अभियोक्तुम् अभियोद्धुम् उद्युक्तः। ततः परम् एतदनन्तरं देवः प्रमाणं कर्त्तव्यविषये महाराज एव प्रभवतीति भावः। अत्र महादेवस्य कालीविलासिनम् अनश्वरमिति च विशेषणद्वयेन तस्मादेव समरे आत्मनः। अप्रतत्वं शत्रुकुलविध्वंसकारित्वञ्च लब्धं, शक्यमतस्तस्यैव उपासना कार्य्या इति व्यज्यते।

(घ) तत् यतिवेशधारिणा चारजनेन उक्तं वस्तु आलोच्य विचिन्त्य निश्चितं निर्द्धारितं तत्र विषये कृत्यं कर्त्तव्यं यैः तथाविधैः कर्त्तव्यमवधारितवद्भिः अमात्यैः सचिवैः राजा राजहंसः विज्ञापितः। निः न विद्यते उपायः प्रतीकाराय गत्यन्तरं यस्य

মানী মানসার নিজ সৈন্য ক্ষয় করিয়া যুদ্ধে আপনার নিকট পরাজিত হওয়ায় অতিলজ্জিতান্তঃকরণে আপনার করুণা লাভ করিয়া মহাকালনামক স্থানে প্রতিষ্ঠিত গৌরীপতি অবিনশ্বর মহেশ্বরের অর্চ্চনানন্তর তাঁহাকে তপস্যাপ্রভাবে সন্তুষ্ট করিলেন এবং তাঁহার নিকট হইতে একমাত্র বীরশত্রুর বধসাধক ভয়ঙ্কর গদা লাভ করিয়া আত্মাকে প্রতিদ্বন্দ্বিশূন্য মনে করিলেন, পরে দর্পোদ্ধত হইয়া আপনার সহিত পুনরায় যুদ্ধ করিতে উদ্যুক্ত হইয়াছেন, সম্প্রতি যাহা কর্ত্তব্য তাহা আপনিই বুঝিবেন। (গ)

मनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश। तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथञ्चिदनुनीय रिपुभिरबाध्ये विन्ध्याटवीमध्येऽवरोधान् मूलबलरक्षितान् निवेशयामासुः। राजहंसस्तु प्रशस्त-वीतदैन्य-सैन्यसमेतस्तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध (ङ)। परस्परबद्धवैरयो-

तथाभूतेन अप्रतीकार्य्यशक्तिना इत्यर्थः। दैवसहायेन दैवतारूपेण सहायेन सह इति शेषः। अरातिः शत्रुः मालवराजः योद्धुम् आयाति तस्मात् अप्रतीकार्य्यदैवसाहाय्यं गतवतः शत्रोः पराजयासम्भवात् इत्यर्थः। अस्माकम् अस्मत्पक्षीयाणाम् असाम्प्रतम् अनुचितं जयसम्भावनायामेव रिपुं प्रति युद्धयात्रायाः कर्त्तव्यत्वात् इति। ननु युद्धस्य असाम्प्रतिकत्वं यदि किं क्रियतामित्याह—सहसेति। सहसा कालविलम्बमकृत्वा त्वरितमेव इत्यर्थः. दुर्गसंश्रयः दुर्गप्रवेशः क्रियतां येन सहसा रिपवः समागत्य न परिभवितुं अर्हेरन् इति भावः। तैः अमात्यैः। अखर्व्वेण सुमहता गर्व्वेण अहङ्कारेण तद्वाक्यं मन्त्रिजनैरुक्तम् अकृत्यम् अकर्त्तव्यम् इति कृत्वा। अनादृत्य अनभिनन्द्य अगृहीत्वा इत्यर्थः। प्रतियोद्धुं प्रतिपक्षभावेन साङ्ग्रामिकं व्यापारं कर्त्तुं मनः यस्य यथाभूतः योद्धुकामः बभूव। ननु दुर्व्वलमात्मानं मन्यमानः सुरप्रभावं वा स्वविजयप्रतिबन्धकं बुध्यमानः दुर्गमाश्रितवानिति भावः।

(ङ) शितिकण्ठेन नीलकण्ठेन महादेवेन दत्तः वितृष्टः शक्तिसारः उत्कृष्टा

---

উক্ত বিষয় আলোচনা করিয়া কর্ত্তব্যনির্দ্ধারণানন্তর মন্ত্রিগণ রাজাকে জানাইলেন, মহারাজ! অপ্রতিকার্য্য দেবতা সহায় করিয়া শত্রু আপনার সহিত যুদ্ধ করিতে আসিতেছে, অতএব আমাদের সম্প্রতি যুদ্ধ কর্ত্তব্য নহে। সত্বর দুর্গ আশ্রয় করুন। তাহারা অনেকরূপে বলিলেও প্রভূত অহঙ্কারে রাজা তাহাদের বাক্য অগ্রাহ্য করিয়া মানসারের বিরুদ্ধে যুদ্ধ করিবার ইচ্ছা করিলেন। (গ)

रेतयोः शूरयोस्तदा तदालोकनकुतूहलागत-गगनचराश्चर्य्य-कारणे रणे वर्त्तमाने जयाकाङ्क्षी मालवदेशरत्नो विविधायुध-स्थैर्य्यचर्य्याञ्चित-समर-तुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरारातिदत्तां गदां प्राहिणोत् (च)। निशितशरशतत शकलो-

शक्तिः यस्मै तथाभूतः शिवप्रदत्ताम् अतुलनीयां शक्तिं प्राप्य इत्यर्थः। योद्धॄ मनसा योद्धृकामानाम् अग्रीभूय अग्रगामी सन्, एतेन दैवप्रभावात् अतिदुर्म्मदशक्तिकत्वं व्यज्यते। सामग्रीभिः युद्धोपकरणैः समस्तैः समेतः समन्वितः सन्, अक्लेशम् अनायासम्, दैवदत्तशक्तिकस्यास्य गतेः केनापि रोद्धुमशक्यत्वात् निर्बाधमिव मगधदेशं प्रविवेश। तदा मानसारस्य मगधप्रवेशानन्तरं भूमहेन्द्रं क्षितिपाक-शासनम्। रिपुभिः शत्रुपक्षीयैः अवार्य्यं अनाक्रमणीयं अशक्यप्रतिरोधं इत्यर्थः। यत्र प्रविश्य शत्रवः नालं भविष्यन्ति मगधराजस्य परिवारान् आक्रमितुं तादृशं इति भावः। अवरोधान् महिषीवृन्दं सपरिवारम् इत्यर्थः। मूलबलैः प्रधानतमैः सैनिकैः रक्षितान् गुप्तान्। निवेशयामासुः। तथाहि प्रधानसैनिकादिरक्षकसमभिव्याहारेण अन्तःपुरिकाम्लव गोपायामासुरिति। प्रशस्तानि प्रधानानि वीतदैन्यानि भयलेशेनापि शून्यानि यानि सैन्यानि तैः समेतः युक्तः सन् तीव्रगत्या कठोरतमभावधारणात् अनभिभवनीयगमनेन निर्गत्य पुरात् बहिर्गत्य अधिकरुष मातिशयक्रोधाद्दीनं द्विषं शत्रुं रुरोध आचक्राम।

মানসার শিবপ্রদত্ত শক্তি লাভ করিয়া যোদ্ধগণের অগ্রভাগে যুদ্ধোপকরণ সহ অনায়াসে মগধদেশে প্রবেশ করিলেন। তখন মন্ত্রিগণ উক্ত বৃত্তান্ত শুনিয়া বসুন্ধরাধিপতি মগধনাথকে অতি কষ্টে অনুনয়ে বাধ্য করিয়া শত্রুগণের অগম্য বিন্ধ্যাটবীর অভ্যন্তরে প্রধান সৈনিকগণ দ্বারা অন্তঃপুরিকা প্রভৃতির রক্ষার ব্যবস্থা করিলেন।

রাজা রাজহংস উৎসাহী প্রশস্ত সৈন্যগণ সহ তীব্র গতিতে নির্গত হইয়া রোষান্বিত ভাবে শত্রুপক্ষের অবরোধ করিলেন। (৬)

कृतापि सा पशुपतिशासनस्यावन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत्। ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्याऽन्तःपुरशरण्यं महारण्यं प्राविशन्। मालवनाथो जयलक्ष्मीमनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत् (छ)। तत्र हेतिततिहतिश्रान्ता अमात्या

(च) परस्परं बद्धम् उपस्थितं वैरं शात्रवं ययोः तथाभूतयोः सुचिरमेव अन्योन्यं शात्रवग्रस्तयोः एतयोः उक्तयोः शूरयोः वीरभूपालयोः। तस्य रणस्य आलोकनाय यत् कुतूहलं कौतुकं तेन आगताः गगनतले सम्मिलिता ये गगनचराः सिद्धगन्धर्वादयो नभश्चारिणः तेषाम् आश्चर्य्यकारणे विस्मयसमुत्पादके रणे संग्रामे वर्त्तमाने प्रचलति सति। भावे सप्तमी। मालवदेशेश्वरो मालवदेशस्य पालयिता मानसारः जयाकाङ्क्षी विजयमभिलाषुकः सन् विविधानां बहुविधानाम् आयुधानां प्रहरणानां स्थैर्य्येण स्थिरभावेन अविशृङ्खलतया इति यावत् या चर्य्या व्यवहारः तेन अर्च्चितेन युक्तेन निपुणभावेन नानाविधास्त्रव्यवहारसम्पादितेन इत्यर्थः। समरेण संग्रामेण तुलितः सदृशीकृतः अमरेश्वरः देवराजः येन तथाभूतस्य मगधेश्वरस्य। पुरारातिः त्रिपुरारिः महादेवः तेन दत्ता तपःसन्तोषात् उपहृतां गदां प्राहिणोत् प्रेरयामास, राजहंसमुद्दिश्य तां गदां निचिक्षेप इति भावः। अत्र समरतुलितामरेश्वरस्य इत्यनेन उपमानतया प्रसिद्धस्य अमरेश्वरस्य उपमेयताप्रत्ययात् राज्ञश्च उपमानताप्रत्ययात् प्रतीपमलङ्कार इति वदन्ति।

(छ) सा मालवेश्वरेण मगधेश्वरं प्रति प्रहिता गदा निशितानां सुधाराणां

পরস্পর বদ্ধবৈর এই বীরদ্বয়ের (মানসার ও রাজহংসের) যুদ্ধ আরম্ভ হইলে তদ্দর্শনাগ্রহে সমাগত নভশ্চরগণ অত্যন্ত বিস্ময়ান্বিত হইলেন। জয়াভিলাষী মানসার যুদ্ধবিষয়ে ইন্দ্রাপেক্ষা প্রসিদ্ধ মগধনাথ রাজহংসকে লক্ষ্য করিয়া শিবপ্রদত্ত গদা নিক্ষেপ করিলেন। (চ)

**दैवगत्या अनुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः कथञ्चिदाश्वस्य राजानं समन्तादन्वीक्ष्य अनवलोकितवन्तो दैन्यवन्तो देवीमवापुः (ज)।**

शराणां सायकानां शतेन शकलीकृता खण्डशः कल्पितापि पशुपतेः महादेवस्य शासनस्य आदेशस्य अवन्ध्यतया अव्यर्थतया सूतं राजहंसस्य सारथिं निहत्य हत्वा रथस्थं राजानं राजहंसं मूर्च्छितं वीतमस्तम् अकार्षीत्। अत्रेदं तत्त्वं— शिववाक्यं हि अत्र एवंविधं यत् "इयं गदा एकं कञ्चित् पुरुषं हनिष्यति" नतु "इयं गदा राजहंसं हनिष्यति" इत्येवरूपम्, अतएव सूतनिधनेनापि तद्वाक्यस्य अवन्ध्यत्वं रक्षितमिति, अन्यथा प्रस्तुतव्याघातात्। ततः सूतस्य निधनानन्तरं वीतप्रग्रहाः मुक्तरश्मयः अक्षतविग्रहाः अक्षतदेहाः वाहाः रथवाहका अश्वाः, दैवगत्या भाग्यवशात् राजहंसस्येति शेषः। अन्तःपुराणाम् अवरोधवधूनां, शरणम् आश्रयस्थानं महारण्यं घोरं विन्ध्याटवीमध्यं प्राविशन्। जयलक्ष्म्या विजयश्रिया सनाथः युक्तः प्राज्यं सुप्रभूतं मगधराज्यं मागधदेशराजत्वं समाक्रम्य पर्य्यवष्टभ्य पुष्पपुरं तदाख्यां मगधदेशराजधानीम् अध्यतिष्ठत् तत्रैव स्ववासं कल्पयामास। मालवराजो मानसार एव मगधानां राजा बभूवेति भावः।

(ज) तत्र युद्धस्थले हुतिततीनां बाणसमूहानां "खर्च्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः" इत्यमरः। हत्या आघातेन श्रान्ताः अतिमात्रां श्रान्तिं प्राप्ताः मूर्च्छादिदोषदूषिता इत्यर्थः। अमात्याः दैवगत्या अदृष्टक्रमेण अनुत्क्रान्तानि अबहिर्भूतानि जीवितानि प्राणाः येषां तथाभूताः अदृष्टबलेन एव सप्राणाः, निशान्तस्य रात्रिशेषभागस्य यो वातः शीतपवनः, निशाशेषवायोः स्वत एव शैत्यानुभवात्। लब्धा संज्ञा चैतन्यं यैः तथाभूताः कथञ्चित् अतिकष्टेन आश्वस्य आश्वस्ता भूत्वा मुक्तमोहा इत्यर्थः। अन्वीक्ष्य अन्विष्यान्विष्य दैन्यवन्तः कातरतां प्राप्तवन्तः देवीं राज्ञीं वसुमतीम् अवापुः। तत्समीपमुपययुः।

সেই গদা শাণিত বহুসায়কে খণ্ডিত হইয়াও শিবাদেশ অলঙ্ঘ্য বলিয়া রাজহংসের সারথিকে নিহত এবং রাজাকে রথে মূর্চ্ছিত করিল।

वसुमती च तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वञ्चाकर्ण्य उद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त (झ)। "कल्याणि! भूरमणमरणमनिश्चितम्। किञ्च दैवज्ञकथितो मथितोद्धताराति: सार्वभौमोऽभिरामो भविता सुकुमारः कुमारस्त्वदुदरे वसति। तस्मादद्य तव मरणमनुचित"मिति भूषितभाषितैरमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणक्षीणया तूष्णीमस्थायि (ञ)। अथार्द्धरात्रे निद्रालीढनेत्रे परिजने विजने

(झ) तेभ्यः अमात्येभ्यः "श्रवणार्थानां श्रावयिता" इति पञ्चमी। निखिलानां सकलानां सैन्यानां सेनानां क्षतिं विध्वंसम्। राज्ञः स्वीयस्य पत्युः राजहंसस्य अदृश्यत्वं दर्शनागोचरताम् अन्विष्यापि अलभ्यत्वमित्यर्थः। शोकरूपे सागरे प्रबले शोके मग्ना निपतिता सुतरां शोकाभिभूता इत्यर्थः। रमणस्य पत्युः अनुगमने अनुसरणे मतिं व्यधत्त। "इदानीं मृतभर्तृकाया मे मरणमेव श्रेयः" इति निश्चितवतीति भावः।

(ञ) भुवः वसुन्धरायाः रमणः पतिः अस्माकं राजा इत्यर्थः। तस्य मरणं प्राणवियोगः अनिश्चितं अपितु सन्दिग्धमेव। अतो नार्हसि मरणस्य अनिश्चये

---

পরে মুক্তরশ্মি-অশ্বগণ অক্ষতশরীরে রথ লইয়া দৈবক্রমে অন্তঃপুরিকাগণের আশ্রিত গভীর বিন্ধ্যারণ্যে প্রবেশ করিল।

মালবেশ্বর জয়লক্ষ্মীযুক্ত হইয়া বিশাল মগধরাজ্য হস্তগত করিয়া পুষ্পপুরে অধিষ্ঠান করিলেন। (চ)

সেই স্থানে বাণাঘাতে ক্লিষ্ট অমাত্যগণ দৈবক্রমে মূর্চ্ছিতাবস্থায় জীবিত রহিয়াছেন, তাঁহারা প্রভাতকালীন শীত পবনসংস্পর্শে সংজ্ঞালাভ করিয়া চারিদিকে মহারাজের অন্বেষণ করিতে লাগিলেন এবং তাঁহাকে কোথাও দেখিতে না পাইয়া, অতি কাতরভাবে রাণী বসুমতীর নিকট উপস্থিত হইলেন। (জ)

शोकपारावारमपारमुत्तर्त्तुमशक्नुवती सेनानिवेशदेशं निःशब्द-लेशं शनैरतिक्रम्य यस्मिन् रथस्य संसक्ततया तदानयनपलायन-परिश्रान्ता गन्तुमक्षमाः क्ष्मापतिरथ्याः पथ्याकुलाः पूर्वमतिष्ठन्; तस्य निकटवटतरोः शाखायां मृतिरेखायामिव क्वचिदुत्तरो-यार्द्धेन बन्धनं मृतिसाधनं विरचय्य मर्त्तुकामाभिरामा वाङ्माधुरीदूरीकृतकलकण्ठाकण्ठा मास्रुकण्ठा व्यलपत् ( ट )।

अनुमरणाव्यवसायं रचयितुमिति भावः। दैवज्ञेन ज्यौतिषिकेण कथितः विज्ञापितः मथिताः विदलिताः उद्धताः गर्व्वदृप्ता अरातयः शत्रवः येन तथाभूतः समुद्धतः शत्रुकुलसूदनः सार्व्वभौमः चक्रवर्त्ती एकच्छत्रसम्राट् अभिरामं अतिरमणीयाकृतिः सुकुमारः सुकोमलः कुमारः तव उदरे गर्भे वसति अस्ति। तस्मात् उक्तकारण-द्वयात् तव मरणं प्राणविसर्ज्जनम् अनुचितम् अकर्त्तव्यम्। सति राज्ञो जीविते जीवन-परित्यागस्य वैफल्यात्, असति वा त्वन्मरणेनैव सार्व्वभौमस्य कुमारस्य मरणा-वश्यम्भावतो महानिष्टापातात्। तथाच शत्रूणामुपरि प्रतिहिंसासाधनकाम्ययापि त्वया जीवितव्यमिति भावः। भूषितं सुशोभनं भाषितं वचनं येषां तथाभूतैः अमात्यैः पुरोहितैश्च अनुनीयमानया प्रबोध्यमानया तया वसुमतीदेव्या क्षणं क्षणकालं व्याप्य क्षणेन उत्सवेन हीनया आनन्दशून्यया तूष्णीम् अस्थायि न किमपि प्रत्युत्तरं प्रपेदे इत्यर्थः। भूषितभाषितैरिति करणपदं वा। मथितोद्धताराति-रित्यत्र भविष्यदर्थे अतीतप्रत्ययः। तच्च शत्रुमथनस्य अचिरम् अवश्यम्भावितामेव ज्ञापयति। प्रकृते जीवनरक्षणस्य कल्याणकरत्वात् तदनुमुखतां राज्ञ्या आपादयितुं कल्याणीति सम्बोधनम्।

( ट ) अर्द्धरात्रे रात्रेरर्द्धभागे निद्रया आलीढे आक्रान्ते नेत्रे नयने यस्य

---

রাণী বসুমতী তাহাদের নিকট হইতে সমস্ত সৈন্যের ক্ষয় এবং রাজার অদর্শন জানিয়া অতি শোকে মগ্ন হইলেন এবং স্বামীর অনুগমনে সঙ্কল্প করিলেন। ( ঝ )

तथाभूत मतीति शेषः। तथाहि यदा परिजना निद्रामग्नास्तदा इत्यर्थः। शोकपारावारं शोकसागरम्, अपारम् असीमम् उत्तर्त्तुमशक्यमेव इति भावः। उत्तर्त्तुम् अतिक्रमितुम् अशक्नुवती सेनाना संन्यसमूहानां निवेशदेशः निवासस्थान नि: न विद्यते शब्दस्य लेशः अल्पन्दः शब्दोऽपि यत्र तद्यथा स्यात् तथा अतिशयतूष्णीम्भावेन इत्यर्थः। यस्मिन् वनान्तर्वत्ति नि निकटवटतरौ रथस्य राजहंसेनाश्रितस्य स्यन्दनस्य संसक्ततया लग्नतया निःङ्गतितया इत्यर्थः. तस्य राजहंसस्य आनयनार्थं पलायनेन अपसरणेन सत्वरप्रस्थानेन इत्यर्थः। परिश्रान्ताः श्रान्तिमापन्नाः अतएव गन्तुमक्षमाः क्ष्मापतेः राज्ञः राजहंसस्य रथ्याः रथवाहकाः अश्वाः अपि आकुलाः अतिमात्रव्याकुलाः। निकटवटतरोः समीपस्थित न्यग्रोधवृक्षस्य। क्षतेः मरणस्य रेखायां रेखाकारे चिह्ने इव मरणसीमसमसूचकलक्षण इव इत्यर्थः। उत्तरीयस्य ऊर्द्ध्ववाससः अर्द्धेन क्षतेः मरणस्य साधनं हेतुभूतं बन्धनं संयमनं विरचय्य कृत्वा मर्त्तुकामा जीवनपरित्यागं कामयमाना। वाचां माधुर्य्या मधुरतया दूरीकृतः पराजितः कलकण्ठानां कोकिलानां कण्ठः कण्ठस्वरः यया तथाभूता कोकिलापेक्षयापि मधुरतरस्वरा इत्यर्थः। साश्रुकण्ठा अश्रुजडितकण्ठस्वरा व्यलपत् निद्रालीढनैव परिजन इति अन्यथा तेनैव तद्व्यवसायस्य प्रतिरोधसम्भवात्। क्षतिरेखायामिवेति शाखायां क्षतिरेखात्वसम्भावनादुत्प्रेक्षा। तदानयनेत्यादिपदार्थस्य गमनाक्षमत्वप्रयोजकत्वात् काव्यलिङ्गम्। वाङ्माधुरीत्यादौ व्यतिरेकः।

---

হে কল্যাণি! মহারাজের মরণ বিষয়ে নিশ্চয়তা নাই, এবং দৈবজ্ঞগণ বলিয়াছেন—"তোমার গর্ভে দৃপ্ত-শত্রুগণের নিহন্তা সার্ব্বভৌম রমণীয় সুকুমার কুমার অবস্থান করিতেছে, অতএব তোমার প্রাণত্যাগ উচিত নহে" এইরূপ মধুর বাক্যে পুরোহিত ও অমাত্যগণ রাণীকে বহু বুঝাইলেন, রাণী ক্ষণকাল বিষণ্ণভাবে চুপ করিয়া রহিলেন। ( এ )

পরে রাত্রির মধ্যভাগে যখন সমস্ত পরিজনবর্গ সুপ্ত হইয়াছে, তখন অসীম শোকে অভিভূতা বসুমতী নিঃশব্দে ধীরে ধীরে সেনাসন্নিবেশভূমি

"लावण्योपमितपुष्पसायक ! भूनायक ! भवानेव भाविन्यपि जन्मनि वल्लभो भवतु" इति। तदाकर्ण्य नीहारकर-किरण-निकर-सम्पर्क-लब्धावबोधो मागधोऽगाधरुधिर-चिरक्षरण-नष्ट-चेष्टः स देवीवाक्यमेव निश्चिन्वानस्तन्वानः प्रियवचनानि शनकैस्तामाह्वयत् (ट)। सा ससम्भ्रममागत्य अमन्द-

(ट) लावण्येन सौन्दर्य्येण उपमितः सदृशीकृतः पुष्पसायकः कुसुमायुधः येन तथाभूतः, कामादपि अधिकतरसुन्दरः तस्य सम्बोधनम्। भूनायक पृथिवीपते सम्बोधनद्वयं स्वीयपतिं राजहंसमुद्दिश्य. भवानेव त्वमेव, एवशब्देनान्यो व्यवच्छिद्यते, नान्य इति भावः। वल्लभः स्वामी भवतु इति उक्तरूपेण व्यलपदिति पूर्व्वेणान्वयः। एतेन वसुमत्याः सुमहत् पातिव्रत्यं विनिर्दिश्यते। तत् उक्तरूपं वचः आकर्ण्य श्रुत्वा नीहारकरस्य शीतकिरणस्य चन्द्रस्य किरणनिकराणां करसमूहानां सम्पर्केण लब्धः प्राप्तः अवबोधः संज्ञा येन तथाभूतः शिशिरसम्पातवशात् प्राप्तचेतन इत्यर्थः। मागधः मगधनायकः अगाधाना पर्य्याप्ताना रुधिराणां शोणितानां चिरक्षरणेन बहुकालं यावत् क्षरणेन नष्टा विलुप्ता शारीरक्रिया यस्य तथाभूतः, बहुशोणितप्रस्रवणात् अतिदुर्ब्बल इत्यर्थः। देव्याः राज्ञ्याः वसुमत्याः वाक्यमेव इदं वाक्यं नूनं वसुमत्या एव इति निश्चिन्वानः निर्द्धारयन् प्रियवचनानि सुन्दराणि वाक्यानि तन्वानः प्रयुञ्जानः तां वसुमतीम् आह्वयत् आमन्त्रयामास।

অতিক্রম করিয়া যে বটবৃক্ষে রথ সংলগ্ন হওয়ায় রাজার আনয়নে পরিশ্রান্ত অশ্বগণ গমনে অক্ষম হইয়া অবসন্নভাবে অবস্থান করিতেছিল, সেই সমীপবর্ত্তী বটবৃক্ষের মৃত্যুর চিহ্নরূপ একটী শাখায় উত্তরীয়ের অর্দ্ধ-ভাগ দ্বারা মৃত্যুর যোগ্য বন্ধন রচনা করিয়া মৃত্যুবাসনায় কোকিলাপেক্ষা মধুরভাষিণী বসুমতী সাশ্রুকণ্ঠে এই বলিয়া বিলাপ করিতে লাগিলেন— (ট) যে "হে কন্দর্পকান্তি মহারাজ ! ভবিষ্যৎ জন্মেও তুমিই আমার স্বামী হইও।" এদিকে রাজা মগধেশ্বর শরীর হইতে বহু রক্ত ক্ষরিত হওয়ায়

हृदयानन्दप्रफुल्लवदनारविन्दा तमुपोषिताभ्यामिवानिमेषिताभ्यां लोचनाभ्यां पिबन्ती विकस्वरेण स्वरेण पुरोहितामात्यजनमुच्चैराहूय तेभ्यस्तमदर्शयत्। राजा निटलतलचुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैरमात्यैरभाणि—"देव! रथ्यचयः मारथ्यपगमे रथं रभसादरण्यमनैष्य"दिति। "तत्र निहतसैनिकग्रामे संग्रामे मालवपतिना आराधितपुरारातिना प्रहितया गदया दयाहीनेन ताड़ितो मूर्च्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्" इति महीपतिरकथयत् (ड)।

(ड) ससम्भ्रमं त्वरया शीघ्रं सावेगञ्च इत्यर्थः। अमन्देन अतिशयेन हृदयस्य मनसः आनन्देन आमोदेन प्रफुल्लं सप्रकाशं वदनारविन्दं यस्याः निश्चितमरणस्य भर्त्तुः पुनर्दर्शनस्य सुतरामसम्भावितस्य अकाण्डे लाभात् तथात्वम्। उपोषिताभ्यां कृतोपवासाभ्यामिव अनिमेषिताभ्यां निर्निमेषाभ्यां लोचनाभ्यां पिबन्ती साग्रहं पश्यन्ती विकस्वरेण व्यक्तीभूतेन स्वरेण। तेभ्यः पुरोहितामात्यजनेभ्यः तं राजानम् अदर्शयत्। निटलतलेन ललाटतलेन चुम्बितं आमर्श्चितं निजचरणाम्बुजं राज्ञः पदाम्बुजं यैः तथाभूतैः राज्ञः पादतले प्रणतैः इत्यर्थः। प्रशंसितं दैवमाहात्म्यम् अदृष्टस्य प्रभावः यैः तथाभूतैः "अहो दैवस्य महिमा यत् अकाण्डे भ्रष्टं महाराजं लभामहे" इत्येवं दैवप्रशंसा

শক্তিহীন হইয়া পড়িলেন, চন্দ্রের সুশীতল কিরণে তাঁহার চৈতন্য হইল, এবং বসুমতীর উক্ত বাক্য তাঁহার কর্ণে প্রবেশ করিল। ইহা রাণীরই বাক্য ইহা নিশ্চয় করিয়া মধুরবাক্যে ধীরে ধীরে তাঁহাকে ডাকিলেন। (ঠ)

বসুমতী সসম্ভ্রমে তথায় আসিয়া আনন্দাতিশয়ে প্রফুল্ল হইলেন, এবং বহুকাল রাজার অদর্শনে অতি আগ্রহে তাঁহার প্রতি দৃষ্টি নিবদ্ধ করিয়া স্পষ্ট স্বরে পুরোহিত ও অমাত্যগণকে আহ্বান করিয়া রাজার বিষয় তাঁহাদের নিকট বলিলেন।

ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवानुकूल्येन कालेन शिविरमानीयापनीताशेषशल्यो विकसितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ताकारो मगधाधिपतिरधिकाधि—[ अधिकाधि काधि ] रमात्यसंमत्या सुदृभाषितया तया वसुमत्या मत्याकलितया च समबोधि (ढ)। "देव! सकलस्य भूपालकुलस्य मध्ये

कर्व्वद्भिः इत्यर्थः। रथ्यचयः रथवाहकसमूहः। सारथेः अपगमे विनाशानन्तरम्। रभसात् अतिद्रुतया गत्या। रथम् अरण्यम् अनयत् ततः किं वृत्तमिति अमात्यानामभिप्रायः। निहतः व्यापादितः सैनिकानां ग्रामः समूहः यत्र तथाभूते। आराधितः पूजितः पुरारातिः त्रिपुरारिः शिवः येन तथाभूतेन तपसा सन्तोषितविरूपाक्षेण इत्यर्थः। प्रहितया निक्षिप्तया। दयाहीनेनेति मालवपतिनेत्यस्य विशेषणं. निशान्तपवनेन प्रभातवातेन बोधितः प्रापितचेतनः अभवम् अहमिति शेषः।

(ढ) विरचितः सम्पादितः महः उत्सवः येन तथाभूतेन, राज्ञः सहसा समागमात् महोत्सवं सम्पादयता इत्यर्थः। मन्त्रिनिवहेन मन्त्रिसमूहेन। विरचितं प्रवर्त्तितं दैवानुकूल्यम् अदृष्टस्य अनुकूलता येन तथाभूतेन कालेन शुभावस्थानुकूलेन

---

অমাত্যগণ শিরোদেশে অঞ্জলি স্থাপন করিয়া দৈবের প্রশংসা করত রাজাকে বলিলেন—মহারাজ! রথবাহী অশ্বগণ সারথির মরণের পর বেগে রথ লইয়া অরণ্যে প্রস্থান করিল, ( তৎপর কি হইল ? )

মহারাজ বলিলেন. "সেই সংগ্রামস্থলে সমস্ত সৈন্য ক্ষয় প্রাপ্ত হইলে শিবের আরাধনে সিদ্ধ নির্দ্দয় মালবাধিপতি (আমার প্রতি) গদা নিক্ষেপ করিল, তাহার আঘাতে আমি মূর্চ্ছিত হইবার পর এই বনে প্রভাত-বায়ুসংস্পর্শে চৈতন্যলাভ করিয়াছি। (ড).

পরে মন্ত্রিগণ সেই সময়ে শুভাদৃষ্টের অনুকূলে মহোৎসব সম্পাদন

तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति सलिलबुद्बुदसमाना विराजमाना सम्पत् तडिल्लतेव सहसैवोदेति नश्यति च; तन्निखिलं दैवायत्तमेवावधार्य्यं कार्य्यम्। किञ्च हरिश्चन्द्ररामचन्द्रमुख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यम् अकुर्वन्। तद्वदेव भवान् भविष्यति। कञ्चन कालं विरचितदैवसमाधिर्गलिताधिः तिष्ठतु तावदिति (ग)।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं

कालेन इत्यर्थः। शिविरं वसनावासं सेनासन्निवेशं वा आनीय अपनीतानि अपनोदितानि अशेषाणि सकलानि शल्यानि शङ्कवः यस्य तथाभूतः विकसितं प्रफुल्लं निजम् आननारविन्दं मुखपद्मं यस्य तथाभूतः। राजा राजहंसः विरोपिताः औषधप्रयोगेण रोपमानीताः व्रणाः क्षतानि यस्य तथाभूतः अकारि। शारीरिक-क्षतादिकं सर्वमेवास्वास्थ्याकरं वस्तु अपनीय राज्ञः स्वास्थ्यमापादितमिति भावः। विरोधिना प्रतिकूलेन दैवेन दुरदृष्टेन धिक्कृतः पराजितः पुरुषकारः पौरुषं वीर्य्यादिकं यस्य तथाभूतः दैवप्रातिकूल्येन विफलपुरुषकार इत्यर्थः। दैन्येन कातर्य्येण व्याप्तः अभिभूतः आकारः आकृतिः यस्य तथाभूतः, बहिरपि प्रकाशितविकार इत्यर्थः। अधिकः विपुलः आधिः मनोव्यथा यस्य तथाभूतः समधिकया मनोव्यथया विकृतान्तःकरण इत्यर्थः। मगधाधिपतिः राजहंसः अमात्यानां सचिवानां सम्मत्या अनुमोदनक्रमेण

করিয়া রাজাকে শিবিরে আনিলেন এবং তাঁহার শরীরের সমস্ত শল্য উৎপাটন করিয়া ক্ষতনিবারক ঔষধে ক্ষতগুলি অপনোদন করিলেন, রাজার মুখে আনন্দের চিহ্ন দৃষ্ট হইল।

মগধেশ্বর দুরদৃষ্টবশতঃ ব্যর্থপৌরুষ হইয়া অতি বিষণ্ণতাসহকারে মানসিক বেদনা অনুভব করিতে লাগিলেন। মৃদুভাষিণী বুদ্ধিমতী

अस्वास्थ्यावस्थायां वाक्प्रस्तावस्य विशेषेण औचित्यमनौचित्यं वा इति प्रश्नेन सचिवानामनुमतिमाप्ता इत्यर्थः। मृदुभाषितया कोमलवचनया मत्या बुद्धिमत्तया आकलितया युक्तया तया वसुमत्या समबोधि आमन्त्रितः प्रबोधवाचा सान्त्वितो वा। मत्या निजबुद्ध्या आकलितया नियोजितया इति वा।

( ण ) भूपालकुलस्य राजसमूहस्य। तेजसा प्रतापेन वरिष्ठः उत्कृतमः। गरिष्ठः गौरवेण महत्तमः। विन्ध्यवनस्य विन्ध्यारण्यस्य मध्यम् अभ्यन्तरं संश्रित्य इति शेषः। निवसतीति, निपूर्व्वस्य वसेः अकर्म्मकत्वात् संश्रित्य इत्यादि क्रियाया अध्याहारेणान्वयः पूरणीयः। इति हेतोः। सलिलस्य जलस्य बुद्बुदः फेनबिन्दुः तत्समाना तत्तुल्या क्षणभङ्गुरा इत्यर्थः। सम्पत् ऐश्वर्य्यम् तडिल्लतेव विद्युल्लेखेव। सहसा अकस्मादेव उदेति जायते नश्यति विनाशञ्च गच्छति, एकपरिहारेण अपराश्रयणं करोति इत्यर्थः। तत् तस्मात् निखिलं समस्तं कार्य्यं दैवस्य अदृष्टस्य आयत्तम् अधीनमेव अवधार्य्यं, अदृष्टं यस्य यथा तदनुरूपमेव फलं सर्व्वेषां, न तु तद्विपर्य्ययेण इति, यतस्त्वं महाप्रतापोऽपि एवं विपन्न इति भावः। हरिश्चन्द्ररामचन्द्रौ मुख्यौ येषां ते हरिश्चन्द्ररामचन्द्रप्रभृतयः। ऐश्वर्य्येण सम्पदा उपमितः सदृशीकृतः महेन्द्रः वासवः यैः तथाभूताः महीन्द्राः राजानः दैवतन्त्रम् अदृष्टाधीनं दुःखयन्त्रं क्लेशसमूहं, अथवा दैवपरिचालितं दुःखयन्त्रं सम्यक् बहुधा अनुभूय भुक्त्वा पश्चात् दुःखभोगादनन्तरम् अनेककालं बहुसमयान् व्याप्य निजराज्यं स्वीयं साम्राज्यम् अकुर्व्वन् भुक्तवन्तः। तद्वदेव हरिश्चन्द्ररामचन्द्रादिरिव ते यथा दुःखभोगात् परं सुखभोगं कृतवन्तस्तथा इत्यर्थः। कञ्चन कालं कियन्तं कालम् अल्पमेव इत्यर्थः। व्याप्येति शेषः। विरचितः सम्पादितः दैवः दैवतासम्बन्धी समाधिः समाराधनं येन तथाभूतः। गलितः अपगतः आधिः मनोव्यथा यस्य तथाभूतः। अपनीतमानसकष्ट इत्यर्थः। तिष्ठतु, अल्पेन एव कालेन तव कष्टमुक्तिर्भविष्यति इति भावः।

---

বসুমতী অমাত্যগণের সম্মতিক্রমে রাজাকে এই বলিয়া বহু প্রবোধ দিতে লাগিলেন। (ঢ)

वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कञ्चन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत। "भगवन्! मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यमनुभवति। तदहमप्युग्रं तपो विरचय्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्-कारुण्येनेति नियमवन्तं भवन्तं प्राप्नुव"मिति (त)। तत-

(त) ततः वसुमत्यास्तया प्रस्तावानन्तरम्। तपसा तपस्विजनोचितेन प्रभावेण विभ्राजमानं समुद्दीप्यमानम्। वामदेवनामानं वामदेवाख्यम्। निजस्य अभिलाषस्य मनोरथस्य अवाप्तिः लाभः अभिलषितशत्रुपराजयरूपवस्तुप्राप्तिः तस्याः साधनं हेतुभूतं जगाम आससाद, गमेरत्र प्रार्थ्यता। तं वामदेवम्। तेन वामदेवेन कृतम् आतिथ्यम् अतिथिसत्कारः यस्य तथाभूतः, तेन अतिथिजनसमुचितेन व्यवहारेण अभ्यर्थितः इत्यर्थः। तस्मै वामदेवाय कथितं निवेदितं कथ्यं वक्तव्यं येन तथाभूतः दूरीकृतः अपसारितः

মহারাজ! তুমি সমস্ত রাজগণের মধ্যে তেজে ও যৌবনে শ্রেষ্ঠ, তুমিও যে আজ বিন্ধ্যারণ্যে বাস করিতেছ, ইহাতে মনে হয় সম্পদ্ জলবুদ্বুদের তুল্য এবং তড়িল্লতার ন্যায় হঠাৎ উদিত হয় আবার হঠাৎই নষ্ট হইয়া যায়। অতএব সকল কার্য্যই দৈবের অধীন বলিয়া মনে করা উচিত। আরও দেখ, ঐশ্বর্য্যে ইন্দ্র অপেক্ষাও মহত্তর হরিশ্চন্দ্র রামচন্দ্র প্রভৃতি রাজগণও দৈবাধীন দুঃখযন্ত্রে পতিত হইয়া পরে বহুকাল সাম্রাজ্য করিয়াছেন। তোমারও সেইরূপ হইবে। কিছুকাল মানসিক ব্যথা পরিত্যাগ করিয়া দেবতার আরাধনা কর। (ণ)

পরে সকল পরিজন সমভিব্যাহারে রাজহংস স্বীয় কাম্যসিদ্ধির হেতু তপস্বিশ্রেষ্ঠ বামদেবনামক মুনির নিকট গমন করিলেন। তাঁহাকে

स्त्रिकालज्ञस्तपोधनो राजानमवोचत्। "सखे! शरीरकार्श्य-कारिणा तपसाऽलम्। वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं सम्भविष्यति। कञ्चन कालं तूष्णीमास्स्वे"ति। गगनचारिण्या वाण्याऽपि "सत्यमेत"दिति तदेवावाचि, राजाऽपि मुनिवाक्यमङ्गीकृत्यातिष्ठत् (थ) ततः सम्पूर्ण-

श्रमः श्रान्तिः येन यस्मात् वा तस्मिन् तस्य आश्रमे तपोवने। उषित्वा अवस्थाय। मितभाषी नातिप्रचुरवाक्। सोमकुलावतंसः चन्द्रकुलतिलकः। मया भोग्यं ममैव उपभोगोचितम्। अनुभवति उपभुङ्क्ते। तद्वत् मानसारवत् यथा मानसारः तपःप्रभावेण मां पराजितवान् तथा इत्यर्थः। उग्रम् अतिकठोरं तपः विरचय्य कृत्वा तं मानसाररूपम् अरातिं शत्रुम् उन्मूलयिष्यामि निहनिष्यामि, राज्यात् अपक्रामयिष्यामि इति वा। लोकानां शरण्येन आश्रयभूतेन भवतः अतितेजसा यतिप्रवरस्य इत्यर्थः। कारुण्येन दयया। तथाहि भवतः करुणाबलेन प्रवर्त्तिते तपोमार्गे चलन् अहमपि तां शक्तिमुपार्ज्य मानसारकृतस्य निकारस्य शोधनं करिष्यामि इति भावः। इति अस्मै हेतवे नियमवन्तं यतिव्रतमास्थितं भवन्तं प्राप्नुवं, तव शरणं गृहीतवानस्मि इति भावः। इति अभाषत इति पूर्व्वेण अन्वयः।

---

প্রণাম করিলে তিনি রাজার আতিথ্য সম্পাদন করিলেন, তদনন্তর সমস্ত বক্তব্য তাঁহার নিকট বলিয়া কিছুকাল শান্তিনিকেতন তদীয় আশ্রমে বাস করিলেন। তৎপরে মিতভাষী রাজা রাজহংস নিজ রাজ্যাভিলাষী হইয়া মুনিকে বলিতে লাগিলেন, "ভগবন্! মানসার প্রভূত দৈববলে আমাকে পরাজিত করিয়া আমার রাজ্য উপভোগ করিতেছে; সেইরূপ আমিও কঠোর তপস্যা আচরণ করিয়া তোমার করুণায় সেই শত্রু মানসারকে উন্মূলিত করিব, এই জন্য নিয়মতৎপর তোমার নিকট আসিয়াছি। (ত)

পরে ত্রিকালদর্শী তপস্বী বামদেব রাজাকে বলিলেন "সখে! শরীরের

गर्भदिवसा वसुमती शुभमुहूर्त्ते सकललक्षणलक्षितं सुतमसूत। ब्रह्मवर्च्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमति-सुमन्त्र-सुमित्र-सुश्रुतानां मन्त्रिणां प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुताख्या महाभिख्याः सूनवो नवोद्यदिन्दुरुचयश्चिरायुषः समजायन्त। राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलिमनुभवन्नवर्द्धत (द)

(ध) त्रीन् कालान् भूतभविष्यद्वर्त्तमानात्मकान समयप्रवाहान् सर्व्वकालवृत्तान्तान् इति भावः, जानाति यः तथाभूतः, शरीरस्य कार्श्यं कृशता तत्कारिणा देहस्य रसाकर्षणतः स्थौल्यादिनिरासकारिणा, अतिमात्रकष्टसाध्येन इत्यर्थः। तपसा योगादिकर्म्मणा अलं, नास्ति रिपुविजयाय तव तपस्यायाः प्रयोजनम् इति भावः। वसुमतीगर्भे तिष्ठति यः तथाभूतः सकलानां रिपुकुलानां शत्रुनिवहानां मर्द्दनः निषूदनः। नूनं निश्चितम्। एतेन यतिमुखात् तादृशतनयस्य सम्भववर्णनात् वर्णयिष्यमाणस्य राजवाहनस्य गुणस्य सत्यभूतस्य समाशमनं कृतम्। कञ्चन कालम् अल्पं कियन्तमेव समयं व्याप्य अत्यन्तसंयोगे द्वितीया। गगनचारिण्या आकाशभवया वाण्या दैववाण्या इत्यर्थः। एतत् मुनिना कथ्यमानं सत्यम् अवितथं, अवश्यमेव ईदृशस्ते सर्व्वसौभाग्यसम्पन्नः तनयो भविष्यतीति तदैव मुनिकथाश्रवण एव अवाचि उक्तम्। अङ्गीकृत्य गृहीत्वा तत्प्रतिपाद्यमेव अवधार्य्य इत्यर्थः।

----

কৃশতা-সম্পাদক তপস্যার প্রয়োজন নাই, বসুমতীর গর্ভে যে সন্তান অবস্থিতি করিতেছে, সে নিশ্চয়ই সমস্ত রিপুকুল সংহার করিয়া তোমাকে আনন্দিত করিবে। কিছুকাল চুপ করিয়া থাক। দৈববাণীও সেই সময় "ইহা সত্য" এই কথা বলিল। রাজাও মুনির বাক্য স্বীকার করিয়া থাকিলেন। (থ)

পরে গর্ভকাল পূর্ণ হইলে বসুমতী শুভলগ্নে সুলক্ষণযুক্ত একটী কুমার

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कञ्चित् नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्यावाचि,—

(द) सम्पूर्णाः परिपूर्णाः गर्भदिवसाः यस्याः सा पूर्णगर्भा इत्यर्थः। शुभमुहूर्त्ते मङ्गलमयक्षणे सकललक्षणैः सामुद्रिकादुक्तसमस्तशुभलक्षणैः लक्षितं समन्वितं सुतं पुत्रम् असूत प्रसूतवती। सम्पूर्णेत्यादिना गर्भस्थस्य परिपूर्णदेहताप्रत्यायनात् सुतस्य सर्व्वेष्वङ्गेषु वृटिलेशस्यापि अभावो व्यज्यते।

ब्रह्मवर्च्चसेन ब्रह्मचर्य्यतेजसः प्रभावेण तुलितः सदृशीकृतः वेधाः ब्रह्मा येन तथाभूतं ब्रह्मणोऽपि समधिकतेजसम् इत्यर्थः। पुरोधसं पुरोहितं पुरस्कृत्य अग्रे कृत्वा कृत्यवित् कर्त्तव्यविषयाभिज्ञः यथाकालं कार्य्यकारी इत्यर्थः। जातस्य नवप्रसूतस्य बालस्य यः संस्कारः शास्त्रोक्तक्रियाविशेषः तेन। जातकर्म्माख्यसंस्कारेण वा बालानाम् अलङ्कारः बालजनोचितं भूषणं तेन च। राजवाहनेति नाम यस्य तथाभूतं व्यधत्त तं राजवाहननाम्ना समाख्यातवान् इत्यर्थः। महती विपुला अभिख्या सौन्दर्य्यं येषां तथाभूताः सुशोभना इत्यर्थः। नवः नूतनः उद्यन् समुद्गच्छन् यः इन्दुः चन्द्रः तस्य रुचिरिव रुचिर्येषां तथाभूता अत्याह्लादकरेण शरीरसौन्दर्य्येण समन्विताः इत्यर्थः। चिरायुषः दीर्घायुष्काः। आत्मनः मित्रैः बन्धुभूतैः मन्त्रिपुत्रैः सह बालकेलिं बालकजनोचितां क्रीडां धूलिखेलादिकमित्यर्थः। अनुभवन् कुर्व्वन् अवर्द्धत क्रमेण वृद्धिं प्राप। नवोद्यदित्यादौ लुप्तोपमा। तुलितवेधसमिति उपमा मतान्तरे प्रतीपम्।

---

প্রসব করিলেন, কার্য্যজ্ঞ মহীপাল ব্রহ্মতেজে ব্রহ্মা অপেক্ষা প্রশস্ত পুরোহিতকে অগ্রে করিয়া সুকুমার কুমারের জাতসংস্কার সম্পাদন করিলেন এবং তাহাকে বালকোচিতভূষণে সজ্জিত করিয়া রাজবাহন নামে অভিহিত করিলেন। সেই সময়েই সুমতি সুমন্ত্র সুমিত্র ও সুশ্রুত এই মন্ত্রিচতুষ্টয়ের প্রমতি মিত্রগুপ্ত মন্ত্রগুপ্ত ও বিশ্রুত নামক নবোদিত চন্দ্রবৎ রমণীয় রুচিসম্পন্ন সুগঠিতদেহ দীর্ঘায়ুঃ পুত্রচতুষ্টয় জন্মগ্রহণ করিল। রাজবাহন স্বীয় মিত্র মন্ত্রিপুত্রগণের সহিত বাল্যক্রীড়ায় ক্রমশঃ বর্দ্ধিত হইতে লাগিলেন (দ)।

"भूवल्लभ! कुशसमिदानयनाय वनं गतेन मया काचिदश-रण्या व्यक्तकार्पण्या अश्रु मुञ्चन्ती वनिता विलोकिता। 'निर्जने वने किंनिमित्तं रुद्यते त्वये'ति पृष्टा सा करसरोरुहै-रश्रु प्रमृज्य सगद्गदं मामवोचत्। लावण्यजितपुष्पसायके मिथिलानायके कीर्त्तिव्याप्तसुधर्म्मणि निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्त्रदारसमन्विते पुष्पपुरमुपेत्य कञ्चन कालमधिवसति, समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात् (ध)। तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये

(ध) अथ कियद्दिवसानन्तरम्। रसेन अनुरागभरेण राजलक्षणैः राज्ञोचितैः शुभचिह्नैः विराजितं शोभितावयवं नयनानन्दकरं नेत्रप्रीतिजनकम्। राज्ञे राजहंसाय। समर्प्य सम्प्रदाय। अवाचि उक्तं वक्ष्यमाणवचनमिति शेषः। भूवल्लभ! पृथिवीश्वर, कुशानां समिधां च यज्ञक्रियोपयोगिवस्तूनाम् आनयनाय आहरणार्थम्। अशरण्या आश्रयहीना एकाकिनीत्यर्थः। व्यक्तं परिस्फुटं कार्पण्यं दीनभावः यस्याः तथाभूता प्रकाशितदैन्या। काचित् वनिता इत्यस्य विशेषणम्। विलोकिता दृष्टा मयेति शेषः।

পরে একদিন একজন তাপস অনুরাগসহকারে রাজলক্ষণান্বিত নেত্রা-নন্দপ্রদ একটী সুকুমার কুমারকে রাজার নিকট অর্পণ করিয়া বলিলেন, হে মহারাজ! আমি কুশসমিধ্ আনয়ন করিবার জন্য বনে গিয়াছিলাম, তথায় একটী রমণীকে কাতরভাবে রোদন করিতে দেখিলাম। "নির্জ্জন বনে কি জন্য তুমি রোদন করিতেছ" ইহা জিজ্ঞাসা করিলে সেই রমণী অঙ্গুলি দ্বারা অশ্রুজল মার্জ্জনা করিয়া গদগদভাবে বলিল, "যে মহারাজের কীর্ত্তিসমূহ দেবতাদিগের সভায়ও গীত হয়, কামদেব অপেক্ষা অধিক সৌন্দর্য্যসম্পন্ন মিথিলাধিপতি সেই প্রহারবর্ম্মা স্বীয় বন্ধু মগধরাজ রাজহংসের রাণী বসুমতীর সীমন্তোন্নয়ন মহোৎসবের জন্য পুত্রপরিবারাদি

वर्त्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले सति विदेहे विदेहेश्वरः प्रहारवर्म्मा जयवता रिपुणा अभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत् (न)।

निर्जने जनसमागमवर्ज्जिते वने। किन्निमित्तं केन हेतुना त्वया रुद्यते इति एतद्वचनार्थं पृष्टा सा वनिता। करसरोरुहैः करकमलैः करयोर्द्वयोरपि लावण्यातिरेकात् गौरवद्योतकं बहुत्वम्। सगद्गदं जडितवचनं यथा तथा अवोचदिति क्रियाविशेषणम्। लावण्येन सौन्दर्य्येण जितः पराभूतः पुष्पसायकः कुसुमायुधः येन तथाभूते, यस्य अतिकोमलं पुष्पमेव प्रहरणभूतं तस्य कोमलत्वादिकमनुकर्त्तुमपि सिध्येत्, तस्यापि पराजयकर्त्तायमिति सुमहत् सौन्दर्य्यमस्य द्योत्यते। कीर्त्त्या यशसा व्याप्ता सुधर्मा देवसभा येन तस्मिन् देवसभायामपि गीतकीर्त्तौ इत्यर्थः। निजसुहृदः स्वीयमित्रस्य मगधराजस्य राजहंसस्य सीमन्तिन्याः वनितायाः सीमन्तमहोत्सवाय सीमन्तोन्नयनसंस्काररूपानन्दव्यापाराय पत्रैः दारैश्च समन्विते सहिते कञ्चन कालम् अधिवसति सति, भावे सप्तमी। समाराधितः आराधनया सन्तोषितः गिरीशः महादेवो येन तथाभूतः, योद्धुं मगधराजम् अभ्यगात् प्राप,॰ युधेरकर्म्मकतया एवमन्वयः कार्य्यः।

(न) प्रख्यातयोः वीरवृत्तं सुप्रसिद्धयोः एतयोः मगधराजमालवराजयोः अमर्त्त्यं प्रबलं सख्ये नानाविधे वा युद्धे वर्त्तमाने प्रक्रान्ते सति। सुहृदः बन्धोः मगधराजस्य साहाय्यकं सहायतां कुर्व्वाणः। निजबले स्वसैन्ये विदेहे विगतः देहः यस्य तथाभूते क्षीणदेहे मृते वा इत्यर्थः। जयवता विजयिना रिपुणा मालवराजेन अभिगृह्य आक्रमणेन गृहीत्वा कारुण्येन कृपया पुण्येन स्वीयशुभादृष्टबलेन विसृष्टः

সহ পুষ্পপুরে আগমন করিয়া কিছুকাল অবস্থান করিতেছেন, এমন সময়ে মালবাধিপতি মানসার শিবের আরাধনা করিয়া মগধরাজের সহিত যুদ্ধ করিতে আসিলেন। উক্ত প্রসিদ্ধ বীরদ্বয়ের তুমুল সংগ্রাম উপস্থিত হইলে সুহৃৎসাহায্যকারী বিদেহরাজের স্বীয় সৈন্যসমূহ ক্ষয় প্রাপ্ত হইল। পরে তিনি জয়ী বিপক্ষকর্ত্তৃক গৃহীত হইলেন এবং শুভাদৃষ্টবশে দয়া

ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स महानिरोधः पलायिष्ट (प)। तदीयार्भकयोर्यमजयोर्धात्रीभावेन परिकल्पिताहं सह दुहित्रापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव (फ)।

मालवेन परित्यक्तः, हतावशेषेण निहतेभ्योऽवशिष्टेन शून्येन अस्त्रादिशून्येन सैन्येन सह स्वपुरं निजदेशं गमनं प्रस्थानम् अकरोत्।

(प) ततः तस्य स्वपुरप्रस्थानानन्तरं दुर्गेण अतिदुःखगम्येन वनमार्गेण काननान्तर्वर्त्तिना पथा गच्छन्। अधिकं बलं यस्य तथाभूतेन अतिशयितशक्तिशालिना, स्वबलापेक्षया प्रभूतसहायसमन्वितेन शबरबलेन किरातजातीयबलसमूहेन रभसात् अतिवेगेन सहसा इत्यर्थः। अभिहन्यमानः आस्कन्द्यमानः। मूलैः बलैः प्रधानपरिवारैः अभिरक्षिताः कृतपरित्राणाः अवरोधाः शुद्धान्तस्त्रियः यस्य तथाभूतः, महान् उत्कटः निरोधः शत्रुकर्त्तृकाक्रमणं यस्य तथाभूतः। शत्रुभिः सतराम् आस्कन्दनेन अभिभूत इत्यर्थः। स विदेहेश्वरः पलायिष्ट पलायनमकरोत्।

(फ) तदीययोः अर्भकयोः तस्य बालकयोः यमजयोः एकगर्भोषितयोः धात्रीभावेन परिपालनाय मातृरूपेण परिकल्पिता निर्द्दिष्टा अहं मम दुहिता कन्यापि तीव्रा अति

---

পরবশ হইয়া শত্রু তাহাকে মুক্ত করিয়া দিল, তিনিও হতাবশিষ্ট নিরস্ত্র সৈন্য সমভিব্যাহারে নিজপুরে যাইবার উদ্যোগ করিলেন। (ধ—ন)

পরে যখন তিনি দুর্গম বনপথ ধরিয়া যাইতেছিলেন, তখন প্রবল শবরসৈন্য তাঁহাকে আক্রমণ করিল, প্রধান বলসমূহ তাঁহার অন্তঃপুরিকাগণকে রক্ষা করিলে এবং স্বয়ং অপরাপর সৈন্যে বেষ্টিত হইয়া পলায়ন করিলেন। (প)

রাজা প্রহারবর্ম্মার দুইটী যমজ পুত্র, আমি ও আমার কন্যা তাহাদিগের ধাত্রীরূপে নির্দ্দিষ্ট ছিলাম, রাজা অতিবেগে গমন করায় আমরা তাঁহার অনুগমনে অশক্ত হইয়া বিচ্ছিন্ন হইয়া পড়িলাম। (ফ)

तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मा-माघ्रातुमागतवान्। भीताऽहमुदग्रग्रावणि स्खलन्ती पर्य्य-पतम् (व)। मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोड़मभ्यलीयत (भ)। तच्छवाकर्षिणो व्याघ्रस्य प्राणान् बाणो बाणासनयन्त्रमुक्तोऽपाहरत्। विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत (म)।

वं गवती गतिः गमनं यस्य तम् अतिद्रुतगामिनं भूपतिं विदेहनाथम् अनुगन्तुं तस्य पश्चात् सहैव गन्तुम् अचमे अशक्ते अभूव जातवत्यौ। तस्मात् भ्रष्टे आवाम् अन्यसहायशून्ये जाते इति भावः।

(व) तत्र वनान्तरे विवृतवदनः विस्फारिताननः। रूपी मूर्त्तिमान् कोपः क्रोधः इव व्याघ्रः शार्द्दूलः शीघ्रं सत्वरं मां आघ्रातुं भक्षयितुं, धातूनामनेकार्थत्वात् उपसर्गबलाद्वा तथार्थता, उदग्रे उच्चतमे ग्रावणि प्रस्तरे स्खलन्ती स्खलितचरणा सती पर्य्यपतम् पतिता अभवम्।

(भ) मदीयात् पाणेः करात् भ्रष्टः पतितः बालकः शिशुः सः। कपिलाशवस्य मृतगोदेहस्य अस्थिपञ्जरमात्रेण अवशिष्टस्य इत्यर्थः। क्रोडं क्रोडदेशम् अभिलक्षीकृत्य अलीयत लीनः बभूव तत्रैव प्रच्छन्नदेहो जात इत्यर्थः।

(म) तं शवं गोदेहम् आकर्षति यः तस्य अमर्षिणः क्रोधयुक्तस्य भक्षणीयस्य, वस्तुनः तदनन्तरं लीयमानत्वात् तदुपरि क्रोधातिरेकः, तस्यैव तद्गोपनकारितया सम्भावनादिति भावः। बाणासनं शरासनं धनुः तदेव यन्त्रं तस्मात् मुक्तः बाणः शरः प्राणान्

তথায় মূর্ত্তিমান্ ক্রোধের ন্যায় একটী ব্যাঘ্র মুখ ব্যাদান করিয়া অবিলম্বে আমাকে উদরসাৎ করিতে অগ্রসর হইল, আমি ব্যাঘ্রের ভয়ে ভীত হইয়া উচ্চ পাষাণ ভূমিতে উঠিতে গিয়া স্খলিতপদে (পা ফস্‌কাইয়া) পড়িয়া গেলাম।

বালক আমার হস্ত হইতে স্খলিত হইয়া একটি মৃত গোপঞ্জরের অভ্যন্তরে অদৃশ্য হইল। (ব—ভ)

कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने। साहं मोहं गता केनापि कृपालुना गोपालेन स्वकुटीरमवेश्य विरोपितव्रणाऽभवम्। ततः स्वस्थीभूय भूयः क्ष्माभर्त्तुरन्तिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि इत्यभिदधाना 'एकाकिन्यपि स्वामिनं गमिष्यामि" इत्युक्त्वा सा तदैव निरगात् (य).

व्याघ्रस्य जीवनम् अपाहरत् अपहृतवत् तत्क्षणादेव कुतश्चिदुपगत. धनुर्म्मुक्तः बाणः तं विनाशयामास। विलोलाः चञ्चलाः इतस्ततो विक्षिप्ताः इत्यर्थः। अलकाः चूर्णकुन्तलाः यस्य तथाभूतः बालकः शिशुरसौ। शबरैः किरातगणैः पूर्वं विदेहराजमास्कन्दित-वर्त्मिगितार्थः। कुत्रचित् अस्मदज्ञातं स्थानान्तरं उपानीयत।

(य) अपरं तस्मात् बालकादन्यं कुमारं यमजयोरेकतरम् इत्यर्थः। उद्वहन्ती धारयन्ती। सा ईदृशीमवस्थामापन्ना अतिकष्टदशायां पतिता इत्यर्थः। अहं मोहं मूर्च्छां गता प्राप्ता। कृपालुना सदयस्वभावेन गोपालेन स्वकुटीरं निजोटजम् आवेश्य प्रापय्य विरोपितव्रणा उपशमितक्षतदोषा अभवम्। स गोपालः मम यथोचितां शुश्रूषां विधाय सर्व्वमस्वास्थ्यं निवारितवान् इति भावः।

स्वस्थीभूय स्वभावस्थतां प्रपद्य। क्ष्माभर्त्तुः पृथिवीपालस्य मिथिलानाथस्य अन्तिकं समीपम् उपतिष्ठासुः प्राप्तुमिच्छुः। असहायतया सहायान्तररहितेन दुहितुः कन्यायाः अनभिज्ञाततया अविदिततया च व्याकुलीभवामि अतिमात्रम् आकुलतां प्राप्नोमि इति अभिदधाना कथयन्ती एकाकिनी असहायापि स्वामिनं विदेहनाथं गमिष्यामि इत्युक्त्वा सा वनिता तदैव तस्मिन् क्षणे कालविलम्बम् अकृत्वैव निरगात् प्रतस्थे।

---

পরে ব্যাঘ্র অতি ক্রোধভরে সেই গো-পঞ্জর আকর্ষণ করিতেছে এমন সময়ে ধনুর্ম্মুক্ত একটী বাণ তাহার জীবন অপহরণ করিল।

বিস্রস্ত কেশগুচ্ছে শোভমান বালকটীকে শবরসম্প্রদায় কোথায় লইয়া

अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवन् तदन्वयाङ्कुरं कुमारमन्विष्यन् तदेकं चण्डिकामन्दिरं सुन्दरं प्रागाम्। तत्र सन्ततमेवंविधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराताः 'महीरुहशाखावलम्बितमेनमसिलतया वा, सैकततले खननिक्षिप्तचरणं लक्ष्यीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा संहनिष्याम" इति भाषमाणा मया समभ्यभाष्यन्त (र)।

(र) विपत् अकाण्डे किराताभिभवजन्यविपत्तिः निमित्तं कारणं यस्य तथाभूतं विषादं दुःखम् अनुभवन्। तस्य यः अन्वयः वंशः तस्य अङ्कुरं प्ररोहं कुमारम् अन्विष्यन्। चण्डिकायाः कात्यायन्याः मन्दिरम्। प्रागाम् लब्धवान्। तत्र चण्डिकामन्दिरे सन्ततं सर्व्वकालम् एवंविधविजयस्य अचिरजातविजयवत् विजयस्य इत्यर्थः। सिद्धये देवतायाः चण्डिकायाः उपहारं बलिं करिष्यन्तः महीरुहस्य वृक्षस्य शाखायां विलम्बितम् एनं बालकम् असिलतया खड्गलतया सैकततले बालुकामध्ये खनने गर्त्ते निक्षिप्तौ प्रोथितौ चरणौ पादौ यस्य तथाभूतम् एनमिति शेषः। लक्ष्यीकृता अभिलक्ष्य शितशरनिकरेण सुधारसायकसमूहेन। अनेकचरणैः बहुचरणान्वितैः

গেল এবং আমার কন্যা অপর কুমারকে লইয়া কোথায় গেল, আমি তাহা জানি না। সেই অবস্থায় আমি মূর্চ্ছিত হইয়া পড়িলাম। একজন দয়ালু গোপালক আমাকে তাহার কুটীরে লইয়া গিয়া আমার ক্ষতগুলি ঔষধ দ্বারা আরাম করিলেন।

পরে আমি সুস্থ হইয়া পুনরায় বিদেহেশ্বরের নিকট উপস্থিত হইবার ইচ্ছা করিলাম, কিন্তু আমি অসহায় এবং আমার কন্যা কোথায় তাহা জানি না, এইজন্য অত্যন্ত ব্যাকুল হইতেছি ; তথাপি একাকিনীই আমি মহারাজের নিকট যাইব এই বলিয়া সে তখনই নির্গত হইল। (য)

"ननु किरातोत्तमाः! घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं, मम पुत्रकं क्वचिच्छायायां निक्षिप्य मार्गान्वेषणाय किञ्चिदन्तरमगच्छम् (ल)। स कुत्र गतः, केन वा गृहीतः, परीक्ष्यापि न वीक्ष्यते। तन्मुखावलोकनसुखेन विना अनेकानि दिनान्यतीतानि। किं करोमि? क्व गच्छामि? भवद्भिर्न किमदर्शी"ति। "द्विजोत्तम! कश्चिदत्र तिष्ठति। किमेष तव नन्दनः? सत्यमेव। तदेनं गृहाण" इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन् (व)। तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य

अत्यन्तभीततया कथञ्चित् प्राणान् रक्षितुं सुबहुचेष्टया पादक्षेपणैः। पलायमानम् अपसरन्तम्। इति उक्तरूप भाषमाणाः कथयन्तः। समभ्यभाष्यन्त कथिताः।

(ल) किरातोत्तमाः शबरश्रेष्ठाः! घोरप्रचारे सुदुर्गमे कान्तारे स्खलितपथः स्खलितमार्गः, भ्रान्तिवशात् प्रकृतमार्गं परित्यज्य अन्यं पन्थानम् आश्रित इत्यर्थः। स्थविरभूसुरः वृद्धब्राह्मणः। पुत्रकं क्षुद्रबालकम्। निक्षिप्य संस्थाप्य। मार्गस्य पथः आश्रयणीयस्य अन्वेषणाय किञ्चित् अन्तरं दूरम् अगच्छम्।

(व) सः मम पुत्रकः, कुत्र कस्मिन् स्थाने गतः, केन वा जनेन गृहीतः, परीक्ष्य विशेषेण अन्विष्यापि न वीक्ष्यते दृश्यते। तस्य पुत्रकस्य मुखावलोकनात् मुखदर्शनात् जातं यत् सुखं तेन विना। भवद्भिः किं न अदर्शि आलोकितः स इति शेषः। द्विजोत्तम, ब्राह्मणश्रेष्ठ, अत्र अस्मिन् स्थाने कश्चित् बालकः तिष्ठति। किम् एषः

আমিও তোমার মিত্র বিদেহরাজের এই বিপদে দুঃখ অনুভব করত তদীয় বংশধর কুমারের অন্বেষণ করিতে করিতে একটী চণ্ডিকামন্দির প্রাপ্ত হইলাম। সেইস্থানে নিরন্তর এইরূপ স্বীয় পক্ষের বিজয়লাভার্থ কুমারকে দেবতার নিকট বলি দিবার জন্য ব্যাধগণের মধ্যে কেহ বলিতেছে,—ইহাকে বৃক্ষের শাখায় বাঁধিয়া তরবারি দ্বারা বধ করি, কেহ

शिशिरोदकादिनोपचारेणाश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एन[व]मायुष्मन्तं पितृरूपो भवानभिरक्षता'दिति (श)।

दृश्यमानः बालकः तव नन्दनः पुत्रः? सत्यमेव यथार्थमेव अयं बाल एव तव पुत्र इति यथार्थं वयं मन्यामहे इति भावः। तस्मात् एनं तव नन्दनं गृहाण। दैवस्य अदृष्टस्य आनुकूल्येन अनुकूलदैववशात् इत्यर्थः। तं बालकं मह्यं व्यतरन् प्रदत्तवन्तः, ते किराता इति शेषः।

(श) तेभ्यः तान् किरातानुद्दिश्य, दत्ता विसृष्टा आशीः आशीर्व्वादः येन तथाभूतः अहं, बालकं किरातैर्व्विसृष्टं तं राजकुमारं, अङ्गीकृत्य आदाय, शिशिरोदकादिना शीतलजलादिरूपेण उपचारेण उपकरणेन, आश्वास्य तस्य मोहमपनीय इत्यर्थः। निःशङ्कं शङ्काशून्यं भवतः अङ्कं क्रोडदेशम् आनीतवानस्मि। तथाहि इदानीं एषः नृनं

---

বলিতেছে,—বালুকার মধ্যে ইহার চরণ প্রোথিত করিয়া (পুতিয়া) শাণিত শরদ্বারা বধ করি, আর কেহ কেহ বলিতেছে—যে, এই বালক অতি দ্রুতবেগে যাইতে থাকিবে, এই অবস্থায় কুক্কুরশাবকগণ গিয়া ইহাকে দংশন করিতে থাকিবে এইরূপেই ইহাকে মারিব। তখন আমি তাহাদিগকে বলিলাম,—হে শ্রেষ্ঠ কিরাতগণ! আমি বৃদ্ধ ব্রাহ্মণ, এই দুর্গম অরণ্যে পথ হারাইয়াছি। আমার পুত্রটীকে কোনও বৃক্ষের ছায়ায় রাখিয়া পথ খুঁজিতে কিছুদূরে গিয়াছিলাম, সে কোথায় গিয়াছে, কেইবা তাহাকে লইয়া গিয়াছে, তাহা বহু অন্বেষণ করিয়াও বুঝিতেছি না; বহুদিন হইল তাহার মুখ আমি দেখি নাই, এজন্য অসীম কষ্ট অনুভব করিতেছি। কি করি? কোথায় যাই? তোমারা কি তাহাকে দেখ নাই? হে ব্রাহ্মণ! এইখানে একটী বালক আছে, এই বালকটীই কি তোমার পুত্র? আমাদিগের বোধ হয় তাহাই হইবে, তবে ইহাকে গ্রহণ কর, এই বলিয়া তাহারা শুভাদৃষ্টবশে সেই কুমারকে আমার নিকট দিল (র-ল-ব)।

**जनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढ़वसतिमकरवम्। ततः काननभूमिषु भवन्तमन्वेष्टुमुद्युक्तं मां परममित्रं बन्धुपालो निशम्यावदत्—"सकलं धरणीतलमपारमन्वेष्टमक्षमो भवान् मनोग्लानिं विहाय तूष्णीं तिष्ठतु। भवन्नायकावलोकनकारणं शुभशकुनं निरीक्ष्य कथयिष्यामि" इति (ज)। तन्नपितामृताश्वासितहृदयोऽहमनुदिनं तदुप-**

वणिक्पत्रेण सह विरचितसौहृदः सम्पादितमैत्रीकः। उपाविशम् आश्रितः। सकलगुणानां निलयेन आश्रयेण। मालवनाथस्य मानसारस्य दर्शनं साक्षात्कारं विधाय, तस्य मालवनाथस्य अनुमत्या आदेशेन गूढवसतिं गुप्तावस्थितिं अकरवम्। तथाहि अहं यत् मगधेश्वरस्य भवत्पितुः पक्षाश्रित इति कथमपि यथा न प्रकाशेत तथैव अवस्थित इति भावः। भवन्तम् अन्वेष्टुम् उद्युक्तं निशम्य इत्यन्वयः। सकलं समग्रम् अपारम् असीमं धरणीतलं पृथ्वीतलम्। मनोग्लानिं मानसिकं विकारम्। तूष्णीं, प्रवर्त्तिते कर्म्मणि प्रवृत्तिशून्यः सन् इत्यर्थः। भवतः नायकस्य अधिपतेः राजवाहनस्य अवलोकनकारणं दर्शनहेतुभूतं शुभशकुनं शुभचिह्नं निरीक्ष्य कथयिष्यामि, शुभशकुनदर्शनानन्तरमेव कार्य्यसाफल्यमवश्यं ज्ञात्वा तत्र प्रवृत्तिः श्रेयसी, अन्यथा वृथा परिश्रमी वा भवतः स्यात् इति भावः।

---

সেই ধন থলের মধ্যে পূরিয়া (ভরিয়া) বৃষদ্বারা ধীরে ধীরে ঐ বণিক্-পল্লীতে লইয়া গেলাম। (ছ)

সেই বণিক্‌পল্লীর অধিপতি চন্দ্রপাল নামক বণিক্‌পুত্রের সহিত সৌহার্দ্দ করিয়া উহার সহিতই উজ্জয়িনীতে বাস করিতে লাগিলাম। আমার পিতা ও মাতাকে সেই পুরীতে লইয়া গিয়া সর্ব্বগুণাধার চন্দ্রপালের পিতা বন্ধুপাল নামক বণিকের সাহচর্য্যে মালবেশ্বরের সাক্ষাৎ-কার করিয়া তাঁহার অনুমতিক্রমে গূঢ় ভাবে নগরে বাস করিতে লাগিলাম।

कण्ठवर्त्ती कदाचिदिन्दुमुखीं नवयौवनावलीढ़ावयवां नयनचन्द्रिकां बालचन्द्रिकां नाम तरुणीरत्नं वणिङ्मन्दिरलक्ष्मीं मूर्त्तामिवावलोक्य तदीयलावण्यावधूतधीरभावो लतान्तबाणबाणलक्ष्यतामयासिषम् (भ्क)। चकित-बालकुरङ्गलोचना

(भ्क) तस्य लपितेन वचनेन एव अमृतेन आश्वासितम् आश्वासयुक्तं कृतं हृदयं येन तथाभूतः। वाक्ये अमृतत्वारोपाद् रूपकम्। तस्य चन्द्रपालस्य बन्धोः पितुः बन्धुपालस्य उपकण्ठवर्त्ती समीपस्थितः। इन्दुः चन्द्र इव मुखं यस्याः ताम् उपमा समासगता। अतिसुन्दरानना नवेन अचिरोद्गतेन यौवनेन अवलीढाः समाश्रिताः अवयवाः अङ्गानि यस्याः ताम्। नयनचन्द्रिकां नेत्राह्लादकरीं मूर्त्तां मूर्त्तिमतीं वणिजः मन्दिरस्य लक्ष्मीं कमलामिव। बालचन्द्रिकायां लक्ष्मीत्वसम्भावनाया गम्यत्वाद् गम्योत्प्रेक्षा। तदीयेन लावण्येन सौन्दर्य्यातिशयेन अवधूतः अपनीतः धीरभावः धैर्य्यं यस्य तथाभूतः तदीयलावण्यदर्शनादुद्भूतमनोविकार इत्यर्थः। लतान्तानि पुष्पाणि एव बाणाः यस्य तस्य कामस्य बाणानां सायकानां लक्ष्यतां शरव्यताम् अयासिषम्, तद्दर्शनेन सहसैवाहं कामाधीनमानसो जात इति भावः।

---

পরে বন্ধুপাল কাননে তোমার অন্বেষণার্থ আমাকে উদ্‌যুক্ত জানিয়া প্রগাঢ় মিত্রতাবশতঃ বলিলেন, 'তুমি তোমার বন্ধুর অন্বেষণার্থ সমগ্র পৃথিবী ভ্রমণ করিতে সমর্থ হইবে না, (অথচ তোমার বন্ধু কোথায় আছেন তাহারও নির্দ্ধারণ নাই) অতএব মানসিক দুঃখ পরিত্যাগ করিয়া নির্লিপ্তভাবে কিছু কাল অবস্থান কর, আমি শুভ-চিহ্নদর্শনে তোমার প্রভুর সাক্ষাৎ পাইবার সময়াদি বুঝিয়া বলিব। আমি তাঁহার বাক্যামৃতপানে আশ্বস্ত হইয়া সর্ব্বদা তাঁহারই নিকটে অবস্থান করিতে লাগিলাম। একদা বালচন্দ্রিকা নামে একটী বণিক্-কন্যাকে দেখিতে পাইলাম, তাহার সমস্ত শরীরে যৌবনের নবোদিত চিহ্ন, তাহার মুখখানি

सापि कुसुमसायक-सायकायमानेन कटाक्षवीक्षणेन मामसकृन्निरीक्ष्य मन्दमारुतान्दोलिता लतेवाकम्पत। मम साभिमुखैः समाकुञ्चितै रागलज्जान्तरालवर्त्तिभिः साङ्गभङ्गिभिरीक्षणविशेषै र्निजमनोवृत्तिमकथयत् (ञ)।

(ञ) चकितः अकस्मादुद्गतत्रासः यः बालकुरङ्गः मृगशावकः तस्य लोचनमिव लोचनं यस्याः सा चकितहरिणशावकप्रेक्षणा इत्यर्थः। समासगता उपमा। सापि बालचन्द्रिकापि कुसुमसायकस्य कामस्य सायकायमानेन बाणसदृशेन कटाक्षवीक्षणेन सकटाक्षदृष्ट्या। आर्थिप्रत्ययगा उपमा असकृत् वारं वारम्। मन्दमारुतेन मृदुलानिलेन आन्दोलिता चञ्चलीकृता लता इव अकम्पत, सात्त्विकभावोदयेन सा मन्दं कम्पिताङ्गी जाता इति भावः। उपमा स्पष्टा। सा बालचन्द्रिका मम अभिमुखैः सम्मुखगतैः समाकुञ्चितैः सङ्कुचितैः रागस्य अनुरागस्य लज्जायाः कुमारीजनसुलभायाः त्रपायाः अन्तराले सन्धिस्थले वर्त्तन्ते यानि तैः अङ्गभङ्गिभिः सह वर्त्तमानैः ईक्षणविशेषैः विलक्षणदृष्टिभिः निजमनोवृत्तिं स्वीयमनोभावम् अकथयत्।

চাঁদের মত সুন্দর, দেখিয়া মনে হইল বুঝি তিনিই বণিকের গৃহস্থিতা লক্ষ্মী, তাঁহাকে দেখিয়া আমার ধৈর্য্য সম্পূর্ণ বিলুপ্ত হইল, কামের শরাঘাতে হৃদয় জর্জ্জরিত হইয়া উঠিল। (জ ঝ)

চকিত-হরিণ-নয়না সেই বণিক্‌কন্যা, মদনের শরতুল্য কটাক্ষ আমার প্রতি বার বার ক্ষেপ করিতে লাগিল এবং নিজেও কামজ সাত্ত্বিক ভাবোদয়ে মারুতান্দোলিত লতিকার মত কাঁপিতে লাগিলেন।

আমার সম্মুখে অবস্থিতা সেই বালিকা অনুরাগ ও লজ্জার অন্তরালে সমুৎপন্ন অঙ্গভঙ্গী ও কটাক্ষবীক্ষণে তাহার সমস্ত মনোগত অবস্থা নিবেদন করিল। নিপুণ ব্যবহারে বালিকার অনুরাগ প্রবল জানিয়া তাহার সহিত মিলনের উপায় চিন্তা করিতে লাগিলাম। অন্য একদিন বন্ধুপাল

चतुरगूढ़चेष्टाभिरस्या मनोऽनुरागं सम्यग् ज्ञात्वा सुखसङ्गमोपायमचिन्तयम्। अन्यदा बन्धुपालः शकुनैर्भवद्गतिं प्रेक्षिष्यमाणः पुरोपान्तविहारवनं मया सहोपेत्य कस्मिंश्चिन्महीरुहे शकुन्तवचनानि शृण्वन्नतिष्ठत्। अहमुत्कलिकाविनोदपरायणो वनान्ते परिभ्रमन् सरोवरतीरे चिन्ताक्रान्तचित्तां दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलोकयम् (ट)।

(ट) चतुराभिः नैपुण्येन आरचिताभिः गूढाभिः सुगुप्ताभिः बन्धुचेष्टया गोपयितुम् इष्यमाणाभिरित्यर्थः। चेष्टाभिः यत्नविशेषैः अस्याः बालचन्द्रिकायाः, मनसः अनुरागं ममोपरि पर्यासक्तिम्। सुखेन अनायासेन सङ्गमस्य उभयोः समागमस्य उपायं गतिम् अचिन्तयं, कथमनया रहसि सङ्गतो भवेयमिति भावनां कृतवान् इति भावः। शकुनैः शुभचिह्नैः भवतः गतिं लाभोपायं समागमं वा प्रेक्षिष्यमाणः द्रष्टुमाकाङ्क्षी, पुरोपान्ते नगरोपकण्ठे स्थितं विहारवनम्। शकुन्तानां पक्षिणां वचनानि शब्दान् शृण्वन् अतिष्ठत्। उत्कलिकायाः विरहोत्कण्ठायाः विनोदनपरायणः अपनोदनाभिलाषी, चिन्तया आक्रान्तम् अभिभूतं चित्तं यस्याः ताम्। दीनवदनां कातरमुखीम्। मम मनोरथस्य अभिलाषस्य एकां भूमिम् आश्रयीभूतां, मन्मनसः परं काम्यभूतं वस्तु बालचन्द्रिकां व्यलोकयम् दृष्टवान्।

---

শুভশকুনদর্শনে আপনার সমাগম জানিবার অভিলাষে নগরের নিকটবর্ত্তী বিহার কাননে আমার সহিত যাইয়া এক বৃক্ষের উপর পক্ষীর শব্দ শ্রবণ করিতে লাগিলেন।

আমি উৎকণ্ঠাবিনোদনাভিলাষে বনপ্রান্তে ভ্রমণ করিতে করিতে সরোবরের তীরদেশে উপনীত হইয়া আমার অভিলাষের বিষয়ীভূতা বালচন্দ্রিকাকে দেখিতে পাইলাম, তখন তাহার চিত্ত চিন্তাভারে আক্রান্ত এবং তাহার আনন দীনভাবে পরিপূর্ণ। (ঞ-ট)

तस्याःससम्भ्रमप्रेमलज्जाकौतुकमनोरमं लीलाविलोकनसुखमनुभवन् सुदत्या वदनारविन्दे विषण्णभावं मदनकदनखेदानुभूतं ज्ञात्वा तन्निमित्तं ज्ञास्यन् लीलया तदुपकण्ठमुपेत्य अवोचम्, 'सुमुखि ! तव मुखारविन्दस्य दैन्यकारणं कथय' इति। सा रहस्यसञ्जातविश्रम्भतया विहाय लज्जाभये शनैरभाषत—"सौम्य ! मानसारो मालवाधीशो वार्द्धकास्य प्रबलतया निजनन्दनं दर्पसारमुज्जयिन्यामभ्यषिञ्चत् (ठ)। स कुमारः सप्त-

(ठ) ससम्भ्रमं सम्भ्रमसहकृतं यत् प्रेम शृङ्गारभावः लज्जा शृङ्गाररसस्य अनुकूलो भावविशेषः कौतुकम् उत्कण्ठा च तैः मनोरमं मनोज्ञं लीलया सविलासं यद्विलोकनं प्रेक्षणं तस्य सुखम् अनुभवन्। शोभनाः दन्ताः यस्याः तस्याः। बहुव्रीहौ दन्तस्य दत् आदेशः। तस्या बालचन्द्रिकाया इति शेषः। मदनेन कामेन यत् कदनं पीड़नं तज्जन्येन खेदेन वेदनया अनुभूतं सम्भूतं विषण्णभावं दुःखितावस्थाम्। तस्य विषण्णभावस्य निमित्तं कारणं ज्ञास्यन् ज्ञातुकामः। तस्याः बालचन्द्रिकायाः उपकण्ठं समीपदेशं, दैन्यस्य कातर्य्यस्य कारणं कथय इति अवोचमित्यन्वयः। रहसि निर्ज्जने संज्ञातः समुत्पन्नः अन्योन्यं सानुरागदर्शनादिति भावः। विश्रम्भः विश्वासः यस्याः तस्याः भावः तत्ता तया। लज्जा भयञ्च ते विहाय शनैः मन्दाक्षरम् अभाषत, रहसीत्यादिना अपरिचितेन जनेन सह कुमार्य्या लज्जाभयपरिहारेण वाक्प्रयोगजन्यमनौचित्यमाच्छादितम्। वार्द्धक्यस्य जरायाः प्रबलतया आधिक्येन निजनन्दनं स्वीयकुमारं दर्पसारं तदाख्यम् उज्जयिन्याम् अभ्यषिञ्चत्, यत्र राज्यभारं निदधे इति भावः।

তাহার প্রেম লজ্জা ও সসম্ভ্রম কৌতুকবশে সুরম্য বিলাসযুক্ত দৃষ্টিজনিত সুখসম্ভোগে ব্যাপৃত থাকিয়া, তদীয় মুখের কাতরভাব কামভাবজন্য ইহাই নিশ্চয় করিলাম এবং উহার কারণ জানিবার জন্য তাহার

सागरपर्य्यन्तं महीमण्डलं पालयिष्यन् निजपैतृष्वस्रेयावुद्दण्ड-कर्म्माणौ चण्डवर्म्म-दारुवर्म्माणौ धरणीभरणे नियुज्य तपश्चरणाय राजराजगिरिमभ्यगात्। राज्यं सर्वमसपत्नं शासति चण्ड-वर्म्मणि दारुवर्म्मा मातुलाग्रजन्मनोः शासनमतिक्रम्य पारदार्य्य-परद्रव्यापहरणादि दुष्कर्म्म कुर्वाणो मन्मथसमानस्य भवतो लावण्यायत्तचित्तां मामेकदा विलोक्य कन्यादूषणदोषं दूरीकृत्य बलात्कारेण रन्तुमुद्युङ्क्ते, तच्चिन्तया दैन्यमगच्छम्" इति (ङ)। तरुण्या मनोगतं मयि रागोद्रेकं मन्मनोरथसिद्ध्यन्त-

(ङ) स कुमारः दर्पसारः सप्तसागरपर्य्यन्तं सप्तसमुद्रान्तं, महीमण्डलं भूमण्डलं, पालयिष्यन् पालयितुमिच्छन् निजपैतृष्वस्रेयौ स्वीयपितृस्वसुः पुत्रौ, विकल्पेन स्वत्वविधिः। उद्दण्डकर्म्माणौ उत्कटकर्म्मकारिणौ। धरणीभरणे धरापालने तपश्चरणाय तपःसिद्धये राजराजगिरिं राजराजस्य कुबेरस्य गिरिं शैलं कैलासमित्यर्थः। अभ्यगात् गतवान्। तथाहि स कुमारः तपसा प्रभूतां शक्तिमुपार्ज्य सर्व्वेभ्यः प्रकृष्टं पदं लब्ध्वा अप्रतिद्वन्द्वी एव धरां पालयिष्यति इति तस्य इच्छा इति भावः। चण्डवर्म्मणि एकतरस्मिन्

নিকেট যাইয়া বলিলাম—সুন্দরি! তোমার এ কাতরতার হেতু কি বল। সেই নির্জ্জন স্থানে বালচন্দ্রিকা বিশ্বস্তচিত্তে লজ্জা ও ভয় পরিত্যাগ করিয়া ধীরে ধীরে বলিলেন—ভদ্র! মালবদেশাধিপতি মানসার বার্দ্ধক্যে অভিভূত হওয়ায় স্বীয় পুত্র দর্পসারকে উজ্জয়িনীর রাজসিংহাসনে প্রতিষ্ঠিত করিয়াছেন।

সেই কুমার দর্পসার সপ্তসাগরপর্য্যন্ত ভূমণ্ডল পালন করিবার মানসে স্বীয় পিতৃস্বসা পুত্র প্রচণ্ডচরিত্র চণ্ডবর্ম্মা ও দারুবর্ম্মাকে পৃথিবীর রক্ষাকার্য্যে নিযুক্ত করিয়া তপস্যার জন্য রাজরাজগিরি কৈলাসে গমন করিয়াছেন।

**रायस्य निशम्य बाष्पपूर्णलोचनामाश्वास्य दारुवर्म्मणो मारणोपायञ्च विचार्य्य वल्लभामवोचम्—"तरुणि! भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं मृदूपायः कश्चिन्मया चिन्त्यते—यक्षः कश्चिदधिष्ठाय बालचन्द्रिकां निवसति। तदाकारसम्पदाशा-शृङ्खलितहृदयो यः सम्बन्धयोग्यः साहसिको रतिमन्दिरे तं**

दर्पसारस्य पैतृस्वस्रेये तदाख्ये, सर्व्वं राज्यम् असपत्नं प्रतिद्वन्द्विशून्यं यथा तथा शासति पालयति सति, दारुवर्म्मा तस्मादपरः मातुलस्य मानसारस्य अग्रजन्मनः चण्डवर्म्मणश्च शासनम् आज्ञाम् अतिक्रम्य तदादेशाद्वहिः वर्त्तमानः पारदार्य्यं परदारासक्तत्वं परस्य दारा एव दारा यस्येति, बहुव्रीहिनिष्पन्नपरदारशब्दात् भावे यप्रत्ययेन तदर्थलाभः। परद्रव्यापहरणादि दुष्कर्म्म निन्दनीयं कार्य्यम्। मन्मथसमानस्य कामदेवतुल्यस्य भवतः लावण्यायत्तं सौन्दर्य्यवशीभूतं चित्तं यस्याः तां भवतः सौन्दर्य्योत्कर्षेण भवत्येव लग्नमानसामित्यर्थः। कन्यायाः अपरिणीतायाः कुमार्य्याः दूषणं समास्कन्दनं तदेव दोषं दूरीकृत्य अविगणय्य बलात्कारेण बलप्रयोगेण। तच्चिन्तया तस्य सबलात्कारं रमणोद्योगपर्य्यालोचनया दैन्यम् अतिकातरतां, अगच्छम् प्राप्तास्मि। दुर्व्वृत्तस्य तस्य हस्तात् मुक्तेरेकान्ततः अशक्यत्वादिति भावः।

(ढ) रागस्य अनुरागस्य उद्रेकं समुत्पादं मम मनोरथस्य अभिलाषस्य तद्विषयस्य इत्यर्थः। सिद्धेः साफल्यगमनस्य अन्तरायं विघ्नम्। बाष्पेण अश्रुणा पूर्णे

---

চণ্ডবর্ম্মা অসপত্নভাবে সমস্ত রাজ্যশাসনে ব্যাপৃত থাকিল, দারুবর্ম্মা মাতুল ও অগ্রজের শাসনে অবাধ্য হইয়া পরদার গমন ও পরদ্রব্য গ্রহণ প্রভৃতি দুষ্কর্ম্ম আচরণ করত কামদেবের তুল্য তোমার লাবণ্যে আসক্তা আমাকে একদা দর্শন করিয়া কন্যাধর্ষণদোষ অগ্রাহ্য করিয়া সবলে আমার প্রতি আক্রমণের চেষ্টা করিতেছে। সেই চিন্তায় আমি এরূপ কাতর হইয়াছি। (ঠ-ড)

আমার প্রতি তাহার মানসিক অত্যন্ত অনুরাগ এবং মদীয় কামনা-

यक्षं निर्जित्य तयैकसखीसमेतया मृगाक्ष्या संलापामृतसुख-मनुभूय कुशली निर्गमिष्यति, 'तेन चक्रवाकसंशयाकारपयोधरा विवाहनीया'' इति सिद्धेनैकेनावादि'' इति पुरजनस्य पुरतो भवदीयैः सत्यवाक्यैर्जनैः कथनीयम् (ढ)। तदनु

लोचने नेत्रे यस्याः तथाभूता दारुवर्म्मणा करिष्यमाणाम् असत्क्रियां विचिन्त्य बाष्पपर्य्याकुलनेत्रामित्यर्थः। आश्वास्य निर्भयवाक्प्रयोगेण आश्वस्तां कृत्वा। मारणस्य वधस्य उपायं गतिं विचार्य्य विविच्य। वल्लभां प्रियां तां बालचन्द्रिकाम्। भवत्याः तव अभिलाषिणं कामुकम्। सर्व्वनाम्नो वृत्तौ पुंवत्त्वम्। दुष्टहृदयं कुत्सितान्तःकरणम् एनं दारुवर्म्माणम्। मृदुपायः अतीक्ष्णा गतिः गुप्तोपायो वा चिन्त्यते निर्द्धार्य्यते। तस्या आकारसम्पदा मूर्त्तिशोभासम्भारेण आशया तदभिलाषेण शृङ्खलितं बद्धं हृदयं मनः यस्य तथाभूतः। अथवा तस्या आकारसम्पदा आशया तदुपभोगकामनया इति वार्थः। सम्बन्धयोग्यः एतस्याः सम्बन्धयोगेन कुलशीलादिना युक्तः। एकया सख्या समेतया एकसखीमात्रसहायया मृगाक्ष्या हरिणलोचनया बालचन्द्रिकया संलापामृतं सम्भाषणामृतं तज्जन्यं सुखं तया सह सम्भाषणादुद्भूतं सुखमित्यर्थः। तेन साहसिकेन पुरुषेण चक्रवाकस्य संशयः सन्देहो यस्मात् तादृशौ पयोधरौ यस्याः चक्रवाकसदृशस्तनी विवाहनीया परिणेया, इति उक्तरूपं वस्तु, एकेन सिद्धेन अवादि, सिद्धवचनविन्यासात् लोकानां विश्वासोऽनुकूलितः। सत्यानि अवितथानि वाक्यानि येषां तैः सत्यवचनवादिभिः तेषामेव वाक्येषु लोकानाम् अनायासं विश्वासस्य सम्पादयितुं शक्यत्वादिति।

---

সিদ্ধির বিঘ্ন শ্রবণানন্তর বাষ্পপূর্ণলোচনা প্রিয়াকে আশ্বাস দিলাম ও দারুবর্ম্মার বধের উপায় ঠিক করিয়া বলিলাম—হে তরুণি! আমি তোমার অভিলাষী এই দুষ্টাত্মা দারুবর্ম্মার নিভৃতে বধোপায় ঠিক করিতেছি, "এক যক্ষ বালচন্দ্রিকাকে আশ্রয় করিয়া আছে, সম্বন্ধযোগ্য যে সাহসিক ব্যক্তি এই বালচন্দ্রিকার আকার ও সম্পদের আশায়

दारुवर्म्मा वाक्यानीत्थंविधानि श्रावं श्रावं तूष्णीं यदि भिया स्थास्यति, तर्हि वरम्। यदि वा दौर्जन्येन त्वया सङ्गमङ्गीकरिष्यति, तदा स भवदीयैरित्थं वाच्यः—"सौम्य! दर्पसारवसुधाधिपामात्यस्य भवतः अस्मन्निवासे साहसकरणमनुचितम्। पौरजनसाक्षिकं भवन्मन्दिरमानीतयाऽनया तोयजाक्ष्या सह क्रीड़न्नायुष्मान् यदि भविष्यसि, तदा परिणीय तरुणीं मनोरथान् निर्विश"इति (ण)। सोऽप्येतदङ्गीकरिष्यति। त्वं

(ण) दौर्ज्जन्येन दुर्वृत्ततया, त्वया सह सङ्गं सम्मिलनम्, अङ्गीकरिष्यति स्वीकरिष्यति, भवदीयैः त्वदीयैः पुरुषैः इत्थं वक्ष्यमाणरूपेण वाच्यः कथितः कथनीयः। वचेर्दुहादित्वात् स इति गौणं कर्म्म उक्तम्। दर्पसारवसुधाधिपः दर्पसाराख्यः राजा तस्य अमात्यस्य मन्त्रिणः। अस्माकं निवासे आलये साहसस्य अविमृष्यकारितायाः करणम् उत्पादनम्, सहसा प्रवर्त्तनमित्यर्थः। अनुचितम् अकर्त्तव्यम्। पौरजनसाक्षिकं पौरजनानां समक्षमेव भवतः मन्दिरम् आनीतया भवन्निकेतने उपस्थापितया अनया

---

আকৃষ্ট হইয়া রতিমন্দিরে সেই যক্ষকে জয় করিয়া একটী মাত্র সখীর সমভিব্যাহারে স্থিত সেই মৃগাক্ষীর সহিত সম্ভাষণসুখ উপভোগ করিয়া নিরাপদে নির্গত হইতে পারিবে, সেই ব্যক্তিই চক্রবাকসদৃশ পয়োধরযুক্তা এই বালিকাকে বিবাহ করিবে, ইহা এক সিদ্ধপুরুষ বলিয়াছেন," যাহাদের বাক্য সাধারণে বিশ্বাস করে, তাহাদের দ্বারা পৌরজনসমক্ষে ইহা তুমি প্রকাশ করাইবে। (ঢ)

তদনন্তর দারুবর্ম্মা এইরূপ বাক্য শ্রবণ করিয়া যদি ভয়ে চুপ করিয়া থাকে, তবেই ভাল, অথবা যদি দৌরাত্ম্যবশতঃ তোমার মিলন স্বীকার করে, তবে তোমার পরিজনগণ এইরূপ বলিবে যে, মহাশয়! আপনি

सखीवेशधारिणा मया सह तस्य मन्दिरं गच्छ। अहमेकान्तनिकेतने मुष्टिजानुपादाघातैस्तं रभसान्निहत्य पुनरपि वयस्यामिषेण भवतीमनु निःशङ्कं निर्गमिष्यामि। तदेनममुपायमङ्गीकृत्य विगतसाध्वसलज्जा भवज्जनकजननीसहोदराणां पुरत आवयोः प्रेमातिशयमाख्याय सर्वथाऽस्मत्परिणयकारणेताननुनयेः। तेऽपि वंशसम्पन्नावण्याख्याय यूने मह्यं त्वां दास्यन्त्येव। दारुवर्म्मणो मारणोपायं तेभ्यः कथयित्वा तेषामुत्तरमाख्येयं मह्य"मिति (त)। सापि किञ्चिदुत्फुल्लसरसिजा-

तीयजे पद्मे इव अक्षिणी यस्याः, पद्मपलाशलोचनया अनया। लुप्तोपमा। बालचन्द्रिकया सह आयुष्मान् भवान् क्रीडन् भविष्यति क्रीड़िष्यति। अथवा आयुष्मान् जीवितः। तरुणीं युवतीमिनां परिणीय विवाह्य मनोरथान् अभिलाषान् तत्फलानि इत्यर्थः। निर्विश अनुभव।

(त) सोऽपि दारुवर्म्मा एतत् उक्तरूपेण त्वया सह क्रीडनम् अङ्गीकरिष्यति स्वीकरिष्यति, सखीवेशधारिणा तव सखीरूपमादधता, तस्य दारुवर्म्मणः। एकान्तनिकेतने एकदेशवर्त्तिगृहे, निकेतनस्य एकान्ते वा, मुष्ट्याः जानुनीः पादयोश्च आघातैः, रभसात् सहसा तं दारुवर्म्माणं निहत्य। वयस्यामिषेण सखीव्यपदेशेन। भवतीमनु भवत्याः पश्चात् निःशङ्कं निर्भीकं यथा तथा, विगतं साध्वसं भयं लज्जा च यस्याः तथाभूता निर्भीका निर्लज्जा च सतीत्यर्थः। आवयोः परिणयस्य विवाहस्य कारणे अर्थे

---

মহারাজ দর্পসারের অমাত্য, আপনি আমাদিগের ভবনে ঈদৃশ সাহস করিবেন—ইহা অনুচিত। পৌরজনের সমক্ষে আপনার মন্দিরে লইয়া গিয়া যদি ইহার সহিত ক্রীড়াসুখ উপভোগ করিতে পারেন, তবেই ইহাকে বিবাহ করিয়া নিজ কামনার ফলভোগ করিবেন। (ণ)

দারুবর্ম্মাও তাহাই স্বীকার করিবে। পরে সখীর বেশে সুসজ্জিত আমার

नना मामब्रवीत्—"सुभग! क्रूरकर्म्माणं दारुवर्म्माणं भवानेव हन्तुमर्हति। तस्मिन् हते युष्मन्मनोरथः फलिष्यति। एवं क्रियताम्। भवदुक्तं सर्वमहमपि तथा करिष्ये" इति मामसकृद्विहसितवदना विलोकयन्ती मन्दं मन्दमगारमगात्। अहमपि बन्धुपालमुपेत्य शकुनज्ञात्तस्मात् 'त्रिंशद्दिवसानन्तरमेव

तान् जनकं जननीं सहोदरांश्च अनुनयः अभ्यर्थयेथाः। तेऽपि तव जनकादयः वंशः सत्कुलं सम्पत् ऐश्वर्यं लावण्यं सौन्दर्यञ्च तैः आढ्याय युक्ताय कौलीन्यादिगुणयुक्ताय इत्यर्थः। दास्यन्त्येव, एवशब्दोऽन्यव्यावृत्तौ, तथाहि मम कौलीन्यादिकं ज्ञात्वा त्वां मह्यमदत्त्वा न वर्त्तिष्यन्त इति भावः। अथवा अयोगव्यवच्छेदपर एवशब्दः अवश्यं दास्यन्ति न कथमपि अन्यथा करिष्यन्ति इत्यर्थः।

(घ) उत्फुल्लं विकसितं सरसिजं पद्ममिव आननं यस्याः सा। लुप्तोपमा। एतेन प्रस्तुत-पदार्थेन बालचन्द्रिकाया आनन्दातिरेकशंसनात् अतिरतिः व्यज्यते। क्रूरम् अतिनिष्ठुरं कर्म्म यस्य तम् अतिनृशंसकर्म्माणम्। भवानेव नान्य इत्यन्ययोगव्यवच्छेदक एवशब्दः। तस्मिन् दारुवर्म्मणि हते पञ्चत्वं नीते, युष्माकं मनोरथः अभिलाषः मद्विषयक इत्यर्थः।

সহিত তুমি সেই মন্দিরে যাইবে, আমি গৃহের এক কোণে মুষ্টি জানু ও পদাঘাতে সহসা তাহাকে বধ করিয়া পুনরায় সখীব্যপদেশেই তোমার পশ্চাৎ নিঃশঙ্কভাবে বাহির হইয়া আসিব।

পরে তুমি এই উপায় স্বীকার করিয়া ভয় ও লজ্জা পরিহারপূর্ব্বক তোমার জনক জননী ও সহোদরগণের সমীপে আমাদিগের দুইজনের অতিশয় প্রণয় প্রকাশ করিয়া, আমাদের বিবাহের জন্য তাঁহাদিগকে অনুরোধ করিবে।

তাঁহারাও কুলসম্পৎ যৌবন ও লাবণ্যযুক্ত আমার নিকট তোমাকে অবশ্য দান করিবেন। তাঁহাদের নিকট দারুবর্ম্মার বধের উপায় বলিয়া তাঁহারা যাহা বলেন, তাহা আমার কাছে আসিয়া বলিবে। (ত)

भवत्सङ्गः सम्भविष्यति' इत्यश्रृणवम्। तदनु मदनुगम्यमानो बन्धुपालो निजावासे प्रविश्य मामपि निलयाय विससर्ज। मन्मायोपायवागुरापाशलग्नेन दारुवर्म्मणा रतिमन्दिरे रन्तुं समाहूता बालचन्द्रिका तं गमिष्यन्ती दूतिकां मन्निकटमभि-प्रेषितवती (थ)। अहमपि मणिनूपुरमेखलाकङ्कण-कटक-

फलिष्यति। समासान्तर्गतं बहुत्वम् अतिसमादरसूचनाय। एवं त्वया निर्द्दिष्टरूपमेव क्रियताम्, एवं करणेन आवयोरभिप्रेतस्य फलिष्यत्त्वात्। असकृत् वारं वारं विवृत्तं परावृत्तं वदनं मुखं यया यस्या वा तथाभूता मद्दर्शने अत्यायत्ततया परावृत्य मम दर्शनं कुर्व्वतीत्यर्थः। शकुनज्ञात् शुभचिह्नवेदिनः तस्मात् बन्धुपालात्। अश्रृणवम् "श्रुत्यर्थानां श्रावयिता" इति पञ्चमी। तदनु तदनन्तरं त्रिंशद्दिवसानन्तरं भवत्सङ्गश्रवणात् परम् इत्यर्थः। निलयाय स्वीयभवनाय विससर्ज्ज, मम स्वावासगमनमनुमेने इत्यर्थः। मम मायोपायः कपटपथः स एव वागुरापाशः जालरज्जुः तस्मिन् लग्नः बद्धः तेन, मदीयकपटनिगृहीतेन इत्यर्थः।

---

আমার কথা শুনিয়া বালচন্দ্রিকার মুখ উৎফুল্ল হইয়া উঠিল এবং সে বলিল—'মহাশয়! ক্রূরকর্ম্মাসক্ত দারুবর্ম্মাকে কেবল আপনিই বধ করিতে সমর্থ। তাহাকে বধ করিতে পারিলে আপনার মনোভিলাষ পূর্ণ হইবে। অতএব এইরূপ করুন। আপনি যাহা যাহা বলিলেন, আমিও সেই সেই কার্য্য করিব।' এই কথা বলিয়া সে বার বার আমার দিকে মুখ ফিরাইয়া দৃষ্টিনিক্ষেপ করত ধীরে ধীরে গৃহে চলিয়া গেল। আমিও শকুনজ্ঞ বন্ধু-পালের নিকট উপস্থিত হইয়া তাহার নিকট হইতে শুনিলাম যে—ত্রিশ দিনের পরই তোমার সহিত সাক্ষাৎকার ঘটিবে।

পরে বন্ধুপাল নিজ আগারে প্রবেশ করিলেন, আমিও তাঁহার পশ্চাতে গেলাম, তৎপর তিনি আমাকে নিজগৃহে যাইবার জন্য বিদায়

ताटङ्क-हार-क्षौम-कज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्स्थानेषु निक्षिप्य सम्यगङ्गीकृतमनोज्ञवेशो वल्लभया सह तदागारद्वारोपान्तमगच्छम्। द्वाःस्थकथितास्मदागमनेन सादरं विहिताभ्युद्गतिना तेन द्वारोपान्तनिवारिताशेषपरिवारेण मदन्विता बालचन्द्रिका सङ्केतागारमनीयत (द)। नगर-

(द) मणीनां रत्नानां नूपुरं मञ्जीरं मेखला काञ्ची कङ्कणं कटकश्च करालङ्कारभेदौ ताटङ्कं कर्णालङ्कारभेदः हारः क्षौमं पट्टवस्त्रं कज्जलम् अञ्जनम् एतेषां समाहारः। वनितायोग्यं महिलाजनव्यवहारोपयोगि मण्डनजातम् अलङ्कारसमूहम् निपुणतया अतिसूक्ष्मवीक्षणेन तत्तत्स्थानेषु पादप्रभृतितत्तदलङ्कारयोग्यस्थानेषु निक्षिप्य विन्यस्य सम्यक् अङ्गीकृतः मनोज्ञः अतिमनोरमः वेशः परिच्छदादि येन तथाभूतः वल्लभया प्रियया बालचन्द्रिकया सह। तस्य दारुवर्म्मणः आगारद्वारं गृहद्वारं तस्य उपान्तं समीपम् अगच्छम्। द्वाःस्थेन दौवारिकेण कथितं निवेदितम् आवयोः आगमनं यस्य तेन विहिता कृता अभ्युद्गतिः प्रत्युद्‌यानं येन तेन। तेन दारुवर्म्मणा। द्वारोपान्ते निवारिताः निषिद्धाः अशेषपरिवाराः निखिलाः परिजनाः येन तेन मया अन्विता युक्ता। सङ्केतागारं सङ्केतगृहम् अनीयत नीता।

---

দিলেন। মদীয় কপট উপায়রূপ জালে নিবদ্ধ হইয়া দারুবর্ম্মা বালচন্দ্রিকাকে মরণেচ্ছায় রতিমন্দিরে আহ্বান করিলেন, বালচন্দ্রিকা যাইবার জন্য প্রস্তুত হইয়া আমার নিকট দূতী পাঠাইয়া দিল। (থ)

আমিও মণিময় নূপুর মেখলা কঙ্কণ বলয় কর্ণালঙ্কার হার বস্ত্র ও কজ্জল প্রভৃতি স্ত্রীজনযোগ্য অলঙ্কার সকল যথাযথ স্থানে সন্নিবেশিত করিয়া অতি মনোজ্ঞবেশে প্রিয়া-বালচন্দ্রিকার সহিত দারুবর্ম্মার গৃহের দ্বারদেশে গমন করিলাম।

দ্বারপাল যাইয়া আমাদের উপস্থিতি দারুবর্ম্মাকে জানাইল, সেও

व्याकुलां यक्षकथां परीक्षमाणो नागरिकजनोऽपि कुतूहलेन दारुवर्म्मणः प्रतीहारभूमिमगमत्। विवेकशून्यमतिरसौ रागातिरेकेण रत्नखचितहेमपर्य्यङ्के हंसतूलगर्भशयनमानीय तरुणीं, तस्यै मह्यं तमिस्रासम्यगनवलोकितपुम्भावाय मनोरमस्त्रीवेशाय च चामीकरमणिमयमण्डनानि सूक्ष्माणि चित्रवस्त्राणि, कस्तूरिकामिलितं हरिचन्दनं, कर्पूरसहितं ताम्बूलं सुरभीणि कुसुमानि इत्यादि ललितं वस्तुजातं समर्प्य मुहूर्त्तद्वयमात्रं हासवचनैः संलपन्नतिष्ठत् (ध)। ततो रागान्ध-

(ध) नगरे व्याकुलां व्याप्तां यक्षस्य बालचन्द्रिकामधिष्ठाय यक्षो वर्त्तत इति मिथ्यैव प्रचारितस्य कथां वृत्तान्तं परीक्षमाणः सत्यमेव बालचन्द्रिकायां यक्षो वसति न वेति ज्ञातुकाम इत्यर्थः, नागरिकजनैः नगरस्थः लोकः, कुतूहलेन कौतुकपरायणतया। प्रतीहारभूमिं द्वारदेशम्। विवेकेन परिणामबोधेन शून्या विरहिता मतिः यस्य स परिणामविवेचनाहीनः साहसिक इत्यर्थः। असौ दारुवर्म्मा रागातिरेकेण अतिमात्रेण अनुरागेण रत्नैः मणिमाणिक्यादिभिः खचितः सुशोभितः यः हेमपर्य्यङ्कः स्वर्णमयपर्य्यङ्कः तस्मिन् हंसतूलवत् गर्भः यस्य तथाभूत शयनम् अतिकोमलां शय्याम् इत्यर्थः। तरुणीं युवतीं मां बालचन्द्रिकाम् आनीय उपस्थाप्य। तस्यै बालचन्द्रिकायै तमिस्रया अन्धकारेण सम्यक् सुस्पष्टम् अनवलोकितः अपरिलक्षितः पुम्भावः पुरुषाकृतिः पुरुषचेष्टा च

সাদরে আমাদিগের অভ্যর্থনার জন্য দ্বারদেশে আসিয়া পরিজনদিগকে দূরে সরাইয়া আমার সহিত বালচন্দ্রিকাকে সঙ্কেতাগারে লইয়া গেল। নাগরিক-ব্যক্তিবর্গ নগরে বিখ্যাত যক্ষের বৃত্তান্ত পরীক্ষা করিতে কৌতূহলসহকারে দারুবর্ম্মার দ্বারদেশে আসিয়া উপস্থিত হইল। অজ্ঞ দারুবর্ম্মা অনুরাগাতিশয়ে রত্নখচিত স্বর্ণপর্য্যঙ্কে সুকোমল শয্যায় যুবতী বালচন্দ্রিকাকে লইয়া গিয়া তাহাকে এবং আমাকে স্বর্ণ ও মণিময় আভরণ, সূক্ষ্ম বিচিত্র

तया सुमुख्यालिङ्गने मतिं व्यधत्त। रोषारुणितोऽहमेनं पर्य्यङ्क-तलान्निःशङ्को निपात्य मुष्टिजानुपादाघातैः प्राहरम्। नियुद्धरभस-विकलमलङ्कारं पूर्ववन्मेलयित्वा भयकम्पितां नताङ्गीमुप-लालयन् मन्दिराङ्गनमुपेतः साध्वसकम्पित इवोच्चैरकूजमहम्—'हा! बालचन्द्रिकाधिष्ठितेन घोराकारेण यक्षेण दारुवर्म्मा निहन्यते, सहसा समागच्छत, पश्यतेमम् इति (न)।' तदाकर्ण्य

यस्य तथाभूताय मनोरमस्त्रीवेशाय उत्तमस्त्रीपरिच्छदधारिणे मह्यं च चामीकरमणि-मयानि स्वर्णमयानि रत्नमयानि च मण्डनानि अलङ्कारान् चित्रवस्त्राणि रञ्जितानि वसनानि उत्कृष्टानि वा, कस्तूरिकया मृगनाभिरूपगन्धद्रव्येण मिलितं युक्तं हरिचन्दनम् इत्यादि, इत्यादिपदात् मद्यादीनां ग्रहणं, मत्तभावस्य शृङ्गारे भूयः समुपयोगात्। हासवचनैः सहास्यालापैः।

(न) रागेण अनुरागजनितमोहेन कामप्रयुक्तार्त्ततनतया इत्यर्थः। अन्धतया कर्त्तव्याकर्त्तव्यविवेकशून्यतया, सुमुख्याः सुवदनायाः बालचन्द्रिकायाः आलिङ्गने, रोषारुणितः समुद्दीप्तक्रोध इत्यर्थः। एनं दारुवर्म्माणम्। प्राहरम् कठोरमाहत्य प्राणैर्व्ययोजयम्। नियुद्धे समुत्कटसंमर्द्दे यो रभसः वेगः तेन विकलं स्वस्थान-च्युतम् अलङ्कारं धृतानि स्त्रीभूषणानि मेलयित्वा यथास्थाने स्थापयित्वा। नताङ्गीं तां बालचन्द्रिकाम् उपलालयन् सान्त्वयन् साध्वसेन भयेन कम्पित इव प्रदर्शितकृत्रिम-भीतिकम्प इत्यर्थः। घोराकारेण भीषणाकृतिना। इमं निहन्यमानं दारुवर्म्माणमित्यर्थः।

বস্ত্র, কস্তূরিকাযুক্ত হরিচন্দন, কর্পূরযুক্ত তাম্বূল, সুগন্ধি কুসুম প্রভৃতি রম্য বস্তুসমূহ অর্পণ করিয়া ক্ষণকাল সহাস্য আলাপসহকারে অবস্থান করিল, অন্ধকারনিবন্ধন এবং মনোহর স্ত্রীবেশ পরিগ্রহ করায় মদীয় পুরুষ-জনোচিত ভাবসমূহ তাহার লক্ষ্য হইল না। (দ—ধ)

পরে অনুরাগে অন্ধ হইয়া দারুবর্ম্মা সুমুখী বালচন্দ্রিকার আলিঙ্গনে অভিলাষ করিল। আমি ক্রোধে রক্তবর্ণ হইয়া উঠিলাম এবং নিঃশঙ্কভাবে

मिलिता जनाः समुद्यद्बाष्पा हाहानिनादेन दिशो बधिरयन्तो "बालचन्द्रिकामधिष्ठितं यक्षं बलवन्तं शृण्वन्नपि दारुवर्म्मा मदान्धस्तामेवायाचत; तदसौ स्वकीयेन कर्म्मणा निहतः, किं तस्य विलापेन" इति मिथो लपन्तः प्राविशन्। कोलाहले तस्मिन् चटुललोचनया सह नैपुण्येन सहसा निर्गतो निजावास-

(प) समुद्यन्तः समुत्पद्यमाना बाष्पा अश्रुप्रवाहाः येषां ते अश्रुभारपूर्णनेत्रा इत्यर्थः। दिशः समस्तासु दिक्षु वर्त्तमानान् जनसमूहान् बधिरयन्तः श्रुतिमूढान् कुर्व्वन्तः। तत् तस्मात् निर्व्विवेकमिव तदाश्रयणात्। तस्य दारुवर्म्मणः तद्विषयमाश्रित्य विलापेन किं? न किमपि इत्यर्थः। मिथः परस्परं लपन्तः जल्पन्तः। चटुललोचनया चञ्चलनेत्रया बालचन्द्रिकया सह नैपुण्येन चातुर्य्येण। निर्गतः तस्मात् आवासात् बहिर्गतः।

তাহাকে পর্য্যঙ্ক হইতে পাতিত করিয়া মুষ্টি জানু ও পদাঘাতে বিনাশ করিলাম। উৎকট যুদ্ধবশতঃ আমার স্ত্রীজনোচিত অলঙ্কারগুলি স্থানচ্যুত হইয়াছিল, তাহা পুনর্ব্বার যথাস্থানে সংযোজিত করিলাম এবং অদ্ভুত বৃত্তান্তে ভয়বিহ্বলা প্রিয়তমা বালচন্দ্রিকাকে সান্ত্বনা করিয়া মন্দিরপ্রাঙ্গণে আসিয়া ভয়কম্পিতস্বরে চীৎকার করিয়া বলিলাম,--হায়! হায়! বালচন্দ্রিকাধিষ্ঠিত ভীষণাকার যক্ষ দারুবর্ম্মাকে বধ করিল, শীঘ্র আইস, ইহাকে দেখ। (ন)

তাহা শুনিয়া মিলিত জনসমূহ বাষ্পাকুলিতনেত্রে হাহারবে সমস্ত দিক্ বধির করিয়া তুলিল এবং "কেন দারুবর্ম্মা বালচন্দ্রিকাধিষ্ঠিত যক্ষকে অসীম শক্তিসম্পন্ন জানিয়াও কামান্ধতানিবন্ধন তাহার কামনা করিল, অতএব উহার স্বীয় কর্ম্মেই মরণ হইল, তাহার জন্য কাঁদিলে কি হইবে?" পরস্পর এই কথা বলিতে বলিতে তথায় প্রবেশ করিল। সেই কোলাহলের মধ্যে চঞ্চলাক্ষী বালচন্দ্রিকার সহিত অতি কুশলভাবে

मगाम। ततो गतेषु कतिपयदिनेषु पौरजनसमक्षं सिद्धादेश-प्रकारेण विवाह्य तामिन्दुमुखीं, पूर्वसङ्कल्पितान् सुरतविशेषान् यथेष्टमन्वभूवम्। बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन् निर्गत्य पुराद्बहिर्वर्त्तमानो नेत्रोत्सवकारि भवदवलोकनसुखमनुभवामि इति (प)। एवं मित्रवृत्तान्तं निशम्य अम्लानमानसो राजवाहनः, स्वस्य च सोमदत्तस्य च वृत्तान्तमस्मै निवेद्य सोमदत्तं "महाकालेश्वराराधनानन्तरं भवद्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छ" इति नियुज्य पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमाणमवन्तिकापुरं विवेश। तत्र "अयं मम स्वामि-

पौरजनानां पुरवासिनां समक्षं गोचरे एव सिद्धादेशप्रकारेण सिद्धादेशानुरूपमित्यर्थः। ताम् इन्दुमुखीं बालचन्द्रिकां विवाह्य परिणीय, पूर्व्वसङ्कल्पितान् आदौ एव कर्त्तव्यतया मनसि भावितान्। बन्धुपालेन कर्त्रा शकुनेन शुभचिह्नेन विहगशब्दादिरूपेण निर्द्दिष्टे निर्द्धारिते। नेत्रोत्सवकारि नयनानन्दप्रदं यत् भवदवलोकनं भवतो दर्शनं तज्जन्यसुखम्।

---

নির্গত হইয়া আমি নিজ আবাসে গমন করিলাম। পরে কিছুদিন অতীত হইলে পৌরজনের সমক্ষে সিদ্ধতাপসের আদিষ্টরূপে সেই ইন্দুমুখী বালচন্দ্রিকাকে বিবাহ করিয়া পূর্ব্বসঙ্কল্পিত সুরতক্রীড়া উপভোগ করিতে লাগিলাম। বন্ধুপাল শুভশকুনদর্শনে 'অদ্যই তোমার সহ সম্মিলন ঘটিবে' ইহা বলিয়াছিলেন। অতএব আজ পুরের বহির্ভাগে নির্গত হইয়া চক্ষুর আনন্দপ্রদ তোমার দর্শন-সুখ অনুভব করিতেছি। (প)

রাজবাহন এইরূপ মিত্রবৃত্তান্ত শ্রবণ করিয়া অম্লানচিত্তে নিজের বৃত্তান্ত ও সোমদত্তের বৃত্তান্ত ইহার নিকট প্রকাশ করিয়া সোমদত্তকে বলিলেন—"সোমদত্ত! তুমি মহাকালেশ্বর শিবের পূজা সম্পাদন করিয়া তোমার প্রিয়াকে পরিজনগণের সহিত নিজ পল্লীতে রাখিয়া আইস।"

कुमार" इति बन्धुपालादये बन्धुजनाय कथयित्वा, तेन राजवाहनाय बहुविधां सपर्य्यां कारयन् "सकलकलाकुशलो महीसुरवर" इति पुरि प्रकटयन् पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकमनुदिनं स्वमन्दिरे कारयामास (फ)।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः ॥ ४ ॥

(फ) अम्लानम् अपगतदुःखं मानसं यस्य तथाभूतः प्रफुल्लान्तःकरणः महाकालेश्वरस्य महाकालाख्यस्थाने प्रतिष्ठितस्य सुवर्णबिन्दुनामकलिङ्गात्मकस्य शिवस्य आराधनानन्तरम् अर्च्चनात् परं भवतः वल्लभां प्रियां बालचन्द्रिकां सपरिवारां परिजनसहितां निजकटकं स्वीयनगरं प्रापय्य नीत्वा। भुवि पृथिव्यां स्वर्गायमाणं स्वर्गतुल्यम्, आर्यिगर्तेयमुपमा। सपर्य्या पूजां, मज्जनं स्नानं भोजनम् आहारः तदादिकम्।

---

পরে পুষ্পোদ্ভবের সহিত মর্ত্তাভূমির স্বর্গতুল্য অবন্তিপুরে প্রবেশ করিলেন। সেই স্থানে গমন করিয়া পুষ্পোদ্ভব, বন্ধুপাল প্রভৃতি বন্ধুজনের নিকট প্রকাশ করিলেন—ইনিই আমার প্রভুর পুত্র। তাঁহারা রাজবাহনের যথোচিত সম্মানাদি প্রদর্শন করিলেন। নগরে এইরূপ প্রকাশ করা হইল যে —ইনি একজন সর্ব্ববিধ কলাবিদ্যায় নিপুণ ব্রাহ্মণপ্রবর। পুষ্পোদ্ভব রাজার স্নান আহার প্রভৃতি প্রতিদিন স্বীয় গৃহেই সম্পাদন করাইতে লাগিলেন। (ফ)

# पञ्चमोच्छ्वासः ।

अथ मीनकेतनसेनानायकेन मलयगिरिमहीरुह-निरन्तरा-वासि-भुजङ्गम-भुक्तावशिष्टेनेव सूक्ष्मतरेण धृतहरिचन्दनपरि-मलभरेणेव मन्दगतिना दक्षिणानिलेन वियोगिहृदयस्थं मन्मथानलमुज्ज्वलयन् (क), सहकारकिसलय-मकरन्दा स्वादनरक्तकण्ठानां मधुकर-कलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनी-मानसोत्कलिकामुपनयन् (ख)।

(क) मीनकेतनस्य कामदेवस्य सेनानायकेन सेनापतिना परविजये प्रधान सहायेन इत्यर्थः। मलयगिरिमहीरुहेषु मलयशैलस्थितेषु वृक्षेषु चन्दनतरुषु इत्यर्थः। निरन्तरावासिनो नित्यस्थिता: ये भुजङ्गमाः वायुभुजः सर्पाः तैः भुक्तात् अवशिष्टेन इव अतएव सूक्ष्मतरेण क्षीणक्षीणेन धृतः हरिचन्दनस्य परिमलभरः सौरभराशिः येन तथाभूतेन परिमलभारादलसतां गतेन अतएव मन्दगतिना मृदु मृदु प्रवहता इत्यर्थः। दक्षिणानिलेन दक्षिणादिगागतेन मलयानिलेन वियोगिनां विरहातुराणां हृदये तिष्ठति यः तं, मन्मथानलं कामाग्निम् उज्ज्वलयन् उद्दीपयन्।

(ख) सहकाराणाम् आम्रवृक्षविशेषाणां किसलयानां पल्लवानां मकरन्दानां

পরে একদিন বসন্তকাল উপস্থিত হইল। কামদেবের সেনাপতি মলয়-শৈলে নিরন্তর অবস্থিত ভুজঙ্গগণের ভুক্তাবশিষ্ট বলিয়াই যেন অত্যল্প মলয়ানিল, হরিচন্দনের পরিমলভরে মন্দগতি ধারণ করিয়া বিয়োগিগণের হৃদয়স্থিত মদনাগ্নি খাড়াইয়া তুলিল, সহকার তরুর নব কিসলয় ও পুষ্পরস পান করিয়া মধুরস্বর মধুকর ও কোকিলগণের মধুর স্বরে দিক্সমূহ ঝঙ্কৃত হইতে লাগিল; মানিনী রমণীর অভিমানজনিত উৎকণ্ঠা কোথায় চলিয়া

माकन्दसिन्धुवार-रक्ताशोक-किंशुक-तिलकेषु कलिकामुपपादयन् मदनमहोत्सवाय रसिकमनांसि समुल्लासयन् वसन्तसमयः समाजगाम (ग)। तस्मिन्नतिरमणीये काले अवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्त-

पुष्परसानाम् आस्वादनेन रसग्रहणेन रक्तः सुरागयुक्तः कण्ठः येषां तेषां मधुकराणां भृङ्गाणां कलकण्ठानां कोकिलानाञ्च। काकलीकलकलेन मधुरनिक्वणेन दिक्चक्रं दिक्समूहं वाचालयन् शब्दितं कुर्व्वन् मानिनीनां मानवतीनां स्त्रीणां मानसस्य चित्तस्य उत्कलिकाम् उत्कण्ठाम् अपनयन् अपसारयन् तदानीं स्वामिनोऽपि कामवत्त्वात् सम्पर्केण उत्कण्ठानिवृत्तिः। अथवा उत्कलिका मानजन्यभावान्तरविशेषः तदपसारणं तत्कालस्य उद्दीपकतया इति भावः।

(ग) माकन्दः आम्रवृक्षः, 'माकन्द आम्रवृक्ष' इति मेदिनी। सिन्धुवारः पुष्पवृक्ष-विशेषः, "विसुन्धकः सिन्धुवारः सिन्धुकः सुरसोऽपि च। तथेन्द्रसुरसस्त्विन्द्रः सुरिसः सिन्धुवारितः। निर्गुण्डीन्द्राणिकेन्द्राणी सुरसा, सिन्धुवारक" इति शब्दरत्नावली। तिलकाः तिलपुष्पवृक्षाः कलिका कोरकम्। मदनमहोत्सवाय कामभावसम्पृक्तप्रमोदव्यापाराय रसिकानां नागरिकजनानां मनांसि समुल्लासयन् समुल्लसितानि कुर्व्वन्। सर्व्वमेवेदं प्रथमान्तपदजातं वसन्तसमय इत्यस्य विशेषणम्। तथाहि पूर्व्वोक्तभावसमूहजटिलो वसन्तकालः प्रादुर्बभूव इति भावः। अत्र दक्षिणानिलस्य सूक्ष्मतरत्वं प्रति मलयशैलस्थ-भुजङ्गभुक्तावशिष्टत्वं हेतुतया उत्प्रेक्षितम् इति एका हेतूत्प्रेक्षा, मन्दगतित्वं प्रति च हरिचन्दनपरिमलभारस्य हेतुतोत्प्रेक्षिता इति द्वितीया। उभयोः अपेक्षापेक्षिभाव-शून्यत्वात् संसृष्टिः।

---

গেল; মাকন্দ সিন্ধুবার রক্তাশোক পলাশ ও তিলক কুসুমের কলিকা প্রকাশ পাইল; মদনমহোৎসবের জন্য রসিকসমূহের চিত্ত উল্লাস প্রাপ্ত হইল। সেই পরমরমণীয় বসন্তসময়ে অবন্তিসুন্দরী নামে মানসারের কন্যা প্রিয়সখী বালচন্দ্রিকার সহিত নগরের প্রান্তবর্তী সুরম্য উপবনে

रम्योद्याने पौरसुन्दरीसमवायसमन्विता कस्यचिच्चूतपोतकस्य छायाशीतले सैकततले गन्ध-कुसुम-हरिद्राक्षतचीनाम्बरादिना नानाविधेन परिमलद्रव्यनिकरेण मनोभवमर्च्चयन्ती रेमे (घ)।

तत्र रतिप्रतिकृतिमवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो राजवाहनस्तदुपवनं प्रविश्य तत्र तत्र मलयमारुतान्दोलित-शाखा-निरन्तरसमुद्भिन्नकिसलय-कुसुम-फल-समुल्लासितेषु कोकिलकीरालिमधुकराणामालापान्

(घ) तस्मिन् पूर्वोक्तप्रस्तुतप्रमोदजनकवस्तुसम्भारसम्भृते अतिरमणीये सुतरां प्रीतिजनके, काले वसन्तसमये। ननु कथं वसन्तकालस्य कामवेदनासमुद्भावनेन हृदयं क्लेशयतो रमणीयत्वं, यदि सङ्गतजनरतिसाधकतया तत्, तत् कथं विरहिजनपीडानिष्पादकतया अरमणीयत्वं वा न स्वक्रियतामिति चेदत्र निपुणाः—वसन्तकालो हि विरहिणां पुरुषाणां विरहिणीनाञ्च रमणीनां समम् एव मानसे विरहोत्कलिकामुपपाद्य क्रमेण सम्मेलनमनुकूलयति, अतएव आपाततापनिष्पादकोऽपि वसन्तो रमणीय एव निर्विशेषेण विरहिणां सङ्गतानाञ्च इति। मानसारस्य तदाख्यस्य मालवेश्वरस्य नन्दिनी तनया, प्रियवयस्यया प्रियसख्या, विशेषणमिदम् अवन्तिसुन्दर्य्या भावप्रकाशान्तरायविघाताय, प्रियजनेन सर्वस्यैव वस्तुनो गम्यत्वादिति। नगरस्य उपान्ते यत् रम्यं मनोहरम् उद्यानम् उपवनं तस्मिन् विहारोत्कण्ठया पादचङ्क्रमणकाम्यया। पौरसुन्दरीणां पुरस्त्रीणां समवायैः समूहैः समन्विता युक्ता। चूतपोतकस्य बालचूततरुकस्य छायाशीतले प्रच्छायशीतले सैकततले वालुकाभूमौ, गन्धादिकं वस्तु समासेन व्यासेन च गन्धद्रव्यम्। मनोभवम् अर्च्चयन्ती कामदेवं पूजयन्ती कामोद्दीपकवस्तुसम्भाराणामेव तदर्च्चनायोग्यत्वात्।

বিহারবাসনায় পুরনারীগণের সহিত একটি ক্ষুদ্র চূতবৃক্ষের প্রচ্ছায়শীতল বালুকাময় তলদেশে, গন্ধ কুসুম হরিদ্রা অক্ষত ও চীনাম্বরাদি

श्रावं श्रावं, किञ्चिद्विकसदिन्दीवरकह्लार-कैरव-राजीवराजिकेलि-लोल-कलहंस-सारस कारण्डवचक्रवाक- चक्रवाल-कलरव-व्याकुल-विमलशीतल-सलिल-ललितानि सरांसि दर्शं दर्शम् अमन्दलीलया ललनासमीपमवाप ( ङ )।

( ङ ) रतिप्रतिकृतिं रतितुल्याम्। तदुपवनं यत्र बालचन्द्रिकया अवन्तिसुन्दरी विहरति तदुद्यानम् इति। मलयमारुतेन मलयवायुना आन्दोलितासु कम्पितासु शाखासु निरन्तरम् अतिगहनभावेन समुद्भिन्नानि किसलयाः पल्लवाः कुसुमानि फलानि च तैः समुल्लासितेषु समन्वितेषु रसालतरुषु मधुकाररचितेषु। कोकालिः शुकपक्षिश्रेणी। आलापान् शब्दान्। किञ्चित् अत्यल्पमात्रं यथा तथा विकसन्ति प्रस्फुटन्ति इन्दीवराणि नीलोत्पलानि, कह्लाराणि सितोत्पलानि, कैरवाणि कुमुदानि, राजीवराजिः कमलश्रेणी, केलिलोलाः क्रीडानिरताः कलहंसाः सारसाः पक्षिविशेषाः कारण्डवाः हंसविशेषा एव चक्रवाकाः च तेषां चक्रवालस्य समूहस्य कलरवेण अव्यक्तमधुरध्वनिना व्याकुलानि परिव्याप्तानि विमलानि शीतलानि च यानि सलिलानि तैः ललितानि रम्याणि। अमन्द-लीलया अपरिमितविलासेन, ललनायाः अवन्तिसुन्दर्याः समीपम् अवाप। यत्र बालचन्द्रिकया अवन्तिसुन्दरी मदनपूजाव्यापृता आसीत् तत्र राजवाहनः समुपतस्थे इति भावः।

নানাবিধ সুগন্ধদ্রব্যসম্ভারে কামদেবের অর্চ্চনায় সন্তোষ অনুভব করিতে লাগিলেন। ( ক—খ—গ—ঘ )

সেইস্থানে রতির তুল্য রম্যমূর্ত্তি অবন্তিসুন্দরীকে দেখিবার ইচ্ছায় বসন্তসহচর কামের ন্যায় পুষ্পোদ্ভবের সহিত রাজবাহন প্রবেশ করিয়া মলয়সমীরণে আন্দোলিত শাখাসমূহে উদ্গত কিসলয় কুসুম ও ফলযুক্ত রসাল তরুতে শুক ভ্রমর ও কোকিলগণের শব্দ শ্রবণ করিতে করিতে এবং ঈষৎ প্রস্ফুটিত ইন্দীবর, কহ্লার, কৈরব, কমল, ক্রীড়ারত কলহংস, সারস, কারণ্ডব, চক্রবাক প্রভৃতি পক্ষিসমূহের কলরবে পরিব্যাপ্ত শীতল বিমল

बालचन्द्रिकया "निःशङ्कमित आगम्यताम्" इति हस्तसंज्ञया समाहूतो निजतेजोजितपुरुहूतो राजवाहनः कृशोदर्य्या अवन्तिसुन्दर्य्या अन्तिकं समाजगाम (च)। या वसन्त-सहायेन समुत्सुकतया रतेः केलिशालभञ्जिकाविधित्सया कञ्चन नारीविशेषं विरचय्य आत्मनः क्रीड़ाकासार-सारारविन्द-सौन्दर्य्येण पादद्वयम् (छ), उद्यानवनदीर्घिकामत्तमरालिका-गमनरीत्या लीलालसगतिविलासम्, तूणीरलावण्येन जङ्घे,

(च) निःशङ्कं निःसङ्कोचम् इत अस्मिन् स्थाने, हस्तसंज्ञया करसङ्केतेन। निज-तेजसा स्वीयप्रभावेण जितः अधःकृतः पुरुहूतः इन्द्रः येन तथाभूतः इन्द्रापेक्षया अधिक-तरप्रभावशाली, कृशोदर्य्या क्षीणकट्या, कृशोदरत्वं सौन्दर्य्यं स्त्रीणाम्।

(छ) या अवन्तिसुन्दरी, अस्याः रराजेति परवर्त्तिक्रियायाः कर्त्तृत्वेनान्वयः। वसन्तसहायेन कामदेवेन। रतेः अत्यनुरागभाजनीभूतायाः स्वीयस्त्रियाः केलिशाल-भञ्जिका क्रीड़ापुत्तलिका तद्विधित्सया तन्निर्म्माणेच्छया कञ्चन अनिर्वचनीयसौन्दर्य्यं नारीविशेषं रमणीरत्नं विरचय्य निर्म्माय, क्रीड़ाकासारस्य केलिसरोवरस्य सारम् उत्कृष्टांशरूपं यत् अरविन्दं कमलं तत्सौन्दर्य्येण पादद्वयं चरणयुगलं, अस्या विधाय इति सर्व्वत्रान्वेति।

---

সলিলপূর্ণ সরোবরগুলি দেখিতে দেখিতে, ক্রমে ক্রমে অসীম লীলা-সহকারে অবন্তিসুন্দরীর নিকটে উপস্থিত হইলেন। বালচন্দ্রিকা "অসঙ্কোচে এইস্থানে আইস" এই বলিয়া রাজবাহনকে হস্তসঙ্কেতে আহ্বান করিলেন। ইন্দ্র অপেক্ষা অধিক তেজঃসম্পন্ন রাজবাহনও কৃশোদরী অবন্তিসুন্দরীর সমীপে উপস্থিত হইলেন। (ঙ—চ)

যে অবন্তিসুন্দরীকে দেখিয়া লোকে ভাবিত—বুঝি কামদেব কামনাবশে নিজ পত্নী রতির একটী সুরম্য ক্রীড়াপুত্তলিকা নির্ম্মাণ করিবার ইচ্ছায়

लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगम्, जैत्ररथ-चातुर्य्येण घनं जघनम्, किञ्चिद्विकसल्लीलावतंस-कह्लार-कोरक-कोटरानुवृत्त्या गङ्गावर्त्तसनाभिं नाभिम्, सौधारोहणपरिपाट्या वलित्रयम्, मौर्वीमधुकरपङ्क्ति-नीलिमलीलया रोमावलिम्, पूर्णसुवर्णकलसशोभया कुचद्वन्द्वम्, लतामण्डपसौकुमार्य्येण बाहू, जयशङ्खाभिख्यया कण्ठम्, (ज), कामिकर्णपूर-सहकार

(ज) उत्कृष्टं यानं विहारः यत्र तथाभूतं यत् वनम् उपवनं तत्र या दीर्घिका रम्यवापी तत्र या मत्तमरालिका मत्ताः हंसवनिताः तासां गमनरीत्या गतिप्रकारेण लीलया अलसा मन्दा या गतिः तस्याः विलासं स्फुरणम् उद्यानवनेति सहकारवृत्त्येत्यादि-वत् सामान्यविशेषभावेन वा सामञ्जस्यमवगन्तव्यम्। तूणीरलावण्येन आत्मनः इषुधि-सौन्दर्य्येण, लीलामन्दिरस्य विलासनिकेतनस्य द्वारे या कदली रम्भास्तम्भः तस्याः लालित्येन लावण्येन जैत्ररथस्य निजस्य विजयस्यन्दनस्य चातुर्य्येण तदीयचक्रनिर्म्माण-कौशलेन इत्यर्थः। किञ्चित् विकसन्ति यानि लीलावतंसकह्लारकोरकाणि तेषां कोटरस्य सुषिरप्रदेशस्य अनुवृत्त्या अनुसरणेन तदीयसौन्दर्य्यप्रकारेण इति यावत्। आरुह्यते अनेनेति आरोहणं सोपानश्रेणी, सौधस्य आरोहणं तत्परिपाट्या तत्प्रकारेण वलित्रयं, मौर्वी स्वीयधनुर्गुणरूपा या मधुकरपङ्क्तिः 'मौर्वी रोलम्बमाला' इति कविप्रसिद्धिः। तस्याः नीलिम्नः नीलगुणस्य लीलया प्रकारेण रोमावलिं, लतामण्डपस्य लतामयगृहस्य सौकुमार्य्येण कोमलतया बाहू, जयशङ्खस्य अभिख्यया शोभया।

একটী নারীবিশেষ রচনা করিয়া স্বীয় ক্রীড়াসরোবরজাত অরবিন্দের সৌন্দর্য্যে তাহার পাদদ্বয়, উপবনবাপীস্থিত মত্ত মরালদয়িতার গমনরীতিতে লীলামন্থর গতি, তূণীরের লাবণ্য জঙ্ঘা, বিশাল গৃহের দ্বারদেশে স্থিত রম্ভাস্তম্ভের সৌন্দর্য্যে মনোজ্ঞ উরুযুগল, জৈত্র রথের নৈপুণ্যে ঘন জঘন, কিঞ্চিৎ বিকসিত লীলাবতংস কহ্লারকোরকের অনুকরণে গঙ্গাবর্ত্ততুল্য

पल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदम्, बाणायमान-पुष्पलावण्येन शुचि स्मितम्, अग्रदूतिका कलकण्ठिकाकलालाप-माधुर्य्येण वचनजातम्, सकलसैनिकनायक-मलयमारुत-सौरभ्येण निश्वासपवनम्, जयध्वजमीनदर्पेण लोचनयुगलम्, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधाकरस्यापनीतकलङ्कया कान्त्या वदनम्, लीलामयूरबर्हभङ्ग्या केशपाशञ्च विधाय समस्तमकरन्दकस्तूरिका-सम्मितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्म्मितेव रराज (भ)। सा मूर्त्ति-

(भ) कामिनः रसिकस्य कर्णपूरः कर्णावतंसः यः सहकारपल्लवः तस्य रागेण रक्ततया, प्रतिबिम्बीकृतं सदृशीकृतं बिम्बं तदाख्यं परिणतफलं येन तथाभूतं सुरक्तमित्यर्थः। रदनच्छदम् अधरम्। बाणायमानं कामस्य बाणस्थाने स्थितं यत् पुष्पं प्रस्तावात् श्वेतकुसुमं तस्य लावण्येन शुचि अविशुद्धं स्मितं नातिप्रकाशं हास्यं "धवलता वर्ण्यते हासकीर्त्त्योः" इति कविप्रसिद्धिः। अग्रदूतिका दूतीषु प्रधानतमा या कल-कण्ठिका कोकिलवनिता तस्याः कलालापः अव्यक्तमधुरध्वनिः, तस्य माधुर्य्येण कोमलतया वचनजातं वाक्यसमूहम्; सकलानां सैनिकानां नायकस्य अधिपतेः प्रधान-भूतस्य इत्यर्थः। मलयमारुतस्य मलयवायोः सौरभ्येण सौगन्ध्येन निश्वासपवनं श्वासवायुम्, जयध्वजः विजयकेतनं मीनः तस्य दर्पेण गर्व्वेण लोचनयुगलम् अक्षिणी, चापयष्टेः धनुर्द्दण्डस्य श्रिया शोभया भ्रूलते लतिकाकारे भ्रुवौ, प्रथमसुहृदः बन्धूत्तमस्य सुधाकरस्य चन्द्रस्य अपनीतकलङ्कया कलङ्कशून्यया कान्त्या सौन्दर्य्येण वदनं मुखम्,

---

নাভি সৌধসোপানের পরিপাটীক্রমে ত্রিবলি, মৌর্ব্বীরূপ মধুকর পঙ্‌ক্তির নীলিমায় রোমাবলি, সুবর্ণময় পূর্ণ কলসের শোভায় কুচযুগল, লতামণ্ডপের সৌকুমার্য্যে বাহুদ্বয়, জয়শঙ্খের শোভায় কণ্ঠ, কামিগণের কর্ণালঙ্কার সহকারপল্লবের রক্তিমায় বিম্বতুল্য অধরবিম্ব, বাণভূত পুষ্পের

मतीव लक्ष्मीर्मालवेशकन्यका स्वेनैवाराध्यमानं सङ्कल्पित-वरप्रदानायाविर्भूतं मूर्त्तिमन्तं मन्मथमिव तमालोक्य मन्दमारुतान्दोलिता लतेव मदनावेशवती चकम्पे। तदनु-क्रीड़ाविस्रम्भाभिवृत्ता लज्जया कानि कान्यपि भावान्तराणि व्यधत्त (ञ)। 'ललनाजनं सृजता विधात्रा नूनमेषा

लीलामयूरस्य क्रीड़ामयूरस्य बर्हाणि पिच्छानि तेषां भङ्ग्या प्रकारेण केशपाशं कुन्तल-गुच्छं विधायेति पदं सर्व्वत्र वोक्तस्थलेषु अन्वेति। तथाहि अवन्तिसुन्दर्य्याः पाद-प्रभृतीनां शोभा क्रीड़ारविन्दप्रभृतिशोभासम्पदा प्रशस्तिमतीति भावः। सर्व्वत्रैव उपलक्षणे तृतीया मन्तव्या। तथाच पादद्वयादिकं तादृशारविन्दसौन्दर्य्यादुपलक्षितं विधाय इत्यर्थः। समस्ताभिः समग्राभिः मकरन्दैः पुष्परसैः कस्तूरिकाभिः मृगनाभिभिः च सम्मितेन तुल्येन तत्सदृशसौरभशालिना मलयजरसेन चन्दनरसेन प्रक्षाल्य संसिच्य स्नपयित्वा इत्यर्थः। कर्पूररागेण कर्पूरपरागसमूहेन संसृज्य सम्पृक्ततां नीत्वा। निर्म्मिता इव रराज शुशुभे। प्रथमतः प्रस्तुताया वसुमतीवर्णनायाः प्रायेण एतद्वर्णनावस्तु-पर्य्यालोचनेन साम्यप्रत्ययात् नास्य सन्दर्भस्य टीकाविधौ तथाऽस्माभिर्यत्नः कृतः, भाव-विशेषाः तदालोचनादधिगन्तव्याः। निर्म्मितेव इत्यनेन तथा निर्म्माणरूपक्रियायाः सम्भावनात् क्रियोत्प्रेक्षा। कस्तूरिकासम्मितेन इत्युपमा। केचित् विधाय इति पूर्व्वांशे अतिशयोक्तिमङ्गीकुर्व्वन्ति।

---

লাবণ্যে বিশুদ্ধ ঈষৎ হাস্য, প্রধান দূতী কোকিলার মধুর আলাপের মাধুর্য্যে বচনসমূহ, সমস্ত সেনাগণের প্রধান মলয়ানিলের সৌরভে নিশ্বাস-বায়ু, স্বীয় বিজয়ধ্বজ মীনের শোভাসম্ভারে লোচনদ্বয়, নিজ ধনুর সৌন্দর্য্যে ভ্রূযুগল, প্রধান বন্ধু সুধাংশুর কলঙ্কশূন্য কান্তিচ্ছটায় আনন, কেলিসাধন ময়ূরের পিচ্ছ-লাবণ্যে কেশপাশ নির্ম্মাণ করিয়াছেন, পরে সর্ব্ববিধ কুসুমরস ও কস্তূরিকাতুল্য চন্দনরসে প্রক্ষালিত করিয়া কর্পূরপরাগ দ্বারা সম্পৃক্ত করিয়াই যেন স্থাপন করিয়াছেন। (ছ—জ—ঝ)

घुणाक्षरन्यायेन निर्म्मिता। नो चेदब्जभूरेवंविधनिर्म्माणनिपुणो यदि स्यात्, तर्हि तत्समानलावण्यामन्यां तरुणीं किं न करोति' इति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सा किञ्चित् सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किञ्चिदाकुञ्चितैरञ्चितभ्रूलतैरपाङ्गवीक्षितैरात्मनः कुरङ्गस्यानाय-मानलावण्यं राजवाहनं विलोकयन्त्यतिष्ठत् (ट)। सोऽपि

(ञ) मालवेशस्य मानसारस्य कन्यका दुहिता सङ्कल्पितस्य मनसा भावितस्य वरस्य प्रदानाय आविर्भूतं दत्तसाक्षात्कारं त राजवाहनम्। मदनाविष्टवती कामभाव-विकला सती चकम्पे, हृदये सात्त्विकभावोदयात् कम्पवती जाता। तदनु तदनन्तरं क्रीड़ाविश्रम्भात् निःसङ्कोचं क्रीड़ाविलासात्। निवृत्ता प्राप्तविरामा, भावान्तराणि कामजभावभेदान् व्यधत्त चकार प्रकाशयामास इति यावत्। राजवाहनदर्शनेन तदुपरि सा परमसमासक्तिमती जाता इति भावः।

(ट) एषा दृश्यमाना रमणी अवन्तिसुन्दरीत्यर्थः। घुणाक्षरन्यायेन घुणस्य अक्षररीत्या। घुणो हि नाम कीटविशेषः प्रकृतिसुलभेन भावेन वंशकाष्ठादीनां भेदनं करोति, तत्र कदाचित् भेदनप्रकारेण किमपि अक्षरं वा स्यात्, तद्वत् विधाता सृष्टिविधौ चिरं लग्नो दैवादेव इमां रमणीं तथा सुन्दरीं स्रष्टुं शशाक, नतु पूर्वतः कल्पनया एव, अन्यथा ईदृशीमपरामपि निरमास्यदिति भावः। एतेन अवन्तिसुन्दरी त्रिलोकीगतासु ललनासु अनुपमा इति व्यज्यते। अब्जभूः कमलयोनिः ब्रह्मा यदि एवंविधनिर्म्माणे ईदृशवस्तुनोऽपरस्य निर्म्माणविधौ निपुणः कुशलः स्यात्, तस्य समानं लावण्यं यस्याः तथाभूतां तादृशीम् अन्याम् अपराम्। किं कथं न करोति निर्म्माति, तथाहि स्वेच्छाक्रमेण एव ईदृशवस्तुनिर्म्माणे शक्तो नूनमीदृशमपरमपि वस्तु निरमास्यत्; अतएव

---

মূর্ত্তিমতী লক্ষ্মীর ন্যায় সেই মালবরাজকন্যা স্বকীয় আরাধনাজনিত সন্তোষে অভীপ্সিত বরপ্রদানের জন্য আবির্ভূত মূর্ত্তিমান্ কামদেবের ন্যায় সেই রাজবাহনকে দর্শন করিয়া মদনাবেশস্পর্শে মন্দবায়ু-

तस्यास्तदोत्पादितभावरसानां सामग्र्या लब्धबलस्येव विषमशरस्य शरव्यायमानमानसो बभूव। सा मनसीत्थमचिन्तयत्—"अनन्यसाधारणसौन्दर्य्येणानेन कस्यां पुरि भाग्यवतीनां लोचनोत्सवः क्रियते ? पुत्ररत्नेनामुना पुरन्ध्रीणां पुत्रवतीनां

दैवगत्या एव अनिच्छतोऽपि त। हस्तादीदृशं वस्तु, बहिर्गतमिति भावः। सविस्मयानुरागं विस्मयेन अनुरागेण च सह इत्यर्थः। सखीजनैः अन्तरितम् आवृतं गात्रं शरीरं यस्याः लज्जाविजड़िततया सखीजनदेहान्तरालमुपगता इत्यर्थः। किञ्चिदाकुञ्चितैः स्वल्पं नीतसङ्कोचैः अञ्चिता भ्रूलता यैः वक्रीकृतभ्रूयुगैः। आनायः जालं तेन मानं सादृश्यं यस्य तादृशं लावण्यं यस्य तम्, राजवाहनं तदाख्यं कुमारं विलोकयन्ती अतिष्ठत् अवर्त्तत। अत्र राजवाहनमाश्रित्य अवन्तिसुन्दर्य्याः शृङ्गारभावो व्यक्तः। आत्मनि कुरङ्गत्वारोपात् रूपकम्, लावण्ये आनायसादृश्यप्रतिपादनात् उपमा च।

---

কম্পিতা লতিকার মত কাঁপিতে লাগিল। পরে বিশ্বাসযুক্ত ক্রীড়া হইতে নিবৃত্ত হইয়া কিছু কিছু ভাবান্তর ধারণ করিল। তখন রাজবাহন তাহাকে দেখিয়া ভাবিতে লাগিলেন,—নিশ্চয় বিধাতা রমণী সৃষ্টি করিতে করিতে, এই ললনাকে ঘুণাক্ষরন্যায়ে রচনা করিয়াছেন; তাহা না হইলে, যদি বিধাতার এইরূপ রূপনির্ম্মাণে স্বেচ্ছাক্রমে ক্ষমতা থাকিবে, তবে এরূপ মূর্ত্তি তিনি আর একটী নির্ম্মাণ করেন নাই কেন ? এইরূপ বিস্ময় ও অনুরাগাতিশয়ে অবন্তিসুন্দরীর দর্শনে রাজবাহন ব্যাপৃত থাকিলে অবন্তিসুন্দরী লজ্জায় তাহার সমক্ষে থাকিতে না পারিয়া, সখীর শরীরান্তরালে কিঞ্চিৎ অন্তরিত হইয়া তদীয় নেত্রাভিমুখে স্থিত ঈষৎ বক্রীকৃত তরঙ্গিত ভ্রূলতাযুক্ত অপাঙ্গবীক্ষণে রাজবাহনকে দেখিতে লাগিলেন, রাজবাহনের লাবণ্য অবন্তিসুন্দরীর আত্মরূপ কুরঙ্গের পক্ষে জাল সদৃশ হইয়া উঠিল (অর্থাৎ অবন্তিসুন্দরী রাজবাহনের সৌন্দর্য্যে সাতিশয় মুগ্ধ হইলেন)। (এ—ট)

तरुणीनां सीमन्तिनीनां नाम सीमन्तमौक्तिकीक्रियते ? काऽस्य देवी ? किमत्रागमनकारणमस्य ? मन्मथो मामपहसितनिजलावण्यमेनं विलोकयन्तीमसूययेवातिमात्रं मथ्नन् निजनाम सान्वयं करोति।" किं करोमि कथमयं ज्ञातव्य इति (ठ)।

(ठ) सोऽपि राजवाहनोऽपि तस्याः अवन्तिसुन्दर्य्याः उत्पादितानां भावानां रत्यादीनां सात्त्विकभावानाञ्च रसस्य शृङ्गारस्य च सामग्र्या उपकरणेन, अथवा भावाः मानसविकारभेदाः 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इति लक्षणात्। रसाः अनुरागाः तेषां सामग्र्या समुदायेन लब्धं बलं येन तथाभूतस्य उद्दीपनां गतस्य विषमशरस्य कामस्य शरव्यायमानं लक्ष्यतया स्थितं मानसं यस्य तथाभूतः, कामशरलक्ष्यचित्तः। विषमशरस्येतिपदेन कामनिर्देशे राजवाहनस्य सुतरां कामवशीभावो व्यक्तः, पञ्चानाम् एव शराणां तल्लक्ष्यताबोधस्य अनुषङ्गतः सिद्धेः। लब्धबलस्येव इत्युत्प्रेक्षा, शरव्यायमानेत्युपमा।

अनन्यसाधारणम् अन्यापेक्षया विलक्षणं सौन्दर्य्यं यस्य तेन, अनुपमलावण्येन, अनेन युवकेन, लोचनोत्सवः नेत्रप्रीतिः क्रियते। तथाहि एतद्दर्शनं सौभाग्येन युवतीनां भवति, अतः अद्य एतद्दर्शनेन धन्याऽस्मीति भावः। पुत्रवतीनां प्रशस्तपुत्रयुक्तानां पुरन्ध्रीणां कुटुम्बिनीनां गृहिणीनां सीमन्तिनीनां रमणीनां मध्ये। पुरन्ध्रीशब्दस्य पतिपुत्रयुक्तरमण्या वाचकत्वेऽपि पुत्रवतीनामिति पृथग्विशेषणेनैव सपत्नत्वोपस्थानात् सङ्कोचवृत्त्या एकदेशपरित्यागेन पतियुक्तरमणीमात्रपरत्वम्। का नाम रमणी सीमन्तमौक्तिकीक्रियते शिरोभूषणतया व्यवह्रियते, का नाम रमणी एतं पतिरूपेण लभमाना सर्वतः प्रकर्षविशेषमनुभवतीति भावः। का किमभिधाना रमणी अस्य देवी महिषी।

---

তখন অবন্তিসুন্দরীর ভাব ও অনুরাগের সামগ্রীবশতঃ কামদেব দ্বিগুণ বল প্রাপ্ত হইয়া রাজবাহনের চিত্তকে শরব্যরূপে গ্রহণ করিলেন। অবন্তিসুন্দরী মনে মনে ভাবিতে লাগিলেন,—এই অপূর্ব্ব সৌন্দর্য্যশালী

ततो बालचन्द्रिका तयोरितरेतररागवृत्तिं भावविवेकै-र्ज्ञात्वा कान्तासमाजसन्निधौ राजनन्दनोदन्तस्य सम्यगाख्यान-मनुचितमिति लोकसाधारणैर्वाक्यैरभाषत—"भर्त्तृदारिके! अयं सकलकलाप्रवीणो देवतासान्निध्यकरण आहवनिपुणो भूसुरकुमारो मणिमन्त्रौषधिज्ञः परिचर्य्यार्हो भवत्या पूज्यता"-मिति (ङ)।

अपहसितं तिरस्कृतं निजं स्वीयं लावण्यं येन तथाभूतं स्वतः प्रकृष्टतरसौन्दर्य्यशालिनम् एनं दृश्यमानं पुरुषं राजवाहनम्। अमन्यथैव। मथ्नन् आलोडितचित्तां कुर्वन् निजनाम मन्मथेत्यभिधानं सान्वयं 'मथ्नाति इति मन्मथ' इति व्युत्पत्तियुक्तं करोति। कथमयं ज्ञातव्यः अस्य परिचयः कथं प्राप्तव्य इत्यर्थः।

(ङ) तयोः राजवाहनस्य अवन्तिसुन्दर्य्याश्च इतरेतरस्य परस्परस्य रागवृत्तम् अनुरागभावम्। भावविवेकैः तदीयभावसमुपलक्षणैः, कान्तासमाजस्य स्त्रीगणस्य अपर-नारीसमाजस्य इत्यर्थः, सन्निधौ राजनन्दनस्य राजकुमारस्य राजवाहनस्य उदन्तस्य यथायथं वृत्तान्तस्य सम्यक् सविस्तरं आख्यानं कथनम्! "अयं मानसारस्य भवत्पितुः शत्रोः राजहंसस्य पुत्रः राजवाहन" इत्येवं निर्द्देशेन, अनुचितम् अकर्त्तव्यं स्त्रीभिः अधिगतस्य विषयस्य आपातत एव प्रकाशगमनस्य बहुदर्शनात् राजवाहनस्य मानसारात् अमङ्गलाशङ्कया इति भावः। लोकसाधारणैः साधारणजनगामिभिः विशेषेण अनिर्द्देशकैरित्यर्थः, वाक्यैः वक्ष्यमाणवचनैः। सकलासु कलासु सङ्गीतकादिसर्वविध-कलाविद्यासु प्रवीणः सुप्रसिद्धः। देवतानां सान्निध्यं ध्यानादिना साक्षात्कारं करोति यः आहवनिपुणः युद्धविद्यापारदर्शी भूसुरकुमारः ब्राह्मणकुमारः।

---

পুরুষ কোন পুরের ভাগ্যবতীগণের নেত্রতৃপ্তি সম্পাদন করেন? কোন্ রমণী এই পুত্ররত্ন লাভ করিয়া পুত্রবতী সীমন্তিনীগণের শিরোভূষণরূপে সম্মানিত হয়েন? ইঁহার প্রিয়া কে, এবং কি জন্যই বা ইনি এখানে আসিয়াছেন?

ततदाकर्ण्य निजमनोरथमनुवदन्त्या बालचन्द्रिकया सन्तुष्टान्तरङ्गा तरङ्गावली मन्दानिलेनेव सङ्कल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं विधाय सखीहस्तेन शस्तेन गन्ध-कुसुमाक्षत-घनसार-ताम्बूलादिना नानावस्तुनिचयेन पूजां तस्मै कारयामास (ढ)। राजवाहनो-

(ढ) निजमनोरथम् आत्मनः अभिलाषम् अनुवदन्त्या अनुवचनेन प्रकाशयन्त्या अनुवर्त्तयन्त्या इत्यर्थः। सन्तुष्टान्तरङ्गा सन्तुष्टचित्ता। सङ्कल्पजेन मनसिजेन कामेन आकुलीकृता विकारं नीता, जितः मारः येन तं कामादधिकसुन्दरम्। शस्तेन उत्कृष्टतमेन, तस्मै तस्य राजवाहनस्य उद्देशेन। राजवाहनम् अतिथियोग्येन उपचारनिचयेन अभ्यर्थयामास इति भावः।

মন্মথ তাহার সৌন্দর্য্য অপেক্ষা উৎকৃষ্ট সৌন্দর্য্যসম্পন্ন এই পুরুষকে আমি সানুরাগে অবলোকন করিতেছি বলিয়া অসূয়াসহকারেই যেন আমাকে অত্যন্ত ব্যথিত করত স্বকীয় "মন্মথ" এই নাম সার্থক করিতেছে। কি করি? কিরূপে ইহার পরিচয় পাইব? পরে বালচন্দ্রিকা তাহাদের উভয়ের পরস্পর অনুরাগ জানিয়া রমণীগণের মধ্যে রাজকুমারের প্রকৃত বৃত্তান্ত বর্ণনা করা অনুচিত ভাবিয়া সাধারণ কথায় বলিল,—'রাজকন্যে! ইনি সর্ব্ববিধ কলাবিদ্যায় নিপুণ ব্রাহ্মণকুমার, ইহার গুণে দেবতাও ইঁহাকে সাক্ষাৎ দিয়া থাকেন, এবং ইনি যুদ্ধবিদ্যায় অতি পারদর্শী, মণি মন্ত্র ওষধি প্রভৃতিও ইঁহার অনেক জানা আছে, অতএব ইনি সেবার্হ, ইঁহার পরিচর্য্যা কর। (ঠ—ড)

ইহা শুনিয়া অবন্তিসুন্দরী অত্যন্ত সন্তুষ্ট হইলেন, কারণ বালচন্দ্রিকা তাঁহারই মনোভাবের অনুরূপ কহিয়াছে। মন্দানিলসম্পর্কে যেমন তরঙ্গাবলী আকুল হইয়া উঠে, সেইরূপ কামজভাবসম্পর্কে অবন্তিসুন্দরী বিকারগ্রস্ত হইয়া কামবিজয়ী কুমার রাজবাহনকে যথোচিত আসনে

ऽप्येवमचिन्तयत्,—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती; नो चेदेतस्यामेवंविधोऽनुरागो मन्मनसि न जायेत। शापावसान-समये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव। तथापि कालजनितविशेषसूचकवाक्यैरस्या ज्ञानमुत्पादयिष्यामि। अस्मिन्नेव समये कोऽपि मनोरमो राजहंसः केलीविधित्सया तदुपकण्ठमगमत्। समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकां समवलोक्य 'समुचितो वाक्यावसर एष' इति सम्भाषणनिपुणो राजवाहनः सलीलमलपत् (ग),—"सखि!

(ग) यज्ञवती तदभिधाना रमणी। राजवाहनस्य पूर्वजन्मस्मरणकारणाच्च परत एव व्यक्तीभवति। एतस्या दृश्यमानायां रमण्याम्। तपोनिधिना तपस्विना दत्तं वितृष्टम्, जातिस्मरत्वं पूर्वजन्मस्मरणक्षमत्वम्। आवयोः यज्ञवत्याः मत्पत्न्याः मम च समानं तुल्यमेव। अहं सा च जातिस्मरत्वं प्राप्स्याव इति तस्य वरः। कालेन समयविशेषेण जनितः सम्पादितः यः विशेषः वैलक्षण्यं तत्सूचकैः वाक्यैः, तथाच तत्काले ये ये विशेषाः समभवन्, ते सम्प्रति देहान्तरलाभात् प्रच्छन्ना एव वर्त्तन्ते, तत्स्मरणे च मम वाक्यमेव संस्कारमुद्बोध्य उपयोक्ष्यते, अतस्तथा तथा वाक्यं प्रयोज्य तदवस्थां स्मारयिष्यामि इति भावः। अस्याः रमण्याः ज्ञानं स्मृत्यात्मकं बोधम् उत्पादयिष्यामि। केलीनां क्रीड़ाविशेषाणां विधित्सया कर्त्तुकामतया। तदुपकण्ठं तत्सन्निधिम् अगमत्। समुत्सुकतया समुत्कण्ठितभावेन मरालस्य

উপবেশন করাইলেন এবং সখীদ্বারা প্রশস্ত গন্ধপুষ্প প্রভৃতি উপকরণে তাঁহার সৎকার করিলেন।

রাজবাহনও এইরূপ ভাবিতে লাগিলেন,—নিশ্চয়ই ইনি আমার পূর্ব্বজন্মের পত্নী 'যজ্ঞবতী', তাহা না হইলে ইঁহার প্রতি আমার এরূপ একান্ত আসক্তি হইত না। শাপাবসানকালে পূর্ব্ব জন্ম-স্মরণ

পুরা শাম্বো নাম কশ্চিন্মহীবল্লভো মনোবল্লভো মনোবল্লভয়া সহ বিহারবাঞ্ছয়া কমলাকরমবাপ্য তত্র কোকনদকদম্ব-সমীপে নিদ্রাধীনমানসং রাজহংসং শনৈর্গৃহীত্বা বিসগুণেন তস্য চরণযুগলং নিগড়য়িত্বা কান্তামুখং সানুরাগং বিলোকয়ন্ মন্দস্মিতবিকসিতৈককপোলমণ্ডলস্তামভাষত (ন)। 'ইন্দুমুখি!

রাজহংসস্য গ্রহণার্থং সন্ধারণে নিযুক্তাং ব্যাপৃতাম্, এষঃ উপস্থিতঃ বাক্যস্য অবসরঃ সমুচিতঃ সুযোগ্যঃ, ইদানীম্ এতং বৃত্তান্তং ব্যাজীকৃত্য বাক্যপ্রয়োগঃ যুজ্যতে ইত্যর্থঃ।

(ন) মনোবল্লভঃ মনোজ্ঞঃ। মনোবল্লভয়া মনোরময়া প্রিয়য়া সহ। কমলাকরং পদ্মতড়াগম্ অবাপ্য লব্ধ্বা। কোকনদকদম্বানাং রক্তোৎপলানাং সমীপে নিদ্রয়া অধীনং বশীভূতং অভিভূতিবশাৎ বাহ্যবিষয়তো ব্যাবৃত্তমিত্যর্থঃ, মানসং চিত্তং যস্য তম্, বিসগুণেন মৃণালসূত্রেণ, নিগড়য়িত্বা বদ্ধা, কান্তায়াঃ প্রিয়ায়া মুখম্। মন্দেন ঈষৎ স্মিতেন হাস্যেন বিকসিতং প্রফুল্লম্ একং কপোলমণ্ডলং গণ্ডস্থলং যস্য তথাভূতঃ। স্মিতবিকাসিবক্ত্রঃ তাং মনোবল্লভাম্ অভাষত।

আমাদিগের দুইজনেরই তুল্য; তথাপি কালক্রমে যাহাতে পূর্ব্ব-স্মৃতি পুনরায় উদ্বুদ্ধ হয়, সেইরূপ বাক্যপ্রয়োগ করি। সেই সময়েই একটী সুন্দর রাজহংস ক্রীড়া করিবার ইচ্ছায় তাঁহার সমীপে আসিয়া উপস্থিত হইল। রাজকন্যা অত্যন্ত ঔৎসুক্যের সহিত রাজহংসটী ধরিবার জন্য বালচন্দ্রিকাকে নিযুক্ত করিলেন, রাজবাহন তাহা দেখিয়া মনে করিলেন,—ইহাই কথা বলিবার উপযুক্ত সময়। এবং বলিলেন—"সখি! পূর্ব্বকালে শাম্ব নামে এক রাজা নিজ প্রিয়তমার সহিত বিহার কামনায় কমলসরোবরে যাইয়া কোকনদবনের সন্নিকটে নিদ্রিত একটী রাজহংসকে অতি সন্তর্পণে ধারণ করিলেন এবং মৃণালতন্তু দ্বারা তাহার

मया बद्धो मरालः शान्तो मुनिवदास्ते । स्वेच्छयानेन गम्यता'-मिति । सोऽपि राजहंसः शाम्बमशपत् । 'महीपाल ! यदस्मि-न्नम्बुजषण्डे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि, तदेतत्पाप्मना रमणी-विरहसन्तापमनुभव' इति । विषण्णवदनः शाम्बो जीवनेश्वरी-विरहमसहिष्णुर्भूमौ दण्डवत् प्रणम्य सविनयमभाषत । 'महाभाग ! यदज्ञानेनाकरवम्, तत् क्षमस्व' इति (थ)।

(थ) शान्तः शमयुक्तः, शरीरचेष्टाम् अकुर्वाणः, मुनिवत् मुनिरिव आस्ते स्वेच्छया स्वच्छन्दम् अनेन यानीकृतेन गम्यताम् विहारः क्रियताम् । अम्बुजषण्डे पद्मसमूहान्तरे अनुष्ठानपरायणतया स्वकर्त्तव्यनिष्ठतया । नैष्ठिकं निष्ठावन्तम् । अकारणम् अहेतुकं राज्यगर्वेण राजत्वप्रभावेण दर्पेण, अवमानितवानसि, तत् तस्मात् एतत्पाप्मना एतस्मात् अकारणं मदवरोधात्मकासदनुष्ठानात् जातेन पापेन, रमण्याः आत्मनः प्रियायाः विरहसन्तापं वियोगवेदनाम्, अनुभव भुङ्क्ष्व । विषण्णवदनः भाविप्रिया-विरहश्रवणात् मलिनाननः । अज्ञानेन ज्ञानाभावतः यत् अन्याय्यं त्वद्बन्धनरूपं अकरवं तत् क्षमस्व, प्रतिसंहर शापकथाम् इति भावः ।

---

চরণযুগল সংযত করিয়া অনুরাগসহকারে প্রিয়মুখ সন্দর্শন করত স্মিতমুখে প্রিয়াকে বলিতে লাগিলেন। (ট—ত)

'চন্দ্রমুখি ! আমি মরালকে বদ্ধ করায় মরালটী অতি শান্ত মুনির ন্যায় অবস্থান করিতেছে, এখন এই হংস যথেচ্ছভাবে গমন করুক।' সেই রাজহংসও শাম্বকে শাপ দিল,—'হে রাজন্ ! আমি পরমানন্দে এই কমলবনমধ্যে বিহারসুখ অনুভব করিতেছিলাম; আমি একজন নৈষ্ঠিক ব্রহ্মচারী, অতএব অকারণে রাজ্যগর্বে আমাকে বদ্ধ করার জন্য তুমি নিশ্চয়ই প্রিয়াবিরহদুঃখ উপভোগ করিবে।' শাম্ব বিষণ্ণবদন

स तापसः करुणाक्रष्टचेतास्तमवदत्—'राजन्! इह जन्मनि भवतः शापफलाभावो भवतु, मद्वचनस्यामोघतया भाविनि जनने शरीरान्तरं गताया अस्याः सरसिजाक्ष्या रसेन रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनकारितया मासद्वयं शृङ्खला-निगड़ितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया राज्यसुखं लभस्व' इति। तदनु जातिस्मरत्वमपि तयोरन्वग्रहात्; तस्मान्मरालबन्धनं न करणीयं त्वया" इति (द)।

(द) करुणया दयया आक्रष्टं वशीकृतं चेतः यस्य तथाभूतः। तं शाम्बं नाम राजानम्। शापफलस्य प्रियाविरहरूपस्य अभावः अनुपस्थितिः भवतु, अस्मिन् जन्मनि न त्वया प्रियाविरहो भोक्तव्य इति भावः। अमोघतया अव्यर्थतया। अस्याः त्वत्पत्न्याः रसेन अनुरागेण रमणः पतिः भूत्वा। मम चरणयुगलस्य बन्धनकारितया बन्धनेन, मम मुहूर्त्तद्वयं व्याप्य बन्धनावस्थानुभवं प्रति प्रयोजकत्वेन इत्यर्थः। मासद्वयं व्याप्य शृङ्खलानिगड़ितचरणः शृङ्खलाबद्धपादः। अनेककालं बहुकालं यावत्। स्थलत्रये एव अत्यन्तसंयोगे द्वितीया। तदनु एतद्वचनानन्तरं तयोः शाम्बस्य तत्प्रियायाश्च जातिस्मरत्वम् अतीतजन्मस्मरणम् अन्वग्रहात् अनुग्रहेण वरं ददौ, तस्मात् मरालबन्धनेन शाम्बस्य तथा विपदापतनपर्य्यालोचनात् इत्यर्थः। मरालस्य उपस्थितस्य राजहंसस्य बन्धनं न करणीयं कर्त्तुं न उचितम्।

হইয়া ভাবী প্রিয়া-বিরহদুঃখ অসহ্য ভাবিয়া ভূমিতলে দণ্ডবৎ প্রণামানন্তর সবিনয়ে বলিলেন,—'মহাশয়! আমি অজ্ঞানবশে যাহা করিয়াছি, তাহা আপনি ক্ষমা করুন।' (থ)

সেই হংসরূপধারী তাপস দয়ার্দ্রচিত্ত হইয়া তাঁহাকে বলিলেন,—মহারাজ! এজন্মে তোমার শাপফল ভোগ করিতে হইবে না, কিন্তু আমার বাক্য অব্যর্থ, অতএব ভবিষ্যৎ জন্মে তোমার মহিষী যখন দেহান্তর

साऽपि भर्त्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता 'नूनमयं मत्प्राणवल्लभ' इति मनसा जानती रागपल्लवितमानसा समन्दहासमवोचत्,—"सौम्य! पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत्"। तथाहि लोके पण्डिता अपि दाक्षिण्येनाकार्य्यं कुर्वन्ति" इति (ध)। कान्याकुमारावेवमन्योन्यपुरातनजनननामधेये परि-

(ध) तस्य राजवाहनस्य वचनानाम् उक्तरूपाणां शाम्बसम्बन्धिनां वाक्यानां आकर्णनेन श्रवणेन अभिज्ञातः स्मृतः स्वस्य पुरातनजननस्य पूर्व्वतनजन्मनः वृत्तान्तः यया तथाभूता स्मृतजन्मान्तरा इत्यर्थः। मम प्राणवल्लभः प्राणेश्वरः स्वामीत्यर्थः। रागेण अनुरागेण पल्लवितं सुविस्तरं गतं पल्लवयुक्तं वा मानसं चित्तं यस्याः तथाभूता राजवाहने निजपतित्वबोधेन सातिशयानुरागवतीत्यर्थः। स मन्दहासं स्मितसहकारेण अवोचत्, सा अवन्तिसुन्दरीति कर्त्तृपदम्। यज्ञवत्याः तदभिधानायाः आत्मपत्न्याः सन्देशः अनुरोधवाक्यं तस्य परिपालनाय रक्षणाय। तथाविधं मृणालसूत्रकरणकमित्यर्थः। दाक्षिण्येन अन्यत्र जने अनुरागभरेण प्रकृते प्रियजने प्रीतिभरेण इत्यर्थः।

---

পরিগ্রহ করিবেন, তখন তুমিই তাহার পতি হইবে এবং দুই মুহূর্ত্ত আমার চরণ বন্ধন করিয়াছ বলিয়া দুই মাস শৃঙ্খলাবদ্ধচরণ হইয়া মহিষীর বিয়োগদুঃখ উপভোগ করিবে এবং পরে বহুকাল যাবৎ প্রিয়ার সহ রাজ্যসুখ ভোগ করিবে।' তদনন্তর তাহাদিগকে অনুগ্রহ পূর্ব্বক জাতিস্মরত্ব দান করিলেন, অতএব তুমি মরালটীকে বাঁধিও না।" (দ)

সেই রাজকন্যাও তাঁহার বাক্য শ্রবণ করিয়া স্বীয় পূর্ব্বজন্মবৃত্তান্ত স্মরণ করিয়া "নিশ্চয় ইনি আমার প্রাণেশ্বর" ইহা মনে মনে নির্দ্ধারণ করিলেন এবং সাতিশয় অনুরাগে পূর্ণ হইয়া ঈষৎ হাস্য সহকারে বলিলেন, —"মহাশয়! পূর্ব্বকালে শাম্ব যজ্ঞবতীর অনুরোধরক্ষার্থে উক্তরূপে হংসকে

चिते परस्परस्मानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः। तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलीविलोकनाय तं देशमवाप। बालचन्द्रिका तु तां दूरतो विलोक्य ससम्भ्रमं रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रमकरोत् (न)। सा मानसारमहिषी सखीसमेतया दुहितुर्नानाविधां

(न) कन्या अवन्तिसुन्दरी, कुमारः राजवाहनः। परिचिते अवगते, अन्योन्यस्य परस्परस्य पुरातनजननस्य नामधेये शाम्बयज्ञवतीरूपसंज्ञाद्वयम्। साभिज्ञं सचिह्नम्, मनोजरागः कामभावजन्यपरस्परानुरागः तेन पूर्णमानसौ परिप्लुतचित्तौ बभूवतुः, आवां तावेव पूर्वजन्मदम्पती इति निश्चयेन दृढ़मनुरागं परस्परं गतवन्तौ इति भावः। परिजनैः परिवृता वेष्टिता, दुहितुः कन्यायाः अवन्तिसुन्दर्य्याः केलीनां क्रीड़ाविशेषाणां विलोकनाय प्रेक्षणार्थम्। तां मालवेन्द्रमहिषीम्, ससम्भ्रमं सत्वरं रहस्यस्य गोपनीयस्य राजवाहनेन सह अवन्तिसुन्दर्य्याः सम्मेलनरूपस्य निर्भेदः प्रकाशः तस्मात् भिया शङ्कया रहस्यनिर्भेदमपसारयितुमित्यर्थः। वृक्षवाटिकया गृहाकारेण वर्त्तमानया वृक्षश्रेण्या कुञ्जगृहेण वा अन्तरितं अदृश्यतां प्राप्तं गात्रं यस्य तथाभूतम्, महिषीदर्शनागोचरमित्यर्थः।

---

বন্ধন করিয়াছিলেন, কারণ বুদ্ধিমান্ ব্যক্তিবর্গও প্রণয়বশতঃ অনেক অকর্ত্তব্য কার্য্যে ব্রতী হইয়া থাকেন।' (ধ)

রাজকন্যা অবন্তিসুন্দরী ও কুমার রাজবাহন এইরূপে পরস্পরের পূর্ব্বজন্মের নাম পরস্পরের জ্ঞানার্থ চিহ্ন সহকারে প্রকাশ করিয়া কামজ ভাব পরিপূর্ণ হইলেন।

সেই সময়ে মালবরাজমহিষী পরিজনে পরিবৃত হইয়া কন্যার ক্রীড়া-দর্শনার্থ সেই স্থানে আসিয়া উপস্থিত হইলেন। বালচন্দ্রিকা তাঁহাকে দূর হইতে দেখিতে পাইয়া রহস্যভঙ্গের ভয়ে সসম্ভ্রমে হস্তসঙ্কেতে পুষ্পোদ্ভবের

विहारलीलामनुभवन्ती क्षणं स्थित्वा दुहित्रा समन्विता निजागारगमनाय उद्युक्ता बभूव। मातरमनुगच्छन्त्यवन्तिसुन्दरी —"राजहंसकुलतिलक! विहारवाञ्छया केलिवने मदन्तिकमागतं भवन्तमकाण्ड एव विसृज्य मया समुचितमिति जनन्यनुगमनं क्रियते; तदनेन भवन्मनोऽनुरागोऽन्यथा मा भूत्" इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती पुनःपुनः परिवृत्तदीननयना वदनं विलोकयन्ती निजमन्दिरमगात् (प)।

(प) विहारलीलां क्रीडाकौतुकम्, अनुभवन्ती पश्यन्ती, दुहित्रा समन्विता तया सह इत्यर्थः। निजागारगमनाय स्वगृहप्रस्थानाय। राजहंसकुलस्य मरालराजवंशस्य अथच राजहंसाख्यस्य मगधराजस्य यत् कुलं चन्द्रवंशः तस्य इति श्लेषः। तिलक, प्रधानभूत, विहारवाञ्छया क्रीड़ाकामनया शृङ्गाररसानुभववासनया। अकाण्डे अकाल एव विसर्जनायोगेऽपि समये इत्यर्थः। समुचितं युक्तं जनन्यनुगमनमिति शेषः। इति हेतोः जनन्या अनुगमनं क्रियते, अनेन त्वत्परित्यागेन जनन्यनुगमनेन इत्यर्थः। भवतः मनसः अनुरागः मयि प्रीतिः अन्यथा विपर्य्यस्तः मा भूत्। समुचितं विसर्जनवेलायां वक्तुं योग्यम् आलापकलापं वचनप्रपञ्चम्। परिवृत्तं परावृत्य परावृत्य पातितं दीनं कातर्य्यपूर्णं नयनं यया तथाभूता, वदनं राजवाहनस्येति शेषः।

---

সহিত রাজবাহনকে বৃক্ষবাটিকার অন্তরালে লুক্কায়িত করিল। মানসারের সেই মহিষী সখীগণের সহিত কন্যার নানাবিধ ক্রীড়াকৌতুক দর্শন করিয়া ক্ষণকাল তথায় অবস্থানপূর্ব্বক কন্যার সহিত নিজ আগারে গমনের জন্য উদ্যোগ করিলেন। অবন্তিসুন্দরী মাতার পশ্চাতে যাইতে যাইতে হংসের প্রতি যেরূপ বাক্য প্রয়োগ করা উচিত, সেইরূপ ভাবে কুমারের প্রতি বিদায়কালে বক্তব্য বাক্য বলিতে লাগিল, যে—"হে রাজহংসকুল-

तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथित-तदन्वय-नामधेया मन्मथबाणपतनव्याकुलमानसा विरहवेदनया दिने दिने बहुलपक्षशशिकलेव क्षामक्षामा आहारादिसकलं व्यापारं परिहृत्य रहस्यमन्दिरे मलयजरस-क्षालित-पल्लव-कुसुमकल्पित-तल्पतलायत्त-तनुलता बभूव (फ)। तत्र तथाविधामवस्था-

(फ) हृदयवल्लभस्य प्रियतमस्य, राजवाहनस्य कथाप्रसङ्गे वचनप्रस्तावे बालचन्द्रिकया कथिते तस्य राजवाहनस्य अन्वयः वंशः नामधेयञ्च यस्याः तथाभूता राजवाहनस्य सोमकुले जन्म राजवाहनेति च नाम इति विज्ञापिता. मन्मथस्य कामस्य बाणपतनेन शरसम्पातेन व्याकुलं विकारमापन्नं मानसं यस्याः तथाभूता, बहुलपक्षस्य कृष्णपक्षस्य शशिकला चन्द्रकला इव क्षामक्षामा अतिक्षीणा, आभीक्ष्ण्ये द्विर्भावः। क्षै धातोः क्तप्रत्यये "क्षैशुषिपचां मकवाः" इति मादेशे क्षामेति सिद्धम्। आहारादि इत्यादिपदेन पानशयनादिवस्तूनि गृह्यन्ते, एतेन विरहवशात् विषयद्वेषरूपा कामावस्था व्यज्यते। रहस्यमन्दिरे गुप्तगृहे, कुमार्य्यास्तस्याः कस्मिंश्चित् युवके कामभावप्रकाशस्य दोषावहत्वनिश्चयात् प्रकाशमन्दिरे तथा व्यवहारपराङ्मुखता। मलयजरसः चन्दनद्रवः, तेन क्षालितानि सिक्तानि अतिशैत्यसम्पादनायेति भावः, यानि पल्लवाः कुसुमानि च तैः कल्पितं निर्म्मापितं यत् तथाभूतं शय्यातलं तदायत्ता तत्र स्थापिता तनुलता शरीरं यस्याः सा, आयत्तेति पदेन शय्यावश्यताप्रत्ययात् अल्पेनैव कालेन सा तथा कामवशगा जाता, यथा शय्यां परित्यज्य उत्थानशक्तिरपि विघटितेति व्यज्यते।

---

তিলক! বিহারের আশায় কেলিবনে তুমি আমার নিকট আসিয়াছিলে, আমি অযোগ্য কালেই তোমাকে পরিত্যাগ করিয়া জননীর অনুগমন কর্ত্তব্যবিবেচনায় চলিয়াছি, এই কারণে তোমার মনের অনুরাগ যেন বিলুপ্ত না হয়" এই বলিয়া পুনঃ পুনঃ কাতর নয়নে মুখ ফিরাইয়া কুমারের পানে চাহিতে চাহিতে নিজমন্দিরে চলিয়া গেল। (ন—প)

বালচন্দ্রিকা অবন্তিসুন্দরীর নিকটে রাজবাহনের কথাপ্রসঙ্গে তাহার

मनुभवन्तीं मन्मथानलसन्तप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलससञ्चितानि हरिचन्दनोशीर-घनसारमिलितानि तदभिषेककाल्पतानि सलिलानि, बिसतन्तु-मयानि वासांसि च, नलिनीदलमयानि तालवृन्तानि च, सन्तापहरणानि बहूनि सम्पाद्य तस्याः शरीरमशिशिरयत्। तदपि शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमिव समन्तादाविश्चकार (ब)। किंकर्त्तव्यतामूढां विषण्णां बाल-

(ब) तत्र शृङ्गारमन्दिरे तथाविधाम् अतिकठोराम् अवस्थां कामदशाम् अनुभवन्तीं भुञ्जानां मन्मथानलेन कामाग्निना सन्तप्तां व्याकुलां सुकुमारीं अतिकोमलाङ्गीम्, अनेन विशेषणेन अतिमात्रं सन्तापं प्रति हेतुकथनम्। कुमारीं तामवन्तिसुन्दरीम्। वयस्यागणः सखीगणः। काञ्चनस्य विकारः काञ्चनः तस्मिन् स्वर्णमये कलसे सञ्चितानि संगृहीतानि। हरिचन्दनादिकं सर्वमेव शैत्यसम्पादकं वस्तु, तस्याः विरहतप्तायाः अवन्तिसुन्दर्य्याः अभिषेकाय स्नानाय कल्पितानि उपपादितानि, बिसतन्तुमयानि मृणालसूत्ररचितानि, सन्तापहरणानि सन्तापविघटकानि बहूनि वस्तूनीति शेषः। अशिशिरयत् शिशिरम् अकरोत्, शीतलतां निनाय इत्यर्थः। शिशिरशब्दात् करोत्यर्थे णिच् लङि रूपम्। तदपि तथाभूतमपि शीतलोपचरणं शीतलतासम्पादकं वस्तु, तप्ततैले सलिलमिव, तस्याः अवन्तिसुन्दर्य्याः विरहतप्तायाः अङ्गे, समन्तात् सर्वतः दहनमिव दाहमिव आविश्चकार जनयामास। अत्र शीतलोपचारेण सह सलिलस्य तप्ततैलेन सह तदङ्गस्य साम्यप्रत्ययात् उपमा, दहनमिव इत्यनेन दाहक्रियायाः उत्प्रेक्षणप्रतीत्या क्रियोत्प्रेक्षा, शीतलवस्तुनः सन्तापरूपविरुद्धवस्तूत्पत्तेः विषमालङ्कारश्च।

নাম ও বংশবৃত্তান্ত প্রকাশ করিয়াছিলেন, তাহাতে রাজকন্যা হৃদয়ে কামভাব উদ্দীপ্ত হওয়ায় বিরহজনিত কষ্টে প্রতিদিন কৃষ্ণপক্ষের চন্দ্র-কলার ন্যায় ক্রমশঃ ক্ষীণ হইতে ক্ষীণতর হইতে লাগিলেন, আহারাদি

चन्द्रिकामीषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पकणाकुलेन विलोक्य विरहानलोष्णनिश्वासम्लपिताधरया नताङ्ग्या शनैः सगद्गदं व्यलापि,—"प्रियसखि! कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यमुच्यते। इयमहमयोमयैरसंख्यैरिषुभिरनेन हन्ये। सखि! चन्द्रमसं वाड़वानलादतितापकरं मन्ये। यदस्मिन्नन्तः प्रविशति शुष्यति पारावारः, सति निर्गते तदैव वर्द्धते। दोषाकरस्य दुष्कर्म्म किं वर्ण्यते मया? यदनेन निजसोदर्य्याः पद्मालयाया गेहभूतमपि कमलं हन्यते।

(भ) ईषदुन्मीलितेन विरहतापातिशयेन नयनमीलनादावपि आलस्यात्पत्या असम्पूर्णविकासितेन इत्यर्थः। बाष्पकणैः अश्रुबिन्दुभिः आकुलेन परिव्याप्तेन, विरहानलेन विरहाग्निना उष्णः सन्तापयुक्तः यः निश्वासः श्वासवायुः तेन म्लपितः मालिन्यं प्रापितः अधरः निम्न ओष्ठः यस्याः तया, नताङ्ग्या अवनतदेहया तया अवन्तिसुन्दर्य्या व्यलापि सरोदनं अभाषि। कुसुमानि अतिकोमलानि पुष्पाणि इत्यर्थः। आयुधानि प्रहरणानि यस्य तथाभूतः, पञ्च पञ्चसंख्यकाः बाणाः यस्य तथाभूतः इति च

কর্ত্তব্য বিষয়ে তাহার রুচি রহিল না, সর্ব্বদা নিভৃত মন্দিরে চন্দনরস-সম্পৃক্ত পল্লব ও কুসুমসম্ভারে শয্যা রচনা করাইয়া তাহাতে শয়ন করিয়া থাকিতেন। কুমারী অবন্তিসুন্দরী কামানলসন্তাপে ঈদৃশ উৎকট অবস্থা অনুভব করিতেছেন, ইহা দেখিয়া তাঁহার সখীবৃন্দ স্বর্ণময় কুম্ভে আহৃত হরিচন্দন উশীর কর্পূর প্রভৃতি মিশ্রিত অভিষেকার্থ সলিল, মৃণাল-তন্তুময় বসন, নলিনীদলনির্ম্মিত তালবৃন্ত প্রভৃতি বহু সন্তাপনাশক বস্তু সংগ্রহ করিয়া তাঁহার শরীর শীতল করিতে লাগিল। সেই শীতল উপচারগুলি তাঁহার অঙ্গে তপ্ততৈলে জলক্ষেপের ন্যায় সন্তাপবৃদ্ধিই করিয়া তুলিল। (ফ—ব)

विरहानलसन्तप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पीभवति मलयानिलः। नवपल्लवकल्पितं तल्पमिदमनङ्गाग्निशिखापटलमिव सन्तापं तनोस्तनोति। हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरग-रदन-लिप्तोल्वण-गरलसङ्कलितमिव तापयति

असत्यं मिथ्या एव उच्यते, तथाहि कामो न कुसुमायुधः नापि पञ्चबाणः अपि तु तद्विपरीतव्यवहारयोग्य एव इति भावः। तत्र कारणमुपन्यस्यति—इयमित्यादिना। अयोमयैः लौहमयैः असंख्यैः संख्यातीतैः, इषुभिः बाणैः। अनेन कामेन हन्ये अहमिति पूर्व्वेणान्वयः। तथाहि कामो लौहायुधः असंख्यबाणश्च इति भावः। चन्द्रमसं शीतकरं वाड़वानलात् वाड़वाग्निमपेक्ष्य अतितापकरम् अतितापप्रदं मन्ये, यत् यस्मात्, अस्मिन् चन्द्रमसि अन्तः अभ्यन्तरे प्रविशति सति पारावारः अपारः समुद्रः शुष्यति शोषं गच्छति, कृष्णपक्षे चन्द्रस्य समुद्रान्तःप्रवेशः प्रसिद्धः, शुक्लपक्षे समुद्रस्य जलं स्फीतं भवति, तदपेक्षया कृष्णपक्षे जलह्रासात् तथोक्तिः सङ्गता; निर्गते पुनः शुक्लपक्षे बहिर्गते सति वर्द्धते, वृद्धिं गच्छति पारावार इति शेषः। तदेव न तु कलात्ययेऽपि; एतेन तन्निर्गमस्यैव अन्वयव्यतिरेकभावेन वृद्धिं प्रति कारणत्वं निर्णीतम्। दोषाकरस्य दोषयोनिभूतस्य अथच निशाकरस्य, "अथ दोषा च नक्तं रजनी"विति इत्यमरः। दुष्कर्म्म दुष्कार्य्यं मया किं वर्ण्यते, न किमपि तस्य विशेषेण वर्णयितव्यमस्तीत्यर्थः। यत् यस्मात् अनेन दोषाकरेण निजसोदर्य्याः स्वीयभगिन्याः, अत्र ईप् प्रत्ययः अभिधानात्। पद्मालयायाः कमलवासिन्या लक्ष्म्याः गेहभूतम् आवासभूतमपि

---

বালচন্দ্রিকা রাজকন্যার ঈদৃশ অবস্থান্তরদর্শনে অত্যন্ত ব্যাকুল হইলে, অবন্তিসুন্দরী ঈষৎ উন্মীলিত সকটাক্ষ দৃষ্টিতে তাহার দিকে চাহিয়া বিরহানলজনিত উষ্ণ নিশ্বাসে মলিন অধর কম্পিত করিয়া ধীরে ধীরে গদ্‌গদ স্বরে কাঁদিতে কাঁদিতে বলিল—

शरीरम्। तस्मादलमलमायासेन शीतलोपचारे। लावण्य-जितमारो राजकुमार एवागदङ्कारो मन्मथज्वरापहरणे। सोऽपि लब्धुमशक्यो मया। किं करोमि" इति (भ)।

कमलं हन्यते विनाश्यते; तथाहि चन्द्रोदये पद्मस्य सङ्कोचः प्रसिद्धः, स एव पद्मस्य विनाश इति। निजाया भगिन्याः वासादौ आनुकूल्यं दूरे तावदास्तां परं तत्प्राति-कूल्यमेवायं करोतीति महदन्याय्यमस्य। विरहानलेन सन्तप्तस्य प्राप्तसन्तापस्य हृदयस्य वक्षोदेशस्य स्पर्शेण सम्पर्केण उष्णीकृतः सन्तप्तीकृतः शुष्करसः सम्पादित इत्यर्थः। एतद्विशेषणं म्लानीभावं प्रति हेतुत्वेन उपन्यस्तम्। रसवतः स्फीतत्वात् नीरसस्य च सङ्कोचस्य सिद्धत्वात् तथोक्तिः सङ्गता। नवपल्लवैः नवकिशलयैः कल्पितं विरचितं तल्पं शय्यातलं, अनङ्गाग्नेः कामानलस्य शिखापटलं ज्वालासमूहः इव तनोः शरीरस्य सन्तापं तनोति विस्तारयति जनयतीत्यर्थः। हरिचन्दनं चन्दनद्रवविशेषः। निजयष्टेः स्वीयवृक्षस्य संश्लेषवान् सम्पर्कवान् तत्र वर्त्तमान इत्यर्थः। यः उरगः तस्य रदनेषु विषदन्तेषु लिप्तं लग्नं यत् उल्बणम् उत्कटं गरलं तेन सङ्कलितं युक्तमिव। चन्दनं वृक्षलग्नसर्पदन्तस्थितविषसंपृक्तमिव च इत्यर्थः। निजयष्टिसंश्लेषवत् इत्युरगविशेषणेन अस्मिन् तद्विषसम्पर्कः अनुकूलितः। तस्मात् एतैः सर्व्वैरेव भृशं तापोत्पादनात्, शीतलोपचारे शीतलोपचारैः मम तापापनोदनविषये, आयासेन कष्टेन अलं यतः तेन तेन मम सन्तापो न क्षयतां यास्यति इति भावः। लावण्येन सौन्दर्य्येण जितः तिरस्कृतः मारः कामः येन स कामादधिकसुन्दर इत्यर्थः। राजकुमारः राजवाहनाख्यः राजपुत्र एव नान्य इत्येवकारव्यवच्छेद्यम्। मन्मथज्वरस्य कामजसन्तापस्य अपहरणे निराकरण-विषये अगदङ्कारः चिकित्सकः। तथाहि इदानीं यदि तं लभेय तदैवायं सन्तापो यासीत् नान्यथा इति।

প্রিয়সখি! কামদেবের কুসুমময় পাঁচটী বাণ একথা নিশ্চয়ই সত্য নহে, কারণ কামদেব লৌহময় অসংখ্যবাণে আহত করিতেছে। সখি! চন্দ্র আমার নিকট বাড়বানল অপেক্ষা অধিক তাপপ্রদ বলিয়া ধারণা

बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां राजवाहनलावण्याधीनमानसामनन्यशरणामवेक्ष्य आत्मन्यचिन्तयत्—'कुमारः सत्वरमानेतव्यो मया, नो चेदेनां स्मरणीयां गतिं नेष्यति मीनकेतनः। तन्नोद्याने कुमारयोरन्योन्यावलोकनवेलायामसमसायकः समं मुक्तसायकोऽभूत्। तस्मात् कुमारानयनं सुकरम्।' ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरमवाप। (म)

(म) मनोजज्वरावस्थायाः कामजतापदशायाः परमां काष्ठां चरमां सीमां गतां प्राप्ताम्। ताम् अवन्तिसुन्दरीं, राजवाहनस्य यत् लावण्यं सौन्दर्यं तदधीनं मानसं

হইতেছে, যেহেতু চন্দ্র অভ্যন্তরে প্রবেশ করিলে পারাবার শুষ্ক হইয়া যায় এবং নির্গত হইলে তখনই আবার বাড়িয়া উঠে। দোষাকর (নিশাকর অথচ দোষের উৎপত্তিভূমি) চন্দ্রের দুষ্কর্ম্ম কি আর বর্ণনা করিব? কারণ এই চন্দ্র এক গর্ভে জাত পদ্মালয়া লক্ষ্মীর আশ্রয়ীভূত কমল বিনষ্ট করিয়া ফেলে। মলয়বাতাস বিরহানলসন্তপ্ত-হৃদয়-স্পর্শে অত্যন্ত উষ্ণ হইয়া নিশ্চয় অতি অল্পতা প্রাপ্ত হয়। নবপল্লবরচিত এই শয্যা কামানলের শিখাকলাপবৎ শরীরের তাপ উৎপাদন করিতেছে। শ্বেতচন্দনও পূর্ব্বে নিজবৃক্ষে অবস্থিত সর্পের দন্তলগ্ন উৎকট বিষযুক্ত হইয়াই যেন শরীরের তাপ উৎপাদন করিতেছে। অতএব আর শীতলোপচারসম্পাদনে অধিক যত্ন করিয়া কাজ নাই। আমার এই কামজ্বরাপনোদনে সৌন্দর্য্যবিষয়ে কামবিজয়ী রাজকুমার রাজবাহনই একমাত্র চিকিৎসক। আমার পক্ষে তাহাকেও পাওয়া অসম্ভব। অতএব এখন আমি কি করিব? (ভ)

पुष्पबाणबाण-तूणीरायमाणमानसोऽनङ्गतप्तावयवसम्पर्कपरिम्लान-पल्लवशयनमधिष्ठितो राजवाहनः प्राणेश्वरीमुद्दिश्य सह पुष्पोद्भवेन संलपन्, आगतां प्रियवयस्यामालोक्य पादमूलमन्वेषणीया

यस्याः तथाभूतां तत्सौन्दर्य्यदर्शनादेः तद्वशीभूताम् अनन्यशरणाम् अनन्योपायाम्। शरणीयां गतिं मरणम्। मीनकेतनः कामः। असमाः अयुग्माः पञ्च इत्यर्थः, सायकाः बाणाः यस्य तथाभूतः पञ्चशरः, समम् एकदैव मुक्ताः क्षिप्ताः सायकाः बाणाः येन तथाभूतः। कुमारश्च कुमारी च तौ तयोः। राजवाहने अवन्तिसुन्दर्य्याञ्च इत्यर्थः। समधर्म्मणोः उभयोर्द्वन्द्वे एकशेषः। तस्मात् तत्रापि कामेन शरस्य क्षिप्तत्वात् कुमारस्य राजवाहनस्य आनयनं सुकरम् अनायाससाध्यम्, समयोचिते यथाकालमनुष्ठेये करणीये कर्त्तव्ये कर्म्मणि चतुरं कुशलम् अवस्थां दृष्ट्वा व्यवस्थां कर्त्तुं योग्यम् इत्यर्थः। सखीगणम् अपरसखीसमूहं नियुज्य, राजकुमारस्य राजवाहनस्य मन्दिरं निकेतनम् अवाप।

বালচন্দ্রিকা, উৎকট কামবিকারে অভিভূতা কোমলাঙ্গী অবন্তি-সুন্দরীকে রাজবাহনের প্রতি একান্ত অনুরক্ত জানিয়া মনে মনে চিন্তা করিলেন,—'আমি সত্বরই কুমারকে লইয়া আসিব। তাহা না হইলে, কামব্যথায় অবন্তিসুন্দরীর অন্তিম দশা উপস্থিত হইবে। সেই উপবনে রাজকন্যা ও রাজকুমার যখন পরস্পরের দর্শনে ব্যাপৃত ছিলেন, তখনই কামদেব উভয়ের প্রতি তাঁহার পঞ্চবাণ নিক্ষেপ করিয়াছেন। অতএব কুমারকে লইয়া আসা অতি সহজসাধ্য হইবে। পরে অবন্তিসুন্দরীর তত্ত্বাবধানের জন্য কালোচিত কার্য্যক্ষমা সখী-দিগকে নিযুক্ত করিয়া বালচন্দ্রিকা রাজকুমারের মন্দিরে গমন করিলেন। (ম)

लतेव बालचन्द्रिका आगतेति सन्तुष्टमनाः, निटलतट-मण्डनीभवदम्बुज-कोरकाकृतिलसदञ्जलिपुटा-'मितो निषी-दे'ति निर्द्दिष्टसमुचितासनासीनामवन्तिसुन्दरीप्रेषितं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तमपृच्छत्। (य) तया

(य) पुष्पबाणस्य कुसुमशरस्य कामस्य बाणानां शराणां तूणीरवत् आचरत् मानसं चित्तं यस्य तथाभूतः, तर्ह्यपि यथा कामस्य तूणीरे सर्व्वे बाणा आसनं लभन्ते, तथैव राजवाहनस्य मानसे तस्य सर्व्वे बाणास्तदानीमवर्त्तन्त; एतेन तस्य कामजव्यथायाः सुतरामाधिक्यं व्यज्यते। अनङ्गतप्ताः कामानलसन्तप्ताः ये अवयवाः देहभागाः तेषां सम्पर्केण संयोगेन परिम्लानं शिथिलतां गतं यत् पल्लवशयनं किसलयशय्या तत् अधिष्ठितः आश्रितः, अधिपूर्व्वस्य तिष्ठतेरधिकरणस्य कर्म्मत्वात्, कर्त्तरि क्तप्रत्यये तद्योगे कर्म्मणि द्वितीया। प्राणेश्वरीं प्रियाम् अवन्तिसुन्दरीम् उद्दिश्य लक्ष्यीकृत्य। प्रियवयस्यां बालचन्द्रिकां, पादमूलं चरणसमीपम् आगतां प्राप्तामिति तद्विशेषणविषया अन्वेति। अन्वेषणीया रोगविशेषचिकित्सार्थम् अनुसन्धेया लता औषधिलतेव। इति हेतोः सन्तुष्टमनाः अनाशंसितेन तदागमनेन सातिशयं सन्तोषं प्राप्त इत्यर्थः। निटलतटे ललाटप्रान्ते मण्डनीभवत् अलङ्काररूपेण वर्त्तमानं, अम्बुजकोरकस्येव पद्मकलिकाया इव आकृतिः यस्य तथाभूतं लसत् अञ्जलिपुटं यस्याः तां ललाटे कृताञ्जलिमित्यर्थः। "इतो निषीद" इति उक्त्वा, निर्द्दिष्टे सङ्केतेन दर्शिते समुचिते योग्ये आसने आसीनाम् उपविष्टां तां बालचन्द्रिकां कान्तायाः अवन्तिसुन्दर्य्याः वृत्तान्तं वार्त्ताम् अपृच्छत् "कथं प्रिया अवन्तिसुन्दरी" इत्यादि कुशल-संवादं पप्रच्छ इत्यर्थः।

---

রাজবাহন এরূপ বিকারগ্রস্ত হইয়াছিলেন যে, তাঁহার হৃদয়-ক্ষেত্র পঞ্চবাণের বাণসমূহের তূণীররূপে পরিণত হইয়াছিল, সমস্ত দেহ কামজ সন্তাপে সন্তপ্ত হওয়ায় তদাশ্রিত পল্লবরচিত শয্যা ম্লানতা প্রাপ্ত

सविनयमभाणि—'देव ! क्रीड़ावने भवदवलोकनकालमारभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनमलब्धवती वामने-वोन्नततरुफलमलभ्यं त्वदुरःस्थलालिङ्गनसौख्यं स्मरान्धतया लिप्सुः सा स्वयमेव पत्रिकामालिख्य 'वल्लभायैनामर्पय' इति मां नियुक्तवती ।" (२)

(२) मन्मथेन कामेन मथ्यमाना क्लिश्यमाना। पुष्पतल्पादिषु कुसुमरचितशयना-दिषु, आदिपदेन अपरापरशीतलोपचाराणां नलिनीपत्रादीनां ग्रहणम्। तापस्य शमन शान्तिम् अलब्धवती अप्राप्तवती। वामना अतिखर्व्वदेहा रमणी, अलभ्यम आत्मना प्राप्तुमयोग्यम् उन्नतस्य तरोः फलम् इव तव उरःस्थलस्य वक्षोदेशस्य यत् आलिङ्गनं तज्जन्यं सौख्यम्। स्मरान्धतया कामजमोहेन लिप्सुः प्राप्तुमिच्छुः।

হইয়াছিল। সেই অবস্থায় প্রিয়তমা-বিষয়ে পুষ্পোদ্ভবের সহিত আলাপ করিতেছিলেন। এসময়ে বালচন্দ্রিকাকে উপস্থিত দেখিয়া সন্তুষ্ট হইলেন ; কারণ, যে ওষধিলতা বহু অন্বেষণে লাভ করিতে হয়, তাহা স্বয়ংই আসিয়া পাদমূলে উপস্থিত হইয়াছে। বালচন্দ্রিকা পদ্মকোরকের মত ললাটে অঞ্জলিবন্ধন করিয়া প্রণাম করিলে, 'এই স্থানে উপবেশন কর' এই বলিয়া রাজবাহন তাঁহার অভ্যর্থনা করিলেন। বালচন্দ্রিকা নিজযোগ্য নির্দ্দিষ্ট আসনে উপবেশন করিয়া বিনয়সহকারে অবন্তিসুন্দরীর প্রেরিত তাম্বূল দান করিলেন এবং রাজবাহন তাঁহার নিকট অবন্তিসুন্দরীর বৃত্তান্ত জিজ্ঞাসা করিলে সবিনয়ে বলিতে লাগিলেন—"কুমার ! ক্রীড়া-কাননে আপনার দর্শনকাল হইতে কামবেদনায় অত্যন্ত ব্যাকুল হইয়া অবন্তিসুন্দরী পুষ্পশয্যাদি উপকরণেও শান্তিলাভ করিতে না পারিয়া

राजकुमारः पत्रिकां तामादाय पपाठ—

'सुभग ! कुसुमसुकुमारं, जगदनवद्यं विलोक्य ते रूपम् ।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम् ॥' (ल)

(ल) हे सुभग ! सुन्दर ! सौभाग्यशालिन् इत्यपि गूढार्थः। तथाहि प्रायेण पुरुष एव रमणीमुपलभ्य कामुका भवन्ति, नारी तु पुरुषमालोक्य यदि कामवशीभूता तं याचते, तदा तत् तस्य सौभाग्यमेव, मया तु त्वं याच्यसे इति भावः। ते तव कुसुमवत् पुष्पतुल्यं सुकुमारं कोमलं जगति भुवने अनवद्यम् अनिन्दनीयं रूपं सौन्दर्य्यं सर्व्वजगति प्रकर्षमावहत् लावण्यमित्यर्थः। विलोक्य विशेषेण प्रत्यक्षीकृत्य मम मानसं चित्तम् अभिलषति कामयते त्वामिति शेषः। अथवा प्रकृते अभिलाष एव कामः तद्युक्तं भवति, त्वामेव उद्दिश्य इति शेषः। त्वं तथा अहमिव अथवा सुकुमारम् आत्मनो रूपमिव चित्तं मृदुलं कोमलं कुरु ; अनुगृह्यतामियं पादानता दासीति भावः। अत्र कुसुमसुकुमारमित्युपमा समासगा, जगदनवद्यमिति व्यतिरेकः। तथा इत्यनेनापि साम्यप्रत्ययात् उपमान्तरम्। पूर्व्वार्द्धस्य परार्द्धं प्रति हेतुत्वप्रत्ययात् काव्यलिङ्गम्। एतेषां सङ्करः। आर्य्या जातिः।

অতি খর্ব্বকায়া রমণী যেমন সমুন্নত বৃক্ষের ফল অলভ্য হইলেও পাইবার জন্য উৎসুক হয়,—সেইরূপ কামান্ধতা-বশতঃ তদীয় বক্ষঃস্থলের আলিঙ্গনজনিত সুখপিপাসায় স্বয়ংই পত্রিকা লিখিয়া "আমার প্রিয়তমের নিকট এই পত্রিকাখানি দিবে" এই বলিয়া আমাকে নিযুক্ত করিয়াছেন। (য—র)

রাজকুমার সেই পত্রখানি লইয়া পড়িতে লাগিলেন,—'হে সুন্দর! কুসুমের ন্যায় সুকুমার, জগতের মধ্যে প্রশংসনীয়, ত্বদীয় সৌন্দর্য্য দর্শনে আমার মন তোমার প্রতি অনুরক্ত হইয়াছে। অতএব তুমিও আমার

इति पठित्वा सादरमभाषत—"सखि ! छायावन्मामनुवर्त्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्त्तसे। त्वच्चातुर्य्यमस्यां क्रियालतायामालवालमभूत्। यत्तवाभीष्टं येन क्रियामनोरथः फलिष्यति, तदखिलं करिष्यामि। नताङ्ग्या मम मनःकाठिन्यमाख्यातम्। यदा केलीवने कुरङ्गलोचना लोचनपथमवर्त्तत, तदैवापहृत-

(ब) तस्याः मृगीदृशः हरिणलोचनायाः अवन्तिसुन्दर्य्याः। बहिश्चराः बहिर्व्वर्त्तिनः प्राणा इव। अत्र उत्प्रेक्षा स्पष्टा। तव चातुर्य्यं कौशलम् अस्या क्रिया एव लता तस्याम् आलवालं मूलस्थितं जलसेचनखातम् अभूत्। तथाहि यथा आलवालं जलसेकी लतां परिपोषयति कालेन च तेनैव आलवालजलसेकेन लता फलवती जायते, तथैव तव चातुर्य्येण इयं क्रिया परिपुष्टा परिणामे आवयोः सङ्गतिं फलं सम्पादयिष्यतीति भावः। अत्र क्रियायां लतिकात्वारोपस्य चातुर्य्ये आलवालत्वारोपं प्रति हेतुत्वात् परम्परितरूपकम् अश्लिष्टशब्दनिबन्धनम्। क्रिया उभयोः सम्मेलनं तस्याः मनोरथः कामना फलिष्यति, साफल्यं गमिष्यति, तदखिलं तत्समग्रं करिष्यामि, अहमपि त्वदनुकूलमेव वर्त्तिष्ये। तथाहि तव सख्याः प्रस्तावो मया सादरमेव ग्रहीष्यते इति भावः। नताङ्ग्या प्रियया मम मनसः चित्तस्य काठिन्यम् अमृदुलत्वम् आख्यातं व्यक्तीकृतं, मृदुलस्य मृदुलत्वकरणे प्रार्थनानुदयात् कठिनस्यैव

প্রতি সেইরূপ কোমলতা আশ্রয় কর।" ইহা পাঠ করিয়া সাদরে বলিলেন —'সখি ! ছায়ার ন্যায় সর্ব্বদা আমার অনুগামী পুষ্পোদ্ভবের প্রিয় তুমি, সেই সুলোচনার বহিশ্চর প্রাণের তুল্য বর্ত্তমান রহিয়াছ। তোমার চাতুর্য্যই এই ক্রিয়ারূপ লতিকার আলবাল তুল্য হইয়াছে। তোমার যাহা অভিপ্রেত, যাহাতে মদীয় প্রণয়াকাঙ্ক্ষা ফলবতী হয় ; সেই সমস্তই আমি করিব। নতাঙ্গী প্রিয়া আমার মন কঠিন বলিয়া প্রকাশ করিয়াছেন।

मदीयमानसा सा स्वं मन्दिरमगात्। सा स्वचेतसो माधुर्य्य-काठिन्ये स्वयमेव जानाति। दुष्करः कन्यान्तःपुरप्रवेशः, तदनुरूपमुपायमुपपाद्य श्वः परश्वो वा नताङ्गीं सङ्गमिष्यामि। मदुदन्तमेवमाख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत, तथाविधमुपायमाचरे"ति। (व) बालचन्द्रिकापि

तथा इति। कुरङ्गलोचना मृगनयना अवन्तिसुन्दरी लोचनपथं नेत्रविषयम् आश्रित्य इति शेषः, यदा अवर्त्तत तदैव न तु विलम्बेनापि, अपहृतं चोरितं मदीयं मानसं यया तथाभूता, स्वं निजं स्वचेतसः निजचित्तस्य माधुर्य्यं कोमलता काठिन्यं परुषत्वञ्च स्वयमेव जानाति अनुभवति। कन्यान्तःपुरं प्रवेशः दुष्करः अतिकृच्छ्रेण सम्पाद्यः अशक्य एव वा। तदनुरूपं कन्यान्तःपुरप्रवेशयोग्यम् उपायं गतिम् उपपाद्य उद्भाव्य। तत् तस्मादिति भिन्नं पदं वा। नताङ्गीं तां शोभनाङ्गीम् अवन्तिसुन्दरीं सङ्गमिष्यामि, अकर्म्मकस्य मिलनमात्रार्थस्य एव सङ्गमेरात्मनेपदविधानात् अत्र नात्मनेपदम्। एवं मया प्रोक्तरूपं मम उदन्तं वृत्तान्तम् आख्याय उक्त्वा शिरीषकुसुमसुकुमारायाः शिरीषपुष्पवत् कोमलाङ्ग्याः तस्याः अवन्तिसुन्दर्य्याः। शरीरबाधा अङ्गयातना, तथाविधं तादृशम् आचर व्यवहर।

কেলিকাননে যে সময়ে মৃগনেত্রা প্রিয়া আমার চক্ষুর গোচরে অবস্থিত ছিলেন, তৎক্ষণেই আমার চিত্ত অপহরণ করিয়া তিনি স্বীয় মন্দিরে প্রস্থান করিলেন। তিনি স্বীয় চিত্তের কোমলতা বা কাঠিন্য স্বয়ংই জানেন। কন্যান্তঃপুরে প্রবেশ করা অতি দুষ্কর, অতএব সুযোগ্য উপায় স্থির করিয়া আগামী দিবসে অথবা তাহার পরদিবসে প্রিয়ার সহিত মিলিত হইব। এইরূপ ভাবে আমার কথা জানাইয়া শিরীষপুষ্পপেলবা প্রিয়তমার যাহাতে শারীরিক কষ্ট না হয়, সেইরূপ উপায়ের অনুষ্ঠান করিবে।' (ল—ব)

तस्य प्रेमगर्भितं वचनमाकर्ण्य सन्तुष्टा कन्यापुरमगच्छत्। राजवाहनोऽपि तत्र हृदयवल्लभावलोकनसुखमलभत, तदुद्यानं विरहवेदनाविनोदाय पुष्पोद्भवसमन्वितो जगाम। तत्र चकोर-लोचनावचित-पल्लव-कुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दु-मुख्या मन्मथसमाराधनस्थानञ्च, नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलञ्च, सुदतीभुक्तमुक्तं माधवीलतामण्डपान्तर-

(श) प्रेम्णा प्रणयेन गर्भितं गर्भयुक्तं कृतं प्रणयमधुरम् इत्यर्थः। हृदयवल्लभायाः प्रियतमायाः अवन्तिसुन्दर्य्याः अवलोकनात् दर्शनात् सुखम् अलभत। विरहवेदनायाः वियोगव्यथायाः विनोदाय अपनोदनाय। चकोरवत् लोचने चक्षुषी यस्याः तया चकोरनेत्रया अवन्तिसुन्दर्य्या अवचितः चयनेन संगृहीतः पल्लवानां किसलयानां कुसुमानाञ्च निकुरम्बं समूहो यस्मात् तथाभूतं महीरुहसमूहं वृक्षश्रेणीं, शरदिन्दु-मुख्याः शारदसुधाकरसदृशवदनायाः, मन्मथसमाराधनस्य कामार्च्चनस्य स्थानञ्च, नताङ्ग्याः अवन्तिसुन्दर्य्याः पदपङ्क्त्या चरणाङ्कसमूहेन चिह्नितम् अङ्कितं शीतलं सैकततलं वालुकामयतटं, सुदत्या शोभनदन्तयुक्तया तया कुमार्य्या पूर्व्वतो भुक्तं परतो मुक्तं परित्यक्तं माधवीलतामण्डपस्य अन्तरे मध्ये यत् पल्लवतल्पं किसलयरचितं

বালচন্দ্রিকাও রাজবাহনের প্রণয়পূর্ণ বাক্য শ্রবণ করিয়া সন্তুষ্টচিত্তে অন্তঃপুরে গমন করিলেন। রাজবাহনও যেস্থানে প্রিয়ার দর্শনসুখ লাভ করিয়াছিলেন, বিরহকষ্টোপশমনার্থ পুষ্পোদ্ভবের সহিত সেই স্থানে গমন করিলেন। সেখানে যাইয়া রাজবাহন, যে সকল বৃক্ষ হইতে চকোরলোচনা অবন্তিসুন্দরী কুসুম চয়ন করিয়া লইয়া গিয়াছেন—সেই বৃক্ষগুলি, যেস্থানে বসিয়া তিনি মদনপূজা সম্পাদন করিয়াছেন—সেই

पल्लवतल्पञ्च विलोकयन् ललनातिलकविलोकनवेलाजनितशेषाणि स्मारं स्मारं मन्दमारुताकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितचकितो दर्शं दर्शं मनोजकर्णेजपानामिव कोकिलकीरमधुकराणां क्वणितानि श्रावं श्रावं, मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम। (म)

शयनं तत्। ललनासु नारीगणेषु मध्ये तिलकस्य श्रेष्ठभूतस्य तिलकवत् ललाटधारणयोग्यस्य रमणीरत्नस्य इत्यर्थः। विलोकनवेलायां दर्शनकाले तत्कर्तृक-मत्कर्म्मक-दर्शनसमये इत्यर्थः। जनिताः शेषाः येषां तथाभूतानि शृङ्गाररस-सुलभवस्तूनि स्मारं स्मारं स्मृत्वा स्मृत्वा मदनाग्नेः कामानलस्य शिखा ज्वाला इव अग्निशिखायाः पल्लवस्य च रक्तत्वात् नवपल्लवस्य कामोद्दीपकत्वाच्च साम्यं गम्यम्। मारविकारेण कामजव्याकुलतया। असहिष्णुः अक्षमः। कुत्राप्यवस्थानम् असहमान इत्यर्थः।

স্থান, তাহার পদচিহ্নে চিহ্নিত সুশীতল বালুকাময় প্রদেশ এবং উপভোগানন্তর পরিহৃত মাধবীলতামণ্ডপের অভ্যন্তরবর্ত্তী পল্লবরচিত শয্যা—এই সকল দেখিতে দেখিতে, নারীশ্রেষ্ঠ অবন্তিসুন্দরীর দর্শনকালে সমুদ্গত ভাবাদি স্মরণ করিতে করিতে মন্দানিলকম্পিত নবজাত চূতপল্লবগুলিকে মদনানলের শিখার ন্যায় অতি চকিতভাবে দর্শন করিতে করিতে, এবং কামদেবের কর্ণেজপ অনুচরের ন্যায় কোকিল ও ভৃঙ্গের শব্দ শুনিতে শুনিতে কামজনিত বিকারবশতঃ সুস্থভাবে কুত্রাপি অবস্থান করিতে না পারিয়া পরিভ্রমণ করিতে লাগিলেন। (শ)

तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणि-कुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहन-माशीर्वादपूर्वकं ददर्श। राजा सादरं—"को भवान्, कस्यां विद्यायां निपुण" इति तं पप्रच्छ। स च—"विद्येश्वरनाम-धेयोऽहम् ऐन्द्रजालिकविद्याकोविदो विविधेषु देशेषु राजमनो-रञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मी"ति शशंस। पुनरपि राजवाहनं सम्यगालोक्य—'अस्यां लीलावनौ पाण्डुरतानिमित्तं कि'" इति साभिप्रायं विहस्यापृच्छत्। पुष्पोद्भवस्य ऐन्द्रजालिक-चातुर्यं निजकार्य्यकरणं तर्कयन्नेनम् आदरेण बभाषे—"ननु सतां सद्यस्याभाषणपूर्वतया चिरं रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः। सुहृदामकथ्यञ्च किमस्ति? केलीवनेऽस्मिन्

(ष) धरणीसुरः ब्राह्मणः। सूक्ष्मम् अतिसूक्ष्मतन्तुरचितं चित्रं रञ्जितं विस्मय-करं वा निवसनं वस्त्रं यस्य तथाभूतः। स्फुरता मणिकुण्डलेन रत्नमयकुण्डला-भरणेन मण्डितः अलङ्कृतः। मुण्डितं केशशून्यं कृतं मस्तकं येन तथाभूतेन मानवेन सहचरजनेन समेतः युक्तः। चतुरवेषेण निपुणवेशेन मनोरमः मनोज्ञः यदृच्छया स्वच्छन्दक्रमेण समागतः समन्ततः, सर्व्वदिक्षु अभ्युल्लसत् प्रसरत् तेजोमण्डलं तेजोराशिः

সেই সময়ে একজন ব্রাহ্মণ যথেচ্ছাক্রমে আশীর্ব্বাদপুরঃসর তেজো-দীপ্ত রাজবাহনের সমীপে উপস্থিত হইলেন। ব্রাহ্মণের পরিধানে সূক্ষ্ম বিচিত্র বসন, কর্ণে স্ফুরিত মণিময় কুণ্ডল, তাঁহার সমভিব্যাহারে বহু মুণ্ডিতমস্তক মানব. তাহার বেশ অতি নিপুণ ব্যক্তির ন্যায়।

**वसन्तमहोत्सवागताया मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकसन्दर्शनेन अन्योन्यरागातिरेकः समजायत। सतत-सम्भोगसिद्ध्युपायाभावेनासावीदृशीमवस्थामनुभवती”ति। (ष)**

यस्य तं राजवाहनम् आशीर्व्वादपूर्व्वकम् आशीर्व्वचनं प्रयुज्य। राजा राजवाहनः। तं ब्राह्मणम्। ऐन्द्रजालिकविद्याया कोविदः पारदर्शी। शशंस कथयामास। सम्यक् अभि-निवेशेन आलोक्य दृष्ट्वा। लीलावनी विलासभूमी। पाण्डुरतायाः शरीरवर्त्ति पाण्डुरभावस्य निमित्तं कारणं किं, साभिप्रायं साकूतं विहस्य स्मितं कृत्वा। एतेन प्रकृतवृत्तान्तस्य अनेन ज्ञातत्वं व्यज्यते। ऐन्द्रजालिकस्य चातुर्य्यं क्रीडानैपुण्यं निजकार्य्यस्य स्वीय-कर्म्मणः, बन्धुना राजवाहनेन सह अवन्तिसुन्दर्य्याः सम्मेलनव्यापाररूपस्य इत्यर्थः। करणं साधकतमं तर्कयन् विमृशन्। एनम् ऐन्द्रजालिकविद्याचतुरं ब्राह्मणं सादरं बभाषे उक्तवान् वक्ष्यमाणमिति शेषः। सतां साधुजनानां सख्यस्य बन्धुत्वस्य आभाषणं सम्भाषणमात्रमेव पूर्व्वम् अव्यवहितपूर्व्ववर्त्ति कारणमित्यर्थः, यस्य तस्य भावस्तत्ता तया “सम्बन्धमाभाषणपूर्व्वमाहु”रित्यादिमहाजनवचनान्यत्र प्रमाणतां गच्छन्ति। रुचिरं मनोरमं भाषणम् आलापः यस्य तथाभूतः मनोज्ञवाक् सुहृदां बन्धूनां समीपे किं वस्तु रहस्यम् अरहस्यं वा किम् अकथ्यम् अवक्तव्यम् अस्ति, न किमपि इत्यर्थः। अतएव अस्य कारणं रहस्यमपि त्वयि प्रकाशयितुं नास्ति सङ्कोच इति तात्पर्य्यम्। वसन्तमहोत्सवं वसन्तकालीनानन्दव्यापारे मदनार्च्चनरूपे आगतायाः उपस्थितायाः इह वने इति शेषः। आकस्मिकसन्दर्शनेन अनाशंसितेन एव परस्परं विलोकनव्यापारेण इत्यर्थः।

রাজবাহন সাদরে তাঁহাকে জিজ্ঞাসা করিলেন—‘আপনি কে? আপনি কোন্ বিদ্যায় অধিক নিপুণ?’ সেই ব্রাহ্মণ উত্তর করিল—‘আমার নাম বিদ্যেশ্বর, আমি ঐন্দ্রজালিক বিদ্যায় পারদর্শী, নানাদেশে রাজগণের মনো-রঞ্জনার্থ ভ্রমণ করিতে করিতে আজ উজ্জয়িনীতে আসিয়া উপস্থিত হইয়াছি।

विदेश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचित-मन्दहासो व्याजहार,—"देव ! भवदनुचरे मयि तिष्ठति तव कार्य्यमसाध्यं किमस्ति ? अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति वृत्तान्त एष राजकन्यायै सखीमुखेन पूर्वमेव कथयितव्य" इति। सन्तुष्टमना महीपति-रनिमित्तं मित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भ-कृत्रिमप्रेम-सहजसौहार्द्दवेदिनं तं विदेश्वरं सह,हुमानं विस-

अन्यस्य परस्परस्य रागातिरेकः अनुरागबाहुल्यं ; सततं यः सम्भोगः तस्याः प्रियायाः सङ्गसुखभोगः, तस्य सिद्धेः उपायस्य हेतोः अभाविन ।

(ख) लज्जया, निजरहस्यप्रकाशजनितसङ्कोचेन अभिरामं रमणीयदर्शनं राजकुमारस्य राजवाहनस्य मुखम् अभिवीक्ष्य, विरचितमन्दहासः कृतस्मितः। तव किं कार्य्यं सम्पाद्यम् अभिप्रेतं, असाध्यं साधनानर्हम् अस्ति, अपि तु सर्वमेव मया अनुचरेण साधयितुं शक्यमिति भावः। मोहयन् अभिभूतं कुर्वन् पौरजनानां समक्षं दृष्टिगोचरे एव पश्यता-मेव पौरजनानामित्यर्थः। तस्य मालवेन्द्रस्य तनयायाः अवन्तिसुन्दर्य्याः परिणयम् उद्वाहक्रियां, रचयित्वा सम्पाद्य, राजकन्यायै अवन्तिसुन्दर्य्यै। महीपतिः राजा राजवाहनः, अनिमित्तं मित्रम् अकारणसुहृदं, प्रकटीकृतं प्रकाशीकृतं कृत्रिमक्रियायाः ऐन्द्रजालिकक्रियानिवर्त्तितायाः क्रियायाः पाटवं नैपुण्यं येन तथाभूतम्। विप्रलम्भः

পুনরায় রাজবাহনের প্রতি নিবিষ্টভাবে দৃষ্টি করিয়া কোনও অন্তর্গত অভিপ্রায়ব্যঞ্জক হাস্য করিয়া জিজ্ঞাসা করিলেন—"এই কেলিকাননে আপনার পাণ্ডুরতা উপস্থিত হইবার কারণ কি ? পুষ্পোদ্ভব ঐন্দ্রজালিকের চাতুর্য্য দ্বারাই স্বীয় কার্য্য সম্পন্ন হইবে ভাবিয়া সাদরে ঐ ব্রাহ্মণকে বলিলেন,—মহাশয় ! সাধুগণের সম্ভাষণমাত্রেই সখ্য ঘটিয়া থাকে, অত-

सर्ज। अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं सङ्गमोपायं वेदयित्वा कौतुकाकृष्टहृदयः 'कथमिमां क्षपां क्षपयामी'त्यतिष्ठत् (स)। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगीति-

प्रतारणं कृत्रिमप्रेम असत्यप्रणयः सहजसौहार्द्दं स्वाभाविकस्नेहः तान् वेत्ति यः तं तत्तद्विषयाणां गूढतत्त्वाभिज्ञम्। सबहुमानं ससम्मानम्। महीसुरेण ब्राह्मणेन विद्येश्वरेण क्रियमाणाम् अनतिव्यवहितोत्तरकाले एव कर्त्तव्यं, भविष्यत्सामीप्ये वर्त्तमानार्थकस्य आनशः जातत्वात्, सङ्गमोपायम् उभयोः सम्मिलनगतिम्। कौतुकेन उत्कण्ठया आकृष्टम् अभिभूतं हृदयं यस्य तथाभूतः। कथमित्यादि, क्षपयामि अतिवाहयामि, तथाहि अतिकष्टेन एव तां रजनीं सोत्कण्ठम् अतिचक्राम इति भावः।

এব আপনি প্রিয়বয়স্যের স্থান অধিকার করিয়াছেন. বন্ধুর নিকটে কিছুই অবক্তব্য থাকিতে পারে না। এই ক্রীড়াকাননে মালবরাজকন্যা অবন্তিসুন্দরী বসন্তমহোৎসব-সম্পাদনার্থ আসিয়াছিলেন, তাঁহার সহিত এই রাজকুমারের আকস্মিক সন্দর্শনে পরস্পরের প্রতি পরস্পর অনুরক্ত হইয়াছেন, কিন্তু নিরন্তর সম্ভোগসিদ্ধির কোনও উপায় না দেখিয়া কুমার এইরূপ ব্যথিতাবস্থা প্রাপ্ত হইয়াছেন।" (য)

বিদ্যেশ্বর রাজবাহনের মুখে লজ্জাজনিত রমণীয়তা দর্শন করিয়া মন্দহাস্য সহকারে বলিলেন,—'কুমার! আমি আপনার অনুচর, আমি বর্ত্তমান থাকিতে আপনার কোন্ কার্য্য অসাধ্য আছে? আমি ইন্দ্রজাল

चतुरस्तादृशेन महता निजपरिजनेन राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणामं ऐन्द्रजालिकः समागत” इति द्वाःस्थैर्विज्ञपितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानो विदेशेश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु समधिकरागरञ्जितसामाजिकमनोवृत्तिषु पिच्छिकाभ्रमणेषु सपरिवारं परिवृढं भ्रामयन् मुकुलितनयनः क्षणमतिष्ठत् (ह)। तदनु विषमं विषमुल्वणं

(ह) परेद्युः परस्मिन् दिवसे। रसाः शृङ्गारादयः। भावाः शृङ्गारादिस्थायिभावाः रत्यादयः, गीतिः सङ्गीतकानि तासां रीतिषु प्रकारेषु चतुरः निपुणः नानाभावप्रतिपादनपटुः। तादृशेन रसादिचतुरेण अथवा पूर्व्वोक्तरूपेण मुण्डितमस्तकमानुषसहितेन। महता बहुलेन। दौवारिकाणां द्वारपालानां निकटे निवेदितः निजवृत्तान्तो येन सः अहम् ऐन्द्रजालिकः, “एतावदेतावत् आश्चर्य्यं दर्शयितुं प्रभवामि तन्निवेदय राज्ञां” इत्येवं प्रकाशितनिजव्याख्यान इत्यर्थः। द्वारि तिष्ठन्ति

---

বিদ্যাপ্রভাবে মালবরাজকে মুগ্ধ করিয়া পৌরজনের সমক্ষেই মালবরাজকন্যার সহিত আপনার পরিণয় সাধনানন্তর আপনাকে কন্যান্তঃপুরে প্রবেশ করাইব। এই বৃত্তান্ত পূর্ব্বেই সখীর মুখে রাজকন্যার নিকটে বলিয়া পাঠাইতে হইবে।” রাজবাহন বিদ্যেশ্বরের বাক্যশ্রবণে অত্যন্ত সন্তুষ্ট হইলেন এবং অকারণমিত্র ইন্দ্রজালক্রিয়ায় চাতুর্য্যপ্রকাশকারী প্রবঞ্চনা কৃত্রিম প্রণয় ও সহজ সৌহার্দ্দবিষয়ে অভিজ্ঞ বিদ্যেশ্বরকে সসম্মানে বিদায় দিলেন।

**वसन्तः फणालङ्करणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः। गृध्राश्च बहवस्तुण्डै रक्षि-पतीनादाय दिवि समाचरन्। ततोऽग्रजन्मा, नरसिंहस्य**

ये तैः "आतोऽनुपसर्गात् कः" इति कप्रत्ययः। द्वाःस्थैः दौवारिकैः विज्ञापितेन उक्तेन। समुत्सुकैः कौतूहलयुक्तैः अवरोधैः अन्तःपुरिकाभिः सहितेन युक्तेन। कक्षान्तरं गृहप्रकोष्ठमध्यम्। तेन राज्ञा अनुज्ञातः अनुमतः। मदकलानां मत्ततया अव्यक्तमधुरं शब्दायमानानां कोकिलानामिव मञ्जुलः मधुरः ध्वनिः शब्दः यासां तासु। समधिकेन अतिमात्रेण रागेण स्वरमूर्च्छनादिभेदेन रञ्जिता वश्यं नीता सामाजिकानाम् ऐन्द्रजालिकव्यापारदर्शनार्थं समवेतानां सभ्यानां मनोवृत्तिः याभिः तथाभूतासु सतीषु। पिञ्छिका इन्द्रजालविद्यायाः उपकरणीभूता पक्षिपिच्छादिभेदः तस्याः भ्रमणेषु घूर्णनक्रियासु सपरिवारं परिवारसहितं परिवृढ़ं मालवनाथं भ्रामयन् मोहयुक्तं कुर्व्वन्। क्षणम् अत्यल्पकालं व्याप्य मुकुलितनयनः मुद्रितनेत्रः अतिष्ठत्।

পরে রাজবাহন মনে করিলেন—যেন বিদ্যেশ্বরের ইন্দ্রজালকলানৈপুণ্যে স্বীয় অভিলষিত বিষয় সিদ্ধ হইয়াছে এবং পুষ্পোদ্ভবের সহিত নিজ মন্দিরে আসিয়া সাদরে বালচন্দ্রিকাদ্বারা প্রিয়তমা অবন্তিসুন্দরীর নিকটে বিদ্যেশ্বরের অচিরকর্ত্তব্য ক্রিয়াকলাপের সংবাদ পাঠাইয়া কৌতুকাকৃষ্ট হৃদয়ে 'কিরূপে ঐ রাত্রি যাপন করিব' ইহা ভাবিতে লাগিলেন। (স)

পরদিন প্রভাতকালে রসভাবসঙ্গীতরীতিপ্রভৃতি লোকচিত্তহারী বিষয়সমূহে সুনিপুণ বিদ্যেশ্বর আত্মসদৃশ বহু পরিজনে বেষ্টিত হইয়া রাজভবনের দ্বারে আসিয়া উপস্থিত হইলেন, দৌবারিক তাঁহার নিকট বৃত্তান্ত শুনিয়া সত্বর রাজার নিকটে যাইয়া প্রণাম-সহকারে জানাইল—'মহারাজ! একজন ইন্দ্রজালবিদ্যানিপুণ ব্রাহ্মণ

হিরণ্যকশিপোর্দৈত্যেশ্বরস্য বিদারণমভিনীয় মহদাশ্চর্য্যান্বিতং রাজানমভাষত,—"রাজন্! অবসানসময়ে ভবতা শুভসূচকং

(ঘ) তদনু তদনন্তরং বিষমম্ অপ্রতিকারম্ উল্বণম্ অত্যুৎকটং বিষং বমন্তঃ উদ্গিরন্তঃ ফণালঙ্করণাঃ ভোগভূষিতাঃ রত্নরাজিভিঃ মস্তকস্থিতৈর্মণিভিঃ তদুত্থদীপ্তিধারাভিরিতি ভাবঃ। নীরাজিতাঃ নীরাজনাযুক্তাঃ কৃতাঃ রাজমন্দিরাভোগাঃ রাজপ্রাসাদপ্রান্তাঃ যৈঃ তথাভূতাঃ ভোগিনঃ ভুজঙ্গাঃ, নিশ্চক্রুঃ নির্গতাঃ, তস্যা এব ঐন্দ্রজালিকপিচ্ছিকায়া ইতি শেষঃ। অথবা নিশ্চক্রুঃ বিচরিতুমারেভিরে। তুণ্ডৈঃ মুখৈঃ। অহিপতীন্ প্রবীণসর্পান্ আদায় গৃহীত্বা দিবি আকাশে, অগ্রজন্মা স ঐন্দ্রজালিকবিদ্যানিপুণঃ বিদ্যেশ্বরঃ। নরসিংহস্যেত্যত্র 'একদা তূভয়প্রাপ্তৌ কর্ম্মণ্যেব ন কর্ত্তরী"তি নিয়মেন তৃতীয়ায়া এব প্রাপ্তৌ ষষ্ঠীপ্রয়োগশ্চিন্ত্যঃ; কেচিত্তু আদৌ কর্ম্মানুসন্ধানং বিনা ষষ্ঠী কর্ত্তর্য্যেব কল্পয়ন্তি, অপরে তু সম্বন্ধে ষষ্ঠীং ব্যাচক্ষতে। মহদাশ্চর্য্যান্বিতং বিপুলবিস্ময়সমন্বিতং রাজানং মালবেন্দ্রম্। মহতা আশ্চর্য্যেণ অন্বিতমিতি ত্রিপদতৃতীয়াতৎপুরুষস্বীকারাৎ কথঞ্চিৎ শুদ্ধসংস্কারতা নিবার্য্যা, তুল্যাধিকরণস্য সমাসপরপদস্থ এব মহত আকারস্য বিধানাৎ। অবসানসময়ে

---

রাজদ্বারে আসিয়াছেন।' রাজা ও অন্তঃপুরিকাবর্গ তাঁহার দর্শনে কৌতূহলাক্রান্ত হইয়া তাঁহাকে আহ্বান করাইলেন। বিদ্যেশ্বর প্রকোষ্ঠমধ্যে আসিয়া সবিনয়ে আশীর্ব্বাদ করিলেন; পরে রাজার অনুমতিক্রমে যখন বিদ্যেশ্বরের পরিজনসমূহ বাদ্যধ্বনি আরম্ভ করিল, গায়কীগণ যখন কোকিলাপেক্ষা মধুর স্বরে গান করিতে লাগিল ও ইন্দ্রজালপিচ্ছিকাঘূর্ণনে যখন সমস্ত সামাজিকবৃন্দের মনোবৃত্তি আকৃষ্ট হইল, তখন বিদ্যেশ্বর ক্ষণকাল মুদ্রিতনেত্রে অবস্থান করিলেন। (ঙ)

তদনন্তর ফণাযুক্ত সর্পবৃন্দ তীক্ষ্ণ অপ্রতিকার্য্য বিষ উদ্গিরণকরত শিরঃস্থিতরত্নসমূহের কান্তিচ্ছটায় রাজপ্রাসাদের নীরাজনক্রিয়া সম্পাদনপূর্ব্বক

द्रष्टुमुचितम्। ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्य्य” इति (क्ष)। तदवलोकनकुतूहलेन महीपालेनानुज्ञातः स सङ्कल्पितार्थसिद्धिसम्भावनसंफुल्लवदनः सकलमोहजनकमञ्जनं लोचनयोर्निक्षिप्य परितो व्यलोकयत्। सर्वेषु तदैन्द्रजालिकमेव कर्म्मेति साद्भुतं पश्यत्सु, रागपल्लवितहृदयेन राजवाहनेन पूर्वं सङ्केतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य संयोजयामास। क्रियावसाने

एतत्क्रीड़ावसानकाले, शुभसूचकं मङ्गलचिह्नं किमपि द्रष्टुमुचितं द्रष्टव्यम्। ततः तस्मात् कारणात् कल्याणपरम्पराणां मङ्गलसमूहानां अवाप्तये लाभाय, भवदात्मजाकारायाः भवत्पुत्रीपदमधितिष्ठन्त्याः तरुण्याः, कुमार्य्याः। निखिलैः सर्व्वविधैः लक्षणैः सामुद्रिकोक्तचिह्नैः उपेतस्य युक्तस्य।

দর্শকের হৃদয়ে ভীতি জন্মাইয়া ভ্রমণ করিতে লাগিল এবং কতকগুলি গৃধ্র মুখে প্রবীণ সর্প লইয়া আকাশে ভ্রমণ করিতে লাগিল। তদনন্তর ব্রাহ্মণ বিদ্যেশ্বর নরসিংহকর্ত্তৃক দৈত্যরাজ হিরণ্যকশিপুর বক্ষোবিদারণের অভিনয় দেখাইয়া রাজাকে অত্যন্ত বিস্ময়ে অভিভূত করিয়া বলিল,—'মহারাজ! এই ক্রিয়ার অবসানে আপনার শুভসূচক ব্যাপার দর্শন করা উচিত, অতএব কল্যাণপরম্পরাপ্রাপ্তির নিমিত্ত ত্বদীয় কন্যাকৃতি তরুণীর সহিত সর্ব্বসুলক্ষণ কোনও রাজনন্দনের বিবাহ দেওয়া কর্ত্তব্য।' (ক্ষ)

রাজা তদ্দর্শনার্থ অত্যন্ত কৌতূহলাক্রান্ত হইয়া আজ্ঞা করিলেন, বিদ্যেশ্বর স্বীয় সঙ্কল্পিত বিষয়ের সিদ্ধি-সম্ভাবনা দেখিয়া প্রফুল্লমুখে সকলের

सति "इन्द्रजालपुरुषाः सर्वे गच्छन्तु भवन्तः" इति द्विजन्मोद्गीर्य्यमाणे सर्वे मायामानवा यथायथमन्तर्भावं गताः। राजवाहनोऽपि पूर्वसङ्कल्पितेन गूढोपायचातुर्य्येण ऐन्द्रजालिकपुरुषवत् कन्यान्तःपुरं प्रविवेश (क)। मालवेन्द्रोऽपि तदद्भुतं

(क) तदवलोकनाय कुतूहलेन कौतुकेन, सङ्कल्पितार्थस्य चिन्तितपूर्व्वस्य अवन्तिसुन्दर्य्या सह राजवाहनसम्मेलनरूपस्य सिद्धिसम्भावनेन संफुल्लं विकसितं वदनं यस्य तथाभूतः। सकलानां मोहजनकं अञ्जनं कज्जलमिदं, परितः समन्ततः। रागेण अनुरागभरेण पल्लवितं प्राप्तविस्तारं हृदयं यस्य तथाभूतः। पूर्व्वसङ्केतेन प्राक्कथितरूपेण समागताम् अनेकभूषणैः भूषिताङ्गीं वैवाहिकमन्त्रतन्त्राणां नैपुण्येन कौशलेन, अग्निं साक्षीकृत्य सम्मुखीकृत्य संयोजयामास मेलयामास। उभयोः परिणयं यथाविहितमन्त्रादिपूर्व्वकमेव सम्पादयामास इत्यर्थः। क्रियायाः प्रवर्त्तितस्य कर्म्मणः अवसाने समाप्तौ सत्याम्। द्विजन्मना ब्राह्मणेन विद्येश्वरेण। मायामानवाः इन्द्रजालप्रक्रियया उपस्थिताः अलीकपुरुषाः अन्तर्भावं अन्तर्धानं गताः। गूढोपायचातुर्य्येण गुप्तगतिनैपुण्येन। ऐन्द्रजालिकपुरुषवत् साधारणैन्द्रजालिकपुरुषतया प्रतीयमान इत्यर्थः।

মোহজনক অঞ্জন চক্ষে দিয়া চারিদিকে অবলোকন করিলেন। সকলেই সেই ব্যাপার ঐন্দ্রজালিক বিষয়েরই অন্তর্গত বলিয়া ভাবিতে লাগিল, অথচ অনুরাগযুক্তহৃদয় রাজবাহনের সহিত পূর্ব্বকৃত সঙ্কেতানুসারে উপস্থিত, বহুভূষণে ভূষিতা অবন্তিসুন্দরীকে বিবাহের মন্ত্র প্রভৃতি দ্বারা অগ্নি সাক্ষী করিয়া মিলিত করিলেন। কার্য্যশেষে বিদ্যেশ্বর—"ইন্দ্রজাল-পুরুষগণ, তোমরা স্ব স্ব স্থানে গমন কর" এই কথা বলিলে মায়ারচিত মানববৃন্দ অন্তর্হিত হইয়া গেল। রাজবাহনও পূর্ব্ব সঙ্কল্পিত গূঢ় উপায়ে ঐন্দ্রজালিক পুরুষবৎ কন্যান্তঃপুরে প্রবেশ করিলেন। (ক)

मन्यमानस्तस्मै वाड़वाय प्रचुरतरं धनं दत्त्वा—"विद्येश्वर ! त्वमिदानीं साधय" इति तं विसृज्य स्वयमन्तर्मन्दिरं जगाम । "ततोऽवन्तिसुन्दरी प्रियसहचरीसमेता वल्लभोपेता मन्दिरं ययौ ।" एवं दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैर्हरिणलोचनाया लज्जामपनयन्

( ख ) तत् विद्येश्वरेण दर्शितं वस्तु अद्भुतम् आश्चर्य्यकरं मन्यमानः वाड़वाय विप्राय तस्मै विद्येश्वराय इत्यर्थः । "वाड़वौ वह्निविप्रयौ"रित्यनेकार्थध्वनि-मञ्जरी । साधय गच्छ । अन्तर्मन्दिरं मन्दिराभ्यन्तरम् । वल्लभेन प्रियतमेन राजवाहनेन उपेता युक्ता, मन्दिरं निजनिकेतनं ययौ, अथवा राजवाहनस्य पूर्वमेव कन्यान्तः-पुरप्रवेशात् सहगमनम् असम्भवमिति वल्लभोपेता इत्यस्य विद्येश्वरप्रयुक्तेन्द्रजालिक-क्रियाच्छलेन निष्पादितराजवाहनसम्मेलना तेन राजवाहनेन सम्पादितपरिणया इत्यर्थः । पूर्वपक्षे तत इत्यस्य ऐन्द्रजालिकपुरुषान्तर्भावानन्तरमित्यर्थकरणात् कथञ्चित् सामञ्जस्यं कर्त्तव्यम् । एवम् उक्तरूपेण दैवस्य शुभादृष्टस्य मानुषस्य विद्येश्वररूपस्य प्रधानजनस्य च बलेन सामर्थ्येन मनोरथस्य निजप्रियया सम्मेलनाभिलाषात्मकस्य साफल्यं सफलताम् उपेतः प्राप्तः, सरसाभिः शृङ्गाररससूचिकाभिः मधुराभिः रमणीयाभिः चेष्टाभिः क्रियाभिः । हरिणलोचनायाः मृगीदृशः तस्याः अवन्तिसुन्दर्य्याः लज्जां

মালবরাজও উক্ত ক্রিয়াকলাপ অদ্ভুত বিবেচনা করিয়া সেই ব্রাহ্মণকে বহু ধনদানানন্তর 'বিদ্যেশ্বর! তুমি এখন প্রস্থান করিতে পার' এই কথা বলিয়া বিদায় দিয়া অন্তঃপুরে গমন করিলেন। পরে অবন্তিসুন্দরী প্রিয়সহচরীগণ সমভিব্যাহারে প্রিয় রাজবাহনের সহিত নিজ আলয়ে চলিয়া গেলেন। রাজবাহন এইরূপে দৈবশক্তি ও মানুষশক্তির প্রভাবে মনোরথানুরূপ বিষয় লাভ করিয়া রসযুক্ত মধুর ব্যবহারে ধীরে ধীরে হরিণলোচনা অবন্তিসুন্দরীর লজ্জা

सुरतरागमुपनयन् रहोविस्रम्भमुपजनयन् संलापे तदनुलापपीयूषपानलोलुभश्चित्रचित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास (ख)।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते अवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः ॥ ५ ॥

समाप्तेयं पूर्वपीठिका।

शृङ्गाररससमुद्भूतां त्रपाम् अपनयन् अपसारयन् सुरतरागं रमणकामनाम् उपनयन् उपकुर्वन्, रहसि निर्ज्जने यो विस्रम्भः विश्वासः तम् उपजनयन् "निर्ज्जनमिदं स्थानं तदत्र तव जनाद् भयेन" इत्येवं निर्भयां कुर्वन् इत्यर्थः। संलापे परस्परं कथोपकथनविषये तस्याः अनुलापः अनुकथनं तदेव पीयूषम् अमृतं तस्य पाने लोलुभः अतिलोभवान्, चित्रचित्रम् अत्याश्चर्य्यकरं चित्तहारिणं मनोहरं चतुर्द्दशभुवनानां वृत्तान्तं श्रावयामास। अनुक्रमेण वाकानुवाकाः प्रावर्त्तन्त इति भावः। अद्भुतोऽयं विद्येश्वरप्रभावः येन अहिनकुलयोरिव विरुद्धयोरपि मगधेशमालवेश्वर्योः सुतौ एवं मानसार-समक्षमेव परिणयसूत्रेण बद्धौ कृतौ इति मन्तव्यम्।

---

অপনোদন করিতে লাগিলেন এবং ক্রমে তাহার সুরতরাগ উৎপন্ন করিয়া নির্জ্জন স্থানে নির্ভীকতা সম্পাদন পূর্ব্বক কথোপকথনে লোলুপ হইয়া চতুর্দ্দশ ভুবনের মনোজ্ঞ বৃত্তান্ত শ্রবণ করাইলেন। (খ)

পঞ্চমোচ্ছ্বাস সমাপ্ত। ৫

# उत्तरपीठिकायाम्

## प्रथमोच्छ्वासः

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत—'दयित! त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः। अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः (क)। पक्कमिदानीं त्वत्पादपद्मपरिचर्य्याफलम्। अस्य च

(क) उत्तमाङ्गना ललनाकुलललामभूता अवन्तिसुन्दरी, भुवनवृत्तान्तं चतुर्द्दश-भुवां संवादं श्रुत्वा आकर्ण्य वदतो राजवाहनादिति शेषः। विस्मयेन आश्चर्य्यरसेन अद्भुतवृत्तान्तानां श्रवणजन्येन इत्यर्थः। विकसिते प्रफुल्ले अक्षिणी चक्षुषी यस्याः सा, अक्षिशब्दात् बहुव्रीहौ समासान्ते अत्प्रत्यये स्त्रियां ङीप्। सस्मितम् ईषद्धाससहकारेण इदं वक्ष्यमाणरूपम्। श्रोत्रवृत्तिः कर्णवृत्तिः चरितार्था कृतकृत्या, इतः पूर्वमश्रुतस्य परमरमणीयस्य वृत्तान्तस्य श्रवणादिति भावः। तमः अज्ञानं तदेव तमः अन्धकारं तत् अपहन्ति यः तथाभूतः अज्ञानान्धकार-निवर्त्तकः ज्ञानम् एव प्रदीपः। अत्र अज्ञानरूपे तमसि अन्धकारत्वरूपतमस्त्वारोपस्य श्लेषवशात् प्रत्ययात् ज्ञाने च दीपत्वस्य आरोपात् श्लिष्टरूपकम्।

---

বরাঙ্গনা অবন্তিসুন্দরী রাজবাহনের মুখে চতুর্দ্দশভুবনবৃত্তান্ত শ্রবণ করিয়া বিস্ময়ে অভিভূত হইলেন এবং ঈষৎ হাস্য করিয়া কহিলেন, "প্রিয়তম! তোমার অনুগ্রহে আজ আমার শ্রবণবৃত্তি চরিতার্থ হইয়াছে, আজ তুমি আমার অজ্ঞানোপহত হৃদয়ে অজ্ঞানান্ধকারের উচ্ছেদকর জ্ঞানপ্রদীপ জ্বালিয়া দিয়াছ। আজ আমি তোমার চরণসেবার প্রকৃষ্ট

त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम्। अभवदीयं हि नैव किञ्चिन्मत्सम्बद्धम्। अथवा अस्त्येवास्यापि जनस्य क्वचित् प्रभुत्वम्। अशक्यं हि मदिच्छया विना सरस्वतीमुख-ग्रहणोच्छेषणीकृतो दशनच्छद एष चुम्बयितुम्। अम्बुजा-सनास्तनतटोपभुक्तमुरःस्थलञ्च तदालिङ्गयितुम्' इति (ख)। ततः

(ख) तव पादपद्मपरिचर्य्यायाः चरणकमलसेवायाः फलम् पक्वं परिणतम्। अस्य इदानीमेव प्रवर्त्तितस्य त्वत्प्रसादस्य अतिरमणीयस्वात्मकथनरूपानुग्रहस्य, अत्र सम्बन्ध-सामान्ये षष्ठी। किं वस्तु उपकृत्य प्रत्युपकृत्य। हि यतः मम सम्बद्धं मदीयं किञ्चित् किमपि अभवदीयं भवदीयत्वशून्यं नैव। तथाहि यद्यदेव मदीयत्वेन व्यवहरामि तत्तदेव त्वदीयमिति भावः। अस्यापि जनस्य मल्लक्षणस्य, क्वचित् कुत्रचिद्विषये प्रभुत्वम् स्वाधीनता, नहि सर्वमेव त्वदधीनमिति भावः। तत् किमित्याह—अशक्यमित्यादिना। मदिच्छया मम अनुमोदनेन विना सरस्वत्याः मुखेन यत् ग्रहणं स्वीकारः तेन उच्छेषणीकृत उच्छिष्टतां नीतः, राजवाहनस्य सर्वविद्याप्रभुत्वात् तथा कल्पनम्। एष दृश्यमानः दशनच्छदः त्वदीयम् अधरबिम्बं चुम्बयितुं मयेति शेषः, अशक्यं अपार्य्यं, तथाहि त्वदधर-चुम्बनं मदिच्छाधीनमेव, यद्यहमिच्छावती तद्विदधामि तदैव तव तज्जन्यं सुखं जायेत नान्यथा इति भावः। अम्बुजासनायाः कमलायाः स्तनतटेन पयोधरभारेण उपभुक्तं कृतोपभोगं एतत् दृश्यमानम् उरःस्थलं त्वदीयं वक्षःस्थलमालिङ्गयितुं परिष्वञ्जयितुञ्च अशक्यमिति पूर्व्वेणान्वयः, "शक्यमरविन्दसुरभि" रित्यादिवत् आदौ सामान्यतः प्रयुक्तस्य क्रियापदस्य शक्यमित्यस्य न कर्म्मगता लिङ्गता इति प्रतिपत्तव्यम्। केचित्तु तुमन्तस्य धात्वर्थमात्रार्थकतया तत्कर्म्मणि प्रत्ययः।

ফললাভ করিলাম। আমি কি উপকার করিয়া তোমার এই উপকারের প্রতিশোধ করিব, মদীয় এমন কোনও বস্তু নাই যাহা তোমার নহে। অথবা কোনও বিষয়ে এ অধীন ব্যক্তিরও প্রভুত্ব রহিয়াছে, তুমি আমার

प्रियोरसि प्रावृड़िव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढ़कन्दलीमुकुलमिव [ कुट्मलमिव ] रूढ़रागरूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविड़म्बिना कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्बमुकुलमिव [ बन्धूकमुकुलमिव ] कान्तस्याधरमणिमधीरमाचुचुम्ब ( ग )। तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्या-

( ग ) प्रियस्य कान्तस्य राजवाहनस्य, उरसि वक्षःस्थले। नभसि आकाशे प्रावृट् वर्षाकालः इव उपास्तीर्णं विस्तारितं गुरु गौरवयुक्तं स्थौल्ययुक्तमित्यर्थः पयोधरमण्डलं स्तनभारः मेघसमूहश्च यया तथाभूता। "स्त्रीस्तनाब्दौ पयोधरा"वित्यमरः। प्रौढं परिणतं यत् कन्दलीमुकुलं तदिव रूढ़ेन सुदृढमुपजातेन रागेण अनुरागभरेण रूषितं रञ्जितं चक्षुः, उल्लासयन्ती विक्षिपन्ती बर्हिणां मयूराणां यानि बर्हाणि पिच्छानि तेषाम् आवली मण्डली तद्विड़म्बिना तदनुकारिणा, कुसुमानि पुष्पाणि एव चन्द्रकाः तैः शारेण शवलेन मधुकरकुलैः पुष्पमधुगन्धेन उपस्थितैः व्याकुलेन परिव्याप्तेन। स्फुरतः उदयोन्मुखस्य अरुणस्य सूर्यस्य किरणवत् रक्तवर्णैरित्यर्थः। केसरैः किञ्जल्कैः करालः अथवा स्फुरन्तः दीप्यमानाः अरुणाः रक्तवर्णाः किरणा येषां तैः केसरैः करालम् कदम्बमुकुलं कदम्बकुसुमकोरकम् इव। कान्तस्य स्वामिनः राजवाहनस्य अधरमणिम् अधररूपं मणिं, मणिस्तु पद्मराग एव ज्ञातव्यः, तेनैव रक्ततया सादृश्यस्थितेः तदारोपस्यैव योग्यत्वात्, रूपकमलङ्कारः। अधीरं चञ्चलभावेन आचुचुम्ब।

---

ইচ্ছা ব্যতিরেকে সরস্বতীর চুম্বনে উচ্ছিষ্ট ভবদীয় অধরবিম্ব আমার দ্বারা চুম্বন করাইতে পার না এবং কমলার স্তনতট দ্বারা উপভুক্ত ত্বদীয় উরঃস্থল আলিঙ্গন করাইতে পার না।" তদনন্তর ময়ূরপিচ্ছতুল্য পুষ্পসদৃশ চন্দ্রকশবল ভৃঙ্গসমূহপরিব্যাপ্ত কেশকলাপশোভিতা অবন্তিসুন্দরী, বর্ষাকাল যেমন জলপূর্ণ গম্ভীর মেঘসমূহ আকাশে সাজাইয়া দেয়, সেই

वर्त्तत अतिमात्रचित्रोपचारश्रीकरो रतिप्रबन्धः। सुरतखेद-सुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगड़ितपादो जरठः कश्चित् जालपादः प्रत्यदृश्यत। प्रत्यबुध्येतां चोभौ [ घ ]। अथ तस्य राजकुमारस्य कमलमूढ़शशिकिरणरज्जुदामनिगृहीतमिव रजत-शृङ्खलोपगूढ़ं चरणयुगलमासीत्। उपलभ्यैव च 'किमेत'-दित्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या ( ङ )। येन च तत् सकलमेव कन्यान्तःपुरम् अग्निपरी-

( घ ) तस्य चुम्बनस्य आरम्भेण उपक्रमेण स्फुरितया वृद्धिं गतया रागवृत्त्या अनुराग-व्यापारेण, भूयोऽपि पुनरपि अतिमात्रैः सुबहुलैः चित्रैः विचित्रैः उपचारैः उपकरणैः श्रीकरः मनोज्ञः "श्रीकरः स्फीतरम्ययो"रिति विश्वः। रतिप्रबन्धः सुरतव्यापारः, आवर्त्तत परावर्त्तनेन वारान्तरे अभवत्, सुरतखेदेन सुरतक्रियापरिश्रमेण सुप्तयोः निद्रितयोः तयोः राजवाहनस्य अवन्तिसुन्दर्य्याश्च इत्यर्थः। बिसगुणेन मृणालसूत्रेण निगड़ितौ शृङ्खलितौ पादौ चरणौ यस्य तथाभूतः मृणालतन्तुसंयतपादः जरठः वार्द्धक्यमापन्नः। जालपादः हंसः "जालपादः श्वेतगरुच्चक्राङ्गो मानसौकस" इति वैजयन्ती, प्रत्यदृश्यत दृष्टिगोचरो बभूव। उभौ द्वावेव राजवाहनः अवन्तिसुन्दरी च प्रत्यबुध्येतां जागरितौ बभूवतुः।

রূপ রাজবাহনের বক্ষঃস্থলে পীন স্তনযুগল স্থাপিত করিয়া পরিণত কন্দলী মুকুলের ন্যায় রাগরঞ্জিত নেত্রদ্বয় উল্লাসিত করত রক্তবর্ণ কেশরকলাপযুত কদম্বমুকুলবৎ কান্তের অধরবিম্ব চুম্বন করিলেন। ( ক-খ-গ )

উক্ত ক্রিয়াপ্রবর্ত্তনে পরস্পরের রাগবৃত্তি বর্দ্ধিত হইল, এবং বিচিত্র-ভাবানুগামী সুরতক্রীড়া আরব্ধ হইল। সুরত-ক্রীড়ানন্তর যখন উভয়ে পরিশ্রান্ত হইয়া নিদ্রার আশ্রয় লইলেন, তখন স্বপ্নাবস্থায় মৃণালতন্তুদ্বারা

तमिव पिशाचोपहतमिव वेपमानं, अनिरूप्यमाणतदात्वायतिविभागं, अगण्यमानरहस्यरक्षासमयं, अवनितलविप्रविध्यमानगात्रं, आक्रन्दविदीर्य्यमाणकण्ठं, अश्रुस्रोतोऽवगुण्ठितकपोलतलमाकुलीबभूव (च)। तुमुले चास्मिन् समये अनियन्त्रितप्रवेशाः

(ङ) कमलमूढ़: कमलत्वप्रकारेण भ्रान्तिं गतः यः शशी चन्द्रः तस्य किरणा एव रज्जवस्तेषां दाम्ना समूहेन निगृहीतं संयतमिव, तथाहि राजवाहनस्य चरणौ तथा रक्तौ यथा कमलमिदमिति भ्रमो जायते तद्दर्शिनः, अतएव चन्द्रः तथा भ्रान्त एव वा निजकिरणरज्जुभिः प्रतिपक्षस्य सूर्य्यस्य पक्षपातात् कमलस्य बन्धनं कृतवान् इत्युत्प्रेक्ष्यते, रजतशृङ्खलया रौप्यबन्धनदाम्ना उपगूढ़म् आलिङ्गितं बद्धमित्यर्थः। अत्र चरणे कमलत्वभ्रमकथनात् भ्रान्तिमान्, रजतशृङ्खलाबन्धने चन्द्रकिरणकरणकबन्धनत्वस्य सम्भावनया उत्प्रेक्षा, किरणेषु च रज्जुत्वारोपात् रूपकम् परस्परम् अङ्गाङ्गिभावेन एकाश्रयानुप्रवेशरूपः सङ्करः। राजकन्या अवन्तिसुन्दरी उपलभ्य, अवलोक्य, अतिपरित्रासेन सहसा भर्त्तुः पादबन्धनस्य असम्भवस्य सम्भवं महाविपत्पातकरं सम्भाव्य इत्यर्थः, विह्वला प्राप्तविकारा मुक्तकण्ठं उच्चकण्ठम्।

(च) अग्निना परीतं परिव्याप्तं इव, पिशाचैः भूतयोनिविशेषैः अदृश्यतया एव महाविपदमकाण्डे सम्पादयितुं समर्थैः उपहतम् आक्रान्तमिव, वेपमानं कम्पमानम्, न

সংযতচরণ একটী বৃদ্ধ হংস দেখা দিল। তখনই উভয়ে জাগরিত হইলেন। তৎকালে রাজকুমার রাজবাহনের চরণযুগল রজতশৃঙ্খলে আবদ্ধ ছিল। উক্ত চরণ যেন চন্দ্রদেব কমল ভাবিয়া নিজ রশ্মিদামে সংযত করিয়াছেন। রাজকন্যা ইহা দেখিয়াই 'এ কি হইল' এই বলিয়া অত্যন্ত ভয়ে বিহ্বল হইয়া মুক্তকণ্ঠে ক্রন্দন করিয়া উঠিলেন, সেই ক্রন্দনশব্দে সমস্ত অন্তঃপুর যেন অগ্নিবেষ্টনে অথবা পিশাচাক্রমণে কম্পিত হইয়া উঠিল, তখন সকলেই কিংকর্ত্তব্যবিমূঢ় হইয়া গেল, রাজবাহন

'किं किं' इति सहसोपसृत्य विविशुरन्तर्वंशिकपुरुषाः ददृशुश्च तदवस्थं राजकुमारम्। तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्म्मणे निवेदयामासुः (छ)। सोऽपि कोपादागत्य

निरूप्यपाणः निर्श्चीयमानः तदात्वं तत्‌कालः आयतिः उत्तरकालश्च तयोः विभागः भेदः येन तथाभूतं, तथाहि तदानीं विह्वलं सत् किमिदानीं कर्त्तव्यं किंवा परत इति निर्द्धारयितुं न शशाक इति भावः। कालनिर्द्धारणस्य अनुपयोगात् कालवाचकशब्दे लक्षणया तद्वृत्तिकर्त्तव्यपरता। न गण्यमानः विविच्यमानः रहस्यस्य अवन्तिसुन्दर्य्याः कुमार्य्या अपि रहसि निजप्रियसम्पर्करूप-गोपनीयव्यापारस्य रक्षायाः गोपनस्य समयः नियमः यत्र तथाभूतं, व्याकुलतया अप्रकाश्यमपि तद्वृत्तं प्रकाशता गन्तुमारेभे। अवनीतले भूमितले, विप्रविध्यमानम्, आहन्यमानं गात्रं शरीरं यत्र तथाभूतम् आक्रन्देन करुण-चीत्कारध्वनिना, विदीर्य्यमाणाः भग्नाः कण्ठाः परिजनानां कण्ठस्वराः यत्र, अश्रु स्रोतोभिः नेत्रासारधाराभिः अवगुण्ठितं परिव्याप्तं कपोलतलं यत्र तथाभूतम् आकुलीबभूव पर्य्याकुलताम् आप। तथाहि तदानीं तेन आकस्मिकवृत्तसम्पातेन सर्वेषामेव परिजनानां महती उत्तरलता समुत्पन्ना इति भावः। अग्निपरीतत्वादीनां कन्यान्तःपुरे सम्भावनात् उत्प्रेक्षा। द्वयोश्च नैरपेक्ष्यात् संसृष्टिः। "तत्‌कालस्तु तदात्वं स्यात् उत्तरः काल आयति"रिति तदात्वायतिशब्दयोः प्रकृतम् अभिधानम्। "कृत्यांशयोर्विभागः स्यात्" इति कोषात् विभागशब्दस्य कृत्यपरत्वे न लक्षणा कार्य्या।

(छ) तुमुले ससम्बाधे, अस्मिन् प्रवृत्ते समये अनियन्त्रिताः अबाधिताः प्रवेशः अन्तःपुरगमनं येषां ते अबाधप्रवेशाः अन्तर्वंशिकाः अन्तःपुररक्षकाः पुरुषाः "अन्तःपुरे

ও অবন্তিসুন্দরীর সমাগম গোপনে রাখিতে হইবে—ইহা কাহারও বিবেচনায় আসিল না, তত্রত্য সকলেই ভূলুণ্ঠিত হইয়া মুক্তকণ্ঠে অশ্রুপ্রবাহে গণ্ডস্থল ভাসাইয়া কাঁদিতে কাঁদিতে আকুল হইয়া উঠিল। (ঘ-ঙ-চ)

निर्दहन्निव दहनगर्भया दृशा निशाम्य उत्पन्नप्रत्यभिज्ञः, 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं, रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्जित-मूढ़-पौरजनाध्यारोपित-वितथदेवतानुभावः कपट-धर्म्मकञ्चुकी निगूढ़पापशीलश्चपलो ब्राह्मणब्रुवः (ज)।

त्वधिकृतः स्यादन्तर्व्वंशिको जन" इत्यमरः। किं किं जातमिति शेषः इति अवाणा इति शेषः। सहसा उपसृत्य तत्र उपस्थाय, तदवस्थं रजतशृङ्खलाबद्धपादं राजकुमारं राजवाहनं ददृशुः। तस्य राजवाहनस्य अनुभावेन आकारमहत्त्वेन तेजसा वा निरुद्धा निगृहीता निग्रहस्य निर्य्यातनस्य इच्छा अभिलाषः येषां तथाभूताः, तस्य माहात्म्यव्यञ्जकेनाकारेण कन्यान्तःपुरबाधनापराधस्य प्रतिकाराय तन्निग्रहं कर्त्तुं पराङ्मुखा इत्यर्थः। सद्यः तत्क्षण एव तं यथादृष्टं वृत्तान्तम्।

(ज) सोऽपि चण्डवर्म्मापि कोपात् निजान्तःपुरस्य रहसि दूषणरूपादपराधात्, दहनः अग्निः तद्युक्तः गर्भः मध्यभागः यस्याः तथाभूतया अग्निवत् ज्वलितया इत्यर्थः, दृशा चक्षुषा निशाम्य तं तदवस्थं दृष्ट्वा। शमेरिनन्तस्य अदर्शनार्थ एव ह्रस्वविधानात् दर्शनार्थे न ह्रस्वता। उत्पन्ना प्रत्यभिज्ञा पूर्व्वानुभूतस्य वस्तुनः "तदिद" मित्याकारप्रत्यक्षात्मकज्ञानविशेषः यस्य तथाभूतः; प्रत्यभिज्ञाप्रकारमेव दर्शयति "कथं च स एवैष" इत्यादिना मम अनुजः दारुवर्म्मा तस्य मरणस्य निमित्तभूतायाः प्रयोजिकायाः पुष्पोद्भवद्वारेण इत्यर्थः। पापायाः पापयुक्तायाः। अतिबाहुल्येन अभिनिविष्टः उद्धतः वित्तस्य सम्पदः दर्पः गर्व्वः यस्य तस्य। रूपेण सौन्दर्य्येण मत्तः गर्व्वितः कलाभिः नृत्यगीतादिकलाविद्याभिः अभिमानी

এই তুমুল ব্যাপারের সময়ে 'কি হইয়াছে কি হইয়াছে' বলিয়া রক্ষি-পুরুষগণ অবাধে সহসা আসিয়া তথায় উপস্থিত হইল এবং রাজবাহনকে

**कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेय-मवन्तिसुन्दरी। पश्यतु पतिमद्यैव शूलावतंसितमियमनार्य्यशीला**

गुरुम्मन्य:। नैकविधै: अनेकप्रकारै: विप्रलम्भोपायै: प्रतारणाहेतुभि: पाटवेन चतुरतया आवर्ज्जिता: वशीकृता: ये मूढा: पौरजना: पौरा: तै: अध्यारोपित: मिथ्या आरोपित: वितथ: मिथ्या दैवतानुभाव: दैवतप्रभाव: यस्मिन् तथाभूत:, प्रतारणाकौशलेन लोकान् प्रतार्य्य प्रतिष्ठितात्ममाहात्म्य: कपटधर्म्मकञ्चुक: कपट: छलरूप: धर्म्म: न तु वास्तविक: स एव कञ्चुकं गात्रत्राणं कवचं यस्य तथाभूत:, सर्व्वत्रैव छलं प्रयुज्य आत्मम्भरि:, अथच निगूढं गुप्तं तथा पापं पापयुक्तं पापि वा शीलं चरितं यस्य बहि: धर्म्मस्य भानकं कृत्वा अन्त: पापविषये समासक्त:, एतद्धि सुमहत् विश्वासघातकलक्षणम्। ब्राह्मणम् आत्मानं ब्रवीति य: तथाभूत: निकृष्टविप्र:, निकृष्टस्यैव आत्मनो गुणविकाशे उन्मुखतास्वाभाव्यात्। तथाच माघे "वदिता न लघीयसोऽपर: स्वगुणं तेन वदत्यसौ स्वयम्"। ब्राह्मणब्रुवशब्दो वैजयन्त्यां यथा—ब्रुवो हीन: पदात्परे। जातिमात्रोपजीवे तु कथ्यते ब्राह्मणब्रुव" इति। अत्र धर्म्मे कञ्चुकत्वारोपात् रूपकम्। निष्ट्ङ्क्ष्यिष्वेति पूर्व्ववत् उत्प्रेक्षा क्रियाविषयिणी।

---

সেইভাবে দেখিতে পাইল। কিন্তু তাহার তেজস্বিতাদর্শনে তৎক্ষণে তাহাকে বাঁধিবার ইচ্ছা সংবরণ করিয়া অবিলম্বে সেই সংবাদ চণ্ডবর্ম্মাকে জানাইল। চণ্ডবর্ম্মাও ক্রোধসহকারে আসিলেন, তাঁহার নয়নের অভ্যন্তরে যেন উদ্দীপ্ত অগ্নি জ্বলিতেছিল, রাজবাহনকে দেখিয়া চিনিতে পারিলেন, এবং ভর্ৎসনা করিয়া বলিলেন—কি! এই সেই চঞ্চল নিকৃষ্ট ব্রাহ্মণ, এই পাপিষ্ঠ মদীয় অনুজ দারুবর্ম্মার মৃত্যুর কারণ—পাপিনী বালচন্দ্রিকার পতি ঐশ্বর্য্যমত্ত বিদেশীয় বণিক্‌পুত্র পুষ্পোদ্ভবের বন্ধু। কলাবিদ্যায় অহঙ্কারী ও সৌন্দর্য্যমদে মত্ত। এই পাপিষ্ঠ বহুবিধ প্রতারণাপূর্ণ ব্যব-হারে মূঢ় পৌরজনগণকে ভুলাইয়া তাহাদের মধ্যে স্বীয় দেবপ্রভাব

कुलपांसनी” इति निर्भर्त्स्यन् भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष (झ)। स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमेव तामापदमवधार्य्य “स्मर तस्या हंसगामिनि हंसकथायाः। सहस्व वासु, मासद्वयम्” इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामयासीत् (ञ)। अथ विदितवार्त्तावार्त्तौ

(झ) पुरुषसिंहेषु पुरुषश्रेष्ठेषु, सावमाना सावज्ञा, अपिर्व्विरोधे, तथाहि मादृशाः न कथमपि अवज्ञार्हास्तथापि असौ पापा अवज्ञावती जातेति भावः। अनेन अवन्तिसुन्दर्य्यां चण्डवर्म्मणः अभिलाष आसीदिति व्यज्यते, स चाभिलाषस्तदानीन्तने काले मातुलकन्याया विवाहयोग्यतासत्त्वात्। अद्यैव न तु दिनान्तविलम्बेनापि इत्यवशब्दव्यवच्छेद्यम्। अनार्य्यम् असद्भावजुष्टं शीलं यस्याः तथाभूता, कुलपांसनी निजवंशमर्य्यादासु कलङ्कदात्री, रहः पुरुषसम्पर्केण स्वीयकामभावस्य अत्यर्थं प्रकटनात् इति भावः। शूलावतंसितं शूलशिरोभूषणीभूतं शूलारूढ़ं “पांसनः कुलदूषकः” इत्यमरः। भीषणभ्रुकुटिभिः दूषितं घोरं ललाटं यस्य तथाभूतः, क्रोधवशात् कृतभ्रुकुटिः। कालः यमः, कालः कृष्णवर्णः यः लोहदण्डः आयसदण्डः तद्वत् कर्कशेन परुषभावापन्नेन, रेखारूपम् अम्बुजं पद्मं रथाङ्गं चक्रञ्च ते एव लाञ्छने यत्र पद्मादिचिह्नशोभिते, एतेन राजचिह्नं सूचितं, सरभसं सवेगम्।

(ञ) स्वभावधीरः स्थिरमतिः, अनेन विशेषणेन तदानीमेव तदपमानप्रतीकारप्रवृत्तिपराङ्मुखता द्योतिता। सर्व्वेषां पौरुषाणां पुरुषकाराणां अतिभूमिः

প্রতিষ্ঠিত করিয়াছে, পাপিষ্ঠ বাহিরে ধর্ম্মের মিথ্যা আবরণ রাখিয়া অন্তরে পাপকার্য্য পোষণ করিয়া থাকে। পাপিষ্ঠা অবন্তিসুন্দরী আমাদিগকে অবমানিত করিয়া এই নিকৃষ্ট ব্যক্তির প্রতি অনুরক্ত হইল

**महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनावात्मत्यागोपन्यासेन अरिणा जिघांस्यमानं ररक्षतुः। न शेकतुस्तमप्रभुत्वादुत्तारयितुमापदः ( ट )। न किल चण्डघोषश्चण्डवर्म्मा सर्वमिद-**

अतिमात्रसमाश्रयः अथवा सर्वपौरुषाणाम् अतिभूमिः आधिक्यमिव मूर्त्तिमत् सहिष्णुता सहनशीलता एव एका केवला प्रतिक्रिया प्रतीकारः यस्याः तथाभूतां, दैवोपनीतस्य व्यसनस्य शारीरिकशौर्य्यप्रकाशादिना कथञ्चिदपनोदनमशक्यम् इति वस्तुगतिं निश्चित्य इत्यर्थः। हे हंसगामिनि हंसवत् गमनशीले, तस्याः मम शाम्बावस्थायां तव च यक्षवत्यवस्थायां संवृत्तायाः हंसस्य तदानीं क्रीडारसेन बद्धस्य हंसरूपिणः कस्यापि मायिनः कथायाः वार्त्तायाः स्मर, स्मरणार्थधातुयोगे कर्म्मणि षष्ठी। हंसकथां स्मर इत्यर्थः। वासू, बालिके, मासद्वयं द्वौ मासौ व्याप्य, हंसस्य तत्कालं यावदेव विरहदुःखभोगस्य शापविषयत्वात्। इति उक्तवाक्यपरम्परया प्राणपरित्यागे जीवनविसर्ज्जने रागिणीम् अभिलाषवतीं स्वामिनः सुमहतीं विपदमाशङ्क्य इति शेषः। रिपुवश्यतां शत्रोः चण्डवर्म्मणः अधीनताम्।

( ट ) महादेवी मालवेन्द्रौ मानसारः तस्य महिषी च विदिता परम्परया श्रुता वार्त्ता अवन्तिसुन्दर्य्या राजवाहनेन सह रहसि तथा समागमविषयिणी कथा याभ्यां तौ आर्त्तौ यथाकथञ्चित् सम्प्रति सुतायाः प्रणयिनं गतस्य विपदाशङ्कया, कातरतां गतौ, आकारस्य महत्याः आकृतेः राजवाहनसम्बन्धिन्या इत्यर्थः। पक्षपातिनौ अनुरक्तौ सन्तौ, जामातरं कन्यायाः प्रणयितया रहसि गान्धर्व्वपरिणयसम्भावनात् जामातृपदे स्थितम् अरिणा चण्डवर्म्मणा, जिघांस्यमानं हन्तुमिष्यमाणं हननार्थं बध्यभूम्यादौ उपस्थापितम् इत्यर्थः। आत्मनः प्राणपरित्यागस्य

---

কেন? কুলকলঙ্কিনী অনার্য্যশীলা পাপিনী আজই স্বয়ং স্বীয় পতিকে শূলে আরোপিত দেখিবে।" পরে ললাটে ভীষণ ভ্রুকুটী করিয়া কৃতান্তের ন্যায় লৌহদণ্ডকর্কশ ভুজদ্বারা রাজবাহনকে রাজচিহ্নাঙ্কিত কোমল হস্তে অতি বেগে আকর্ষণ করিল। রাজবাহন স্বভাবতঃ ধৈর্য্যসম্পন্ন, তিনি

मुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सदा एव बन्धने क्षिप्त्वा, कृत्वा च देवं राजवाहनं राजकेशरिकिशोरकमिव दारुपञ्जर-निबद्धं, मूर्द्धजजाललीनचूडामणिप्रभावच्छिन्नक्षुत्पिपासादिखेदश्च तमवधूतदुहितृप्रार्थनस्य।ङ्गराजस्योद्धरणाय अङ्गानभियास्यन्न-नन्यविश्वासाधिनाय। करोध च बलभरदत्तकम्पयम्पाम् (ठ)।

जीवनविसर्ज्जनस्य उपन्यासेन "यदि इमं हन्यात्तदा आवामपि म्रियेवहि" इतीत्थंरूपेण वचनोपन्यासेन इत्यर्थः। ररक्षतुः रक्षणाय भूयो यत्नं कृतवन्तौ। अर्थविशेषोऽयं परवाक्यार्थसामञ्जस्याय। तु किन्तु अप्रभुत्वात्, प्रभुत्वस्य सम्प्रति आत्मनि अनवस्थितेः हेतोः इदानीं स्वेन राज्यभारः पुत्रे अर्पितः तेनापि चण्डवर्म्मणि कर्त्तृत्वस्थापनात् चण्डवर्म्मा एव प्रभुः, तस्यैव आदेशस्य परिजनैः पाल्यमानत्वात् इत्यर्थः। तं राजवाहनं विपदः तस्मादुपजातात् व्यसनात् उत्तारयितुं रक्षितुं न शेकतुः, राजवाहनं कृतापराधं दण्डविधानेन शासितुमेव चण्डवर्म्मा बद्धपरिकरो जात इति भावः।

(ठ) चण्डशील: उग्रचरितः। इदं सद्योजातम् उदन्तजातम् अवन्तिसुन्दरी-राजवाहनसम्बन्धिनं वृत्तान्तसमूहम्। राजराजगिरौ कैलासशैले तपस्यते तपस्यां कुर्व्वते, दर्पसाराय मानसारनन्दनाय तदाख्याय, पुष्पोद्भवस्य कुटुम्बकम् आत्मीयवर्गं

---

সর্ব্ববিধ পৌরুষের আশ্রয়ভূমি হইয়াও এই নিশ্চয় করিলেন যে, এ বিপদ্ দৈববশতঃ ঘটিয়াছে। সহিষ্ণুতাই ইহার একমাত্র প্রতীকার। প্রাণপ্রতিমা অবন্তিসুন্দরী দুঃখে অভিভূতা হইয়া প্রাণপরিত্যাগে কৃত-সঙ্কল্প হইলে তাঁহাকে "অয়ি হংসগামিনি! সেই হংসের কথা স্মরণ কর, বালিকে! দুই মাস অপেক্ষা করিয়া থাক" এই বলিয়া সান্ত্বনানন্তর শত্রুর বশ্যতা স্বীকার করিলেন। (ছ-জ-ঝ-ঞ)

পরে মালবদেশের রাজা মানসার ও তদীয় মহিষী সমস্ত বৃত্তান্ত

चण्डेश्वरोऽपि सिंहवर्म्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताह्नतानां साहाय्य-दानायातिसत्वरम् आपततां धरापतीनाम् अचिरकालभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रति-बलं प्रतिजग्राह। जग्टहे च महति सम्पराये प्रक्षीणसकल-सैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्म्मा [ वर्म्मा ] सिंहवर्म्मा

बन्धुपालप्रभृतिकमित्यर्थः। बन्धने कारागारे क्षिप्त्वा प्रवेश्य। केसरिणां राजा राजकेसरी राजदन्तादित्वात् पूर्व्वनिपातः। प्रधानतमः सिंहः राज्ञः केसरी राजयोग्यः सिंह इति वा तस्य किशोरकः शावकः तमिव दारुपञ्जरे काष्ठमये पिञ्जरे निबद्धं संयतम्। मूर्द्धजजालेषु केशकलापेषु लीनो गुप्तभावेन वर्त्तमानो यः चूड़ामणिः शिरोरत्नं तस्य प्रभावेण सामर्थ्येन क्षिप्तः दूरीकृतः क्षुत्पिपासादिखेदः क्षुधादिजनितः क्लेशः यस्य तं, मूर्द्धजजाललीनेति विशेषणेन शत्रुणा तस्य हरणप्रसक्तिर्निराकृता। चण्डवर्म्मणा अदत्तेऽपि आहारे जीवनशक्तिश्चानुकूलिता भवति। अवधूता प्रत्याख्याता दुहितुः स्वीयकन्यायाः प्रार्थना परिणयाभिलाषः चण्डवर्म्मणा इति शेषः, येन तथाभूतस्य चण्डवर्म्मणा याच्यमानस्यापि सावज्ञं प्रत्याख्यातस्य इत्यर्थः। अङ्गराजस्य अङ्गदेशाधिपतेः, उद्धरणाय उन्मूलनाय, अङ्गान् अङ्गदेशं "बहुत्ववदस्वादे"रित्यादिना अङ्गशब्दोत्तरं बहुवचनम्। अभियास्यन् अभियानं करिष्यन्, अन्यत्र विश्वासः स न भवतीत्यनन्यविश्वासः तस्मात्, अन्यत्र कुत्रापि विश्वासाभावात् इत्यर्थः। निनाय सहैव राजवाहनं रथञ्च

শ্রবণ করিয়া দুঃখিত হইলেন এবং জামাতার আকার রাজোচিত দেখিয়া তাহার প্রতি স্নেহনিবন্ধন স্বপ্রাণত্যাগের ভয় দেখাইয়া চণ্ডবর্ম্মার অভীপ্সিত তদীয় প্রাণবধ হইতে তাহাকে রক্ষা করিতে চেষ্টা পাইলেন, কিন্তু তাঁহারা তদানীং রাজ্যের প্রভু নহেন বলিয়া তাহাকে সত্যই

करिणा करीव अवप्लुत्यातिमानुषप्राणबलेन चण्डवर्म्मणा ( ङ )। स च तद्दुहितर्य्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् ; अपि त्वनीनयदपनीताशेषशल्यमकल्यसन्धौ बन्धनगृहम्। अजीगणच्च गणकसङ्घैः अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति ( ढ )। कृतकौतुक-

इति भावः। बलभरेण सैन्यसमूहेन दत्तः उत्पादितः कम्पः अतिभीतभावः येन तथाभूतः तत्रस्थितानतिमात्रं भीषयमाणः इत्यर्थः। चम्पां तदभिधानाम् अङ्गदेशराजधानीं करोध आचक्राम।

(ङ) असह्यः सोढुमशक्यः विक्रमः शक्तिः यस्य तथाभूतः अतिप्रबलप्रतापः। प्राकारं पुरप्राचीरं भेदयित्वा अतिक्रमय्य बलसमुदायेन सैन्यनिवहेन सहेति शेषः। स्वेन प्रहितैः प्रेषितैः दूतव्रातैः चारसमूहैः आहूतानां संवादितानां साहाय्यदानाय प्रवृत्ते संग्रामे साहायकसंविधानाय अतिसत्वरम् आपततताम् आगच्छतां धरापतीनां राज्ञाम्, अचिरकालभाविन्यपि अतिशीघ्रं सम्पत्स्यमानेऽपि सन्निधौ उपस्थितौ न दत्ता अपेक्षा येन तथाभूतःताननपेक्षमाण एव इत्यर्थः। साक्षात् वपुष्मान् मूर्त्तिमान् अवलेपः संग्रामगर्व्वं इव, अक्षमया असहिष्णुतया परीतः युक्तः प्रतिबलं प्रतिपक्षसैन्यं प्रतिजग्राह प्रतिपक्षभावेन आससाद। एतदसहिष्णुत्वञ्चास्य भाविनीं विपदमावेदयतीति मन्तव्यम्। सम्पराये संग्रामे, प्रक्षीणं क्षयं प्राप्तं सकलं सैन्यमण्डलं

---

রক্ষা করিতে পারিলেন না। সেই প্রচণ্ডচরিত্র চণ্ডবর্ম্মা এই সমস্ত বৃত্তান্ত ( রাজবাহনের দোষ, তদীয় বধ রোধ, রাজা ও রাণীর তদীয় রক্ষণে চেষ্টা প্রভৃতি ) কৈলাস পর্ব্বতে তপস্যানিরত দর্পসারের নিকট বলিয়া পাঠাইলেন এবং পুষ্পোদ্ভবের সমস্ত স্বজনবর্গের সর্ব্বস্ব হরণ করিয়া তাহাদিগকে অবিলম্বেই কারাগারে বদ্ধ করিলেন। রাজকুমার রাজবাহনকে সিংহ-শিশুর ন্যায় দারুনির্ম্মিত পঞ্জরে আবদ্ধ করিলেন।

मङ्गले च तस्मिन् एकपिङ्गाचलात् प्रतिनिवृत्यैवाजन्नो नाम जाङ्गलिकः प्रभवतो दर्पसारस्य प्रतिसन्देशमावेदयत्— "अयि मूढ़! किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित्

बलञ्च श्री यस्य तथाभूतः, प्रचण्डैः उग्रतमैः प्रहरणशतैः बहुभिः शस्त्रैः भिन्नं भेदं गतं मर्म्म हृन्मर्म्मस्थलं यस्य तथाभूतः, करिणा हस्तिना करी हस्ती इव, एतेन उभयोरेव प्रायेण समशक्तिकता व्यक्ता। अवष्टभ्य प्रसह्य आक्रम्य अतिमानुषम् अलौकिकं प्रायः बलञ्च यस्य तथाभूतेन शारीरिके मानसिके च बले महत्तरेण चण्डवर्म्मणा। जगृहे धृतः। करिणा करीव इत्युपमा।

(ढ) तस्य सिंहवर्म्मणः दुहितरि कन्यायाम् अम्बालिकायां तदभिधानायाम् अबलारत्नेषु श्रेष्ठनारीगणेषु समाख्यातायाम् अतिप्रख्यातायाम्। अतिमात्रः समुत्कटः अभिलाषः वासना कामरूपा यस्य तथाभूतः। एनं सिंहवर्म्माणं, व्ययं युजन् बिमोलिनवान्, मारिते अम्बालिकायाः पितरि सा नूनं मनोवेदनया विह्वला भविष्यति, तेन च कामजसुखसम्भोगव्याघाती भावीति विविच्य सिंहवर्म्मणः प्राणान् ररक्षेति भावः। अपनीतानि समुद्धृतानि अशेषाणि समग्राणि शल्यानि शङ्कवो यस्य तथाभूतम् अकल्या अकल्याणकरी सन्धा प्रतिज्ञा यस्य तथाभूतः, राजवाहनस्य सापराधतया दण्डविधाने अव्याहतसङ्कल्पत्वात् तस्य च परिणामे अकल्याणकरत्वात् तद्विशेषणं

এবং অঙ্গরাজ তদীয় দুহিতৃপ্রার্থনা প্রত্যাখ্যান করিয়া বৈর উৎপাদন করিয়াছেন বলিয়া তাঁহার বিনাশের জন্য অঙ্গরাজ্যে অভিযান করিতে উদ্যত হইলেন। কাহারও প্রতি দৃঢ় বিশ্বাস না থাকায় রাজবাহনকে সঙ্গেই লইলেন, তাহাকে খাদ্য ও পানীয় না দিলেও কেশকলাপের অভ্যন্তরে গুপ্তভাবে রক্ষিত একটী চূড়ামণির প্রভাবে তিনি ক্ষুধা ও তৃষ্ণার কষ্ট হইতে অব্যাহতি পাইলেন। চণ্ডবর্ম্মা বিপুল সৈন্যসামন্ত লইয়া চম্পা নগরী অবরুদ্ধ করিলেন।

क्षपावसरः ? स्थविरः स राजा जरावलुप्यमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किञ्चित् प्रलपति, त्वयापि किं तदनुमत्या स्थातव्यम् ? अविलम्बितमेव तस्य कामोन्मत्तस्य चित्त-

प्रकृते दत्तम्। बन्धनगृहं कारागृहम् अनीनयत् परिजनैः नाययामास। अद्यैव "शुभस्य शीघ्रमशुभस्य कालहरण"मिति प्राचीनप्रवादात् न तु कालविलम्बेन, क्षपायाः निशायाः अवसाने शेषे। अत्र "क्षपावसाने" इत्यनेन दिवाविवाहस्य कथञ्चिदुपस्थानात् दिवाविवाहस्य च स्वामिमरणप्रयोजकत्वात् स्वामिपदं गन्तुमुन्मुखस्य चण्डवर्म्मणः स्वल्पेनैवोत्तर-कालेन प्राणविनाशोऽभिव्यज्यते। राजदुहिता सिंहवर्म्मकन्या अम्बालिकापि।

(ण) तस्मिन् चण्डवर्म्मणि, कृतं सम्पादितं कौतुकमङ्गलं विवाहपूर्व्वं कर्त्तव्य-मङ्गलविधानादिकं येन तस्मिन्। एकपिङ्गस्य कुबेरस्य अचलात् कैलासशैलात्। "कुबेरस्त्र्यम्बकसखः" इत्यारभ्य—"यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः" इत्यमरः। प्रतिनिवृत्य आगत्य एणस्य मृगस्य जङ्घा इव जङ्घा यस्य तथाभूतः, एतेन तस्य दूरभूमिगमने क्षमता व्यज्यते। जङ्घाकरिकः शीघ्रगामी दूतः, "जङ्घालोऽति-जवो जङ्घाकरिको जाङ्घिको जवी" इति हैमः। प्रभवतः प्रभुत्वं गच्छतः प्रतिसन्देशं चण्डवर्म्मप्रेषितस्य संवादस्य प्रत्युत्तररूपं संवादम् आवेदयत् विज्ञा-पयामास। "प्रभवत" इति विशेषणेन 'अयि मूढ़' इत्यादि प्रतिसन्देशप्रकारः समञ्जसीकृतः।

চম্পক নগরীর রাজা সিংহবর্ম্মা সিংহের ন্যায় অমিতপরাক্রম। তিনি নিজ প্রেরিত দূতগণের মুখে সংবাদ প্রাপ্তি মাত্রই—যাহারা যুদ্ধে সাহায্যার্থ আগমন করিবেন, সেই সকল রাজগণেরও আগমনের প্রতীক্ষা না করিয়াই বিপুল সৈন্যসমভিব্যাহারে প্রাকার ভেদ করিয়া মূর্ত্তিমান্ বীর দর্পের ন্যায় অসহিষ্ণুভাবে প্রতিপক্ষের সমীপে যুদ্ধার্থী হইয়া উপস্থিত হইলেন।

সেই মহাসংগ্রামে তাঁহার সমস্ত সৈন্য বিনষ্ট হইল, অসংখ্য প্রচণ্ড

**वधवार्त्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः। सा च दुष्टकन्या सहानुजेन कीर्त्तिसारेण निगड़ितचरणा चारके निरोद्धव्या" इति (ग)। तच्चाकर्ण्य "प्रातरेव राजभवनद्वारे स च**

कन्यान्तःपुरस्य दूषके जारभावेन दोषसम्पादके। स राजा मानसारः स्थविरः वृद्धः जरया वार्द्धक्येन अवलुप्तम् अन्तर्धापितं मानस्य अवमानस्य च चित्तं बोधो यस्य तथाभूतः, अथवा अवलुप्तौ मानावमानौ यस्मात् तथाभूतं चित्तं यस्य, वार्द्धक्यवशादपगतहिताहितबोधः स एतदपराधस्य गौरवं न जानाति अतएव तत्पक्षपातस्तस्य। दुश्चरितायाः कुत्सितस्वभावायाः गुप्तभावेन कामवृत्तिचरितार्थता-प्रवृत्तेरिति भावः। दुहितुः कन्यायाः अम्बालिकायाः पक्षपाती। तस्य स्थविरस्य राज्ञः अनुमत्या स्थातव्यम्? अपितु नैव, तत् किं कुर्य्यामित्याकाङ्क्षायामाह—अवि-लम्बितमित्यादि। तस्य कामोन्मत्तस्य कामोन्मादेन कन्यान्तःपुरदूषकस्य इत्यर्थः। चित्रवधः विस्मयकरं प्राणहननं सारमेयादिभिः भक्षणरूपं, तद्वार्त्ताप्रेषणेन तत्संवाद-विसर्ज्जनेन। अस्माकं श्रवणस्य कर्णस्य उत्सवः आनन्दहेतुः। तथाहि यः संवादः अस्मासु प्रेषितः तेन न परितुष्यामि यदि तस्य मूढ़स्य जीवनं शेषयित्वा मामज्ञापयिष्यस्तदैव सन्तुष्टोऽभविष्यमतः सत्वरं तद्वधं सम्पाद्य मामावेदयेः" इति भावः। सा दुष्टा दुश्चरित्रा कन्या कुमारी अवन्तिसुन्दरी, घृणातिशयेन नामनिर्द्देशो न कृतः। कीर्त्तिसारेण तदाख्येन, अनुजेन सह निगड़ितचरणा शृङ्खलितचरणा। अनेन कीर्त्तिसारस्यापि अवन्तिसुन्दरीपक्षपातित्वं तेन दर्पसारेण श्रुतमिति प्रतीयते। केचित्तु निर्द्दोष-स्याप्यनुजस्य बन्धनम् अस्य अनिष्टमेवानुकूलयति इत्याहुः। चारके कारागृहे, चारकं बन्धनालय" इति वैजयन्ती।

অস্ত্রাঘাতে সিংহবর্ম্মা অভিভূত হইয়া পড়িলেন। পরে করী যেমন অপর অবসন্ন করীকে আক্রমণ করে, সেইরূপ অলৌকিক শক্তিসম্পন্ন অকল্যাণকর প্রতিজ্ঞাকারী চণ্ডবর্ম্মা সিংহবর্ম্মাকে ধরিয়া ফেলিলেন। (ট-ঠ-ড)

दुरात्मा कन्यान्तःपुरदूषकः सन्निधापयितव्यः। चण्डपोतश्च मातङ्गपतिरुपरचित-[ उपचित ] कल्पनोपपन्नस्तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्य्यं तस्य हस्तिनः कृत्वा क्रीड़नकं तदधिरूढ़ एव गत्वा शत्रुसाहाय्याय प्रत्यासीदतो राजन्यकस्य सकोषवाहनस्यावग्रहणं करिष्यामि” इति पार्श्वचरानवेक्षाञ्चक्रे ( त )। निन्ये चासावहन्यन्यस्मिन्

( त ) सन्निधापयितव्यः उपनेयः, पोतः शिशुरिव चण्डः शैशवादेव अतिचण्डभावः अतएव तन्नाम्ना प्रसिद्धः। मातङ्गपतिः करिराजः उपरचितया कल्पितया कल्पनया सज्जया तदुचितया इत्यर्थः। उपपन्नः प्रसाधितः। कृतं सम्पादितं विवाहकृत्यम् अम्बालिकायाः परिणयकर्म्म येन तथाभूतः, निष्पादितपरिणयः, तम् अनार्य्यं दुष्टभावदूषितं कन्यान्तःपुरदूषकं जनम्, तस्य हस्तिनः चण्डपोतस्य क्रीड़नकं क्रीड़ासाधनं कृत्वा। तेन तस्य प्राणवधं निष्पाद्य इति भावः। तदधिरूढ़ः चण्डपोतमधिरूढ एव, शत्रोः सिंहवर्म्मणः साहाय्याय साहाय्यसम्पादनाय प्रत्यासीदतः उपसर्पतः राजन्यकस्य क्षत्रियसमूहस्य सकोषवाहनस्य कोषबलसमेतस्य अवग्रहणम् आक्रम्य बन्धनम्। सिंहवर्म्मणा दत्तसंवादा ये कियता विलम्बेन आगच्छन्ति तानुपलक्ष्य चण्डवर्म्मण एवं प्रस्तावः। पार्श्वचरान् पार्श्वस्थान् पुरुषान् अवेक्षाञ्चक्रे ददर्श, तान् प्रत्येव दृष्टिपातेन आदिदेश इति। एतेनास्य अम्बालिकापरिणयं प्रति सुमहती आसक्तिः व्यक्ता।

কিন্তু সিংহবর্ম্মার কন্যা নারীরত্ন অম্বালিকার প্রতি অত্যন্ত অনুরাগ থাকায় তাহাকে বধ করিলেন না। সিংহবর্ম্মার শরীরস্থ শল্য-সমূহ (অস্ত্রের খণ্ডগুলি) বাহির করাইয়া তাহাকে কারাগারে পাঠাইলেন এবং গণকদ্বারা গণাইয়া ঠিক করিলেন যে, “অদ্য নিশাবসানেই রাজদুহিতাকে বিবাহ করিতে হইবে।” চণ্ডবর্ম্মার বিবাহোপযোগী গাত্রহরিদ্রা প্রভৃতি

उष्मिषत्येवोषोरागे राजपुत्रो राजाङ्गनं रक्षिभिः। उपतस्थे च चरितगण्डस्थलचण्डपोतः। क्षणे च, तस्मिन् मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया। सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोरूपिणी भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत् (थ)—"देव! दीयतामनुग्रहार्द्रं चित्तम्। अहमस्मि सोमरश्मिसम्भवा सुरत-मञ्जरी नाम सुरसुन्दरी। तस्या मे नभसि नलिनलुब्ध-मुग्धकलहंसानुबन्ध-वक्त्रयास्तन्निवारणक्षोभ-विच्छिन्न-विगलिता

(थ) अन्यस्मिन् अहनि अपरस्मिन् दिवसे, उषसः प्रत्यूषकालस्य रागे लौहित्ये, उन्मिषति आविर्भवति सति, प्रभातोपक्रमे एव असौ राजपुत्रः राज-कुमारः राजवाहनः रक्षिभिः चण्डवर्म्मानुगैः पुरुषैः राजाङ्गनं नृपप्राङ्गणं निन्ये, चरितः मदजलस्रावी गण्डः कपोलस्थानं यस्य तथाभूतः मत्तभावापन्नः चण्डपोतः तन्नामा करीन्द्रः। तस्मिन् क्षणे तस्मिन्नेव मुहूर्त्ते रजतशृङ्खलया रजतमयबन्धनदाम्ना तस्य राजवाहनस्य अङ्घ्रियुगलं चरणद्वयं मुमुचे मुक्तं, रजतशृङ्खलबन्धनान्मुक्तं जातम् इत्यर्थः। सा च रजतशृङ्खला चन्द्रलेखाच्छविः चान्द्रमसी कलेव सुकान्तिः। एनं राजवाहनं, प्राञ्जलिः कृताञ्जलिः, सती व्यजिज्ञपत् विज्ञापयामास वक्ष्यमाणं वस्तु इति शेषः।

মাঙ্গলিক কৃত্যকলাপ সম্পাদিত হইলে, কৈলাসপর্ব্বত হইতে শীঘ্রগামী এণজঙ্ঘ নামক একজন দূত আসিয়া প্রভু দর্পসারের প্রত্যুত্তর জানাইল যে,—মূর্খ! যে ব্যক্তি কন্যান্তঃপুরে কলঙ্ক অর্পণ করিয়াছে, তাহার প্রতিও কি দয়ার অবকাশ আছে? বৃদ্ধ রাজার জরাবশতঃ মানাপমানবিবেক বিলুপ্ত হইয়াছে, এই জন্যই তিনি দুষ্টা কন্যার পক্ষপাত করিতেছেন, তিনি যে প্রলাপবাক্য বলিতেছেন, তুমিও কি সেই বাক্য মানিয়া থাকিবে? শীঘ্রই সেই কামোন্মত্ত দুষ্ট ব্যক্তির বিচিত্র উপায়ে

हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत् (द)। पातितस्य कोपितेन कोऽपि तेन मयि शापः—

(द) अनुग्रहेण प्रसादेन आर्द्रं द्रवीभूतं चित्तं दीयताम् अर्प्यतां मद्वचसीति शेषः। सोमरश्मिसम्भवा सोमरश्मितः जाता, सोमरश्मिनामकगन्धर्व्वदुहिता, नभसि आकाशे नलिनलुब्धाः कमलं प्रति आसक्ताः मुग्धाः सुन्दराः ये कलहंसाः तेषु अनुषङ्गं सक्तं यस्याः तथाभूतायाः तस्य निवारणाचोभेण प्रतिषेधचाञ्चल्येन विच्छिन्ना वियुक्ता अतएव विगलिता स्खलिता हारयष्टिः मुक्तास्रक्, मन्दानि अत्यल्पानि उदकानि जलानि यत्र तथाभूते, हिमवतः इदं हैमवतं तस्मिन् हिमालयशैलवर्त्तिनि सरसि सरोवरे मग्नोन्मग्नस्य मग्नस्य ततः परम् उन्मग्नस्य वारंवारं नियमाभिषवं कुर्व्वत इत्यर्थः। मणिकिरणैः हारस्थितरत्नप्रभाभिः द्विगुणितं वर्द्धितं पलितं जराजनितं केशस्य धावल्यं यत्र तद् यथा तथा।

বধের সংবাদ জানাইয়া আমার কর্ণতৃপ্তি সম্পাদন কর। সেই দুষ্টা কন্যাকেও তদীয় অনুজ কীর্ত্তিসারের সহিত শৃঙ্খলে আবদ্ধ করিয়া কারাগারে নিক্ষেপ কর।” (ঢ ণ)

তাহা শ্রবণ করিয়া “প্রাতঃকালেই রাজভবনদ্বারে কন্যান্তঃপুরের কলঙ্ককারী দুরাত্মাকে উপস্থিত করা হইবে, এবং সেইস্থানে চণ্ডপোতাখ্য শ্রেষ্ঠ হস্তীকে বেশবিন্যাসে সুসজ্জিত করিয়া উপস্থিত করা যাইবে, এবং আমিই বিবাহকৃত্য সম্পাদন করিয়া সেই অনার্য্যকে চণ্ডপোত-হস্তীর ক্রীড়াবস্তুরূপে পরিণত করিয়া পরে সেই হস্তীতে আরোহণপূর্ব্বক শক্রর সাহায্যার্থ আগত রাজন্যবর্গকে কোষ ও বাহনের সহিত নিগৃহীত করিব”, এই বলিয়া পার্শ্বচরগণের দিকে দৃষ্টিপাত করিলেন। পরদিন উষার উদয় মাত্রেই রক্ষিগণ রাজবাহনকে রাজাঙ্গনে লইয়া গেল। মদজলস্রাবী চণ্ডপোতকে তথায় আনয়ন করা

"पापे! भजस्व लोहजातिमजातचैतन्या सती" इति स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमामापदम्, अपरिक्षीणशक्तित्वञ्च पञ्चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रजत-शृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः, पुत्रो मानसवेगस्य, वीरशेखरो नाम विद्याधरः शङ्करगिरौ समध्यगमत्। आत्मसात्कृता च तेनाहमासम् (घ)। अथासौ पितृप्रयुक्ते वैरे वर्त्त-

(घ) तेन मार्कण्डेयमुनिना. कोपितेन मदीयहारयष्टिपतनजन्यक्रोधाविष्टेन, शापः वक्ष्यमाणरूपः। अजातचैतन्या विलुप्तबोधशक्तिः सती लोहजातिं धातुमयत्वं "सर्व्वञ्च तैजसं लोह" मित्यमरवचनात् लोहशब्दस्य धातुमात्रवाचकत्वम्। स कृत्वी दत्तशापो मुनिः मार्कण्डेयः प्रसाद्यमानः अनुनयातिरेकात् जनितानुग्रहः क्रियमाणः तव कुमारस्य राजवाहनस्य यत् पादपद्मद्वयं चरणकमलयुगलं तस्य मासद्वयमात्रं केवलमासद्वयं यावत् सन्दानतां बन्धरज्जुताम् एत्य निस्तरणीयाम् अतिक्रमणीयाम् इमाम् अव्यवहितपूर्व्वमेव स्थिताम् आपदं रजतशृङ्खलात्वेन तव पादबन्धनतारूपां, पञ्चेन्द्रियाणाम् अपरिक्षीणशक्तित्वम् अहतक्षमताकत्वञ्च अकल्पयत्। अनल्पेन

হইল। সেই ক্ষণেই রজতশৃঙ্খল হইতে রাজবাহনের চরণযুগল মুক্তি লাভ করিল। সেই রজতশৃঙ্খলা চন্দ্রপ্রভার তুল্য একটী সুন্দর অপ্সরার রূপ ধরিয়া কৃতাঞ্জলিভাবে কুমারকে প্রদক্ষিণ করিয়া বলিতে লাগিল। (ত-থ)

"কুমার! অনুগ্রহপূর্ব্বক আমার বাক্যে মনোযোগ করুন। আমি সোমরশ্মিনামক গন্ধর্ব্বের কন্যা, আমার নাম সুরতমঞ্জরী। আমি একদিন আকাশমার্গে গমন করিতেছিলাম, এমন সময়ে একটী হংস পদ্মভ্রমে আমার মুখের দিকে আসিতে থাকে, আমি তাহাকে

मानि विद्याधरचक्रवर्त्तिनि वत्सराजवंशवर्द्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतश्च तेनास्मै स्वसुरवन्तिसुन्दर्य्याः प्रदानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युतिकुमारीपुरमुपासरत्। अन्तरितश्च तिरस्कारिण्या विद्यया, स च तां तदा त्वदङ्कोपाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवन-सर्ग-यात्रा-संहार-संश्रिताभिः कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत् (न)। स तु प्रकुपितोऽपि

सुप्रचुरेण पाप्मना पातकेन, ऐक्ष्वाकस्य इक्ष्वाकुवंशप्रभवस्य। वेगवतः तदाख्यस्य, मानसवेगस्य तदाख्यस्य, शङ्करगिरौ शङ्करशैले कैलासे। समभ्यगमत् दृष्टवान्। तेन वीरशेखरेण। आत्मसात्कृता स्वायत्तीकृता परिगृहीता इत्यर्थः।

(न) असौ वीरशेखरः पितृप्रयुक्तं पित्रा कृतं वैरं शात्रवं, वर्त्तमाने अवस्थिते सति, स्वपितृसम्पादितमेव वैरम् आश्रित्य व्यवहरति सति। विद्याधरचक्रवर्त्तिनि

বারণ করিতে উদ্যত হইলে দেহক্ষোভবশতঃ মদীয় হারলতা বিচ্ছিন্ন হইয়া বিগলিত হইল। এদিকে হিমালয়ের নিকটস্থ অল্পজল-বিশিষ্ট কোনও সরোবরে পুনঃ পুনঃ স্নাননিরত মহর্ষি মার্কণ্ডেয় অবস্থিতি করিতেছিলেন, তাঁহার মস্তকে সেই হার পতিত হইয়া জরা-পলিত শির দ্বিগুণ ধবল করিয়া দিল। মুনি ক্রুদ্ধ হইয়া আমার প্রতি শাপ দিলেন, যে—'পাপিনি! তুই যেমন সংজ্ঞাশূন্যভাবে আমার প্রতি হার ফেলিয়া দিয়াছিস্, তেমন তোকে ধাতুময়ী হইয়া সংজ্ঞাহীন অবস্থায় থাকিতে হইবে।' আমার বহু অনুনয়ে মুনি প্রসন্ন হইয়া "আপনার চরণের

त्वदनुभाव-प्रतिबद्ध-निग्रहान्तरध्यवसाय: समालिङ्ग्य इतरेतर-मत्यन्तसुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलीकृतशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत् (प)। अवसितश्च ममाद्य शापः। तच्च मासद्वयं तव

विद्याधराणां मध्ये सम्राट्पदस्थे। वत्सराजवंशवर्द्धने वत्सराजवंशधरे नरवाहनदत्ते तदाख्ये, वत्सनामकविद्याधरात्मजे इत्यर्थः। विरसाशयः अपरक्तमानसः। अथ दर्पसारः तस्य अपकारे अनिष्टे क्षमः शक्तः इति कृत्वा समसृज्यत संसृष्टो जातः। तेन दर्पसारेण अस्मै वीरशेखराय स्वसुः भगिन्याः प्रदानं परिग्रहरूपेण प्रतिपादन प्रतिश्रुतं स्वीकृतम्। "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" इति चतुर्थी सम्प्रदाने।

अन्यदा अन्यस्मिन् दिवसे च वियति आकाशे, व्यवदायमाना अतिनिर्मलीभवन्ती चन्द्रिका ज्योत्स्ना यत्र तथाभूते, दैप शोधने इत्यस्य दासंज्ञकत्वाभावात् न ईकारः। अवशानि अस्वाधीनानि इन्द्रियाणि यस्य तथाभूतः कामविवशीकृतेन्द्रियः। इन्द्र-मन्दिरस्य अमरावत्या इव द्युतिः दीप्तिः यस्य तथाभूतम् अमरावतीतुल्यं, कुमारीपुरं कन्यान्तःपुरम् उपासरत् तदुपलक्ष्य प्रतस्थे। एतेनास्य अतिमात्रा अवन्तिसुन्दर्य्याम् आसक्तिर्व्यञ्जिता।

(प) तिरस्करिण्या आत्मप्रच्छादनसाधिकया विद्यया अन्तरितः प्रच्छादितशरीरः स च वीरशेखरः। तव अङ्कः क्रोड़देश एव उपाश्रयः आश्रयस्थानं यस्याः तथाभूतां सुरतखेदेन सुरतजन्यक्लान्तिवशेन सुप्तं शिथिलभावापन्नम् अलसमित्यर्थः, गात्रं यस्याः

শৃঙ্খলরূপে দুইমাস থাকিয়া আমি এই বিপদ্ হইতে মুক্ত হইব" ইহা কল্পনা করিলেন, এবং তদবস্থায়ও আমার পঞ্চেন্দ্রিয়ের শক্তি নষ্ট হইবে না—ইহা বলিলেন। আমি এই মহাপাপে রজতশৃঙ্খলারূপে পরিণত হইলে ইক্ষ্বাকুবংশীয় রাজা বেগবানের পৌত্র, মানসবেগের পুত্র, বীর-শেখর নামক বিদ্যাধর কৈলাসপর্ব্বতে আমাকে দেখিতে পাইয়া আত্মসাৎ করিলেন। (দ-৫)

पारतन्त्र्यम्। प्रसीद, इदानीं किं तव करणीयम्?” इति प्रणिपतन्तीं “वार्त्तयानया मत्प्राणसमां समाश्वासय” इति व्यादिश्य विससर्ज। तस्मिन्नेव क्षणान्तरे “इतो हतस्वर्ग-वर्म्मा सिंहवर्म्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बल-दवलम्ब्य सरभसमाकृष्य केनापि दुष्कर-

तां रतिश्रमालसदेहां, त्रिभुवनस्य त्रिलोक्याः सर्गः सृष्टिः यात्रा स्थितिः संहारः विध्वंसनं तत्संश्रिताभिः तद्विषयिणीभिः। अमृतस्यन्दिनीभिः सुधाप्रस्रवणकारिणीभिः अतिसुखकरीभि-रित्यर्थः। कथाभिः वृत्तान्तैः। प्रत्यानीयमानः पुनरुद्भाव्यमानः रागस्य अनुरागस्य सुरतादिवासनाया वा पूरः प्रवाहः यस्याः तां न्यरूपयत् ददर्श। प्रकुपितः अतिक्रोधं प्राप्तः तव अनुभावेन तेजःप्रभावेण प्रतिबद्धः निरुद्धः निग्रहे निर्य्यातनविषये अन्तरध्यवसायः अन्तःकरणस्य प्रवृत्तिः यस्य तथाभूतः, इतरेतरं परस्परम् अत्यन्तसुखेन अतिसुखेन सुप्तयोः निद्रितयोः। युवयोः, अनेन दैवदत्तोत्साह इत्यस्य एकदेशः दैवपदार्थसम्बन्धितया अन्वेति, दैवेन अग्रभाग्येन दत्तः उत्साहः यस्य तथाभूतः। पाण्डु श्वेतवर्णं यत् लौहं रजतधातुः तन्मयं शृङ्खलम् आत्मा स्वरूपं यस्याः तया अथवा युवयोः तथा-सुप्तयोः सतोरिति भावे सप्तमी। निगडयित्वा संयम्य। निगडशब्दात् करोत्यर्थे णिच्-यपि रूपम्। सरोषरभसं क्रोधजनितवेगभरेण सह। अपासरत् चलितवान्।

তদনন্তর বীরশেখর, বৎসরাজের বংশধর বিদ্যাধরসম্রাট্ নরবাহন দত্তের সহিত পিতার সাতিশয় শত্রুতা থাকায় “এই ব্যক্তিই তাহার অপ-কার কার্য্যে শক্ত” এই ভাবিয়া তপস্যাকারী দর্পসারের সহিত মিলিত হইল, দর্পসারও তাহাকে নিজ ভগিনী অবন্তিসুন্দরীকে দান করিবেন বলিয়া প্রতিশ্রুত হইলেন। পরে একদিন বিশদ জ্যোৎস্নায় আকাশ নির্ম্মল হইলে, বীরসার কল্পিত প্রিয়া অবন্তিসুন্দরীকে দেখিবার অভিলাষে অবশেন্দ্রিয় হইয়া ইন্দ্রের মন্দিরতুল্য কুমারীপুরের নিকটে গেলেন এবং

वर्म्मणा [ कर्म्मकारिणा ] तस्करेण [ तस्करेणैकेनैव ] तत्त्वरपुहारेण, राजमन्दिरोद्देशं शवशतमयमापादयन्नचकितगतिरसौ विहरति" इति वाचः समभवन्। श्रुत्वा चैतत् तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्त्तत। स्तम्बेरम-रयावधूतपन्निदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात् ( फ ),—"कः स

( फ ) शापः लौहरूपेण अवस्थानरूपः मार्कण्डेयस्य शापः। अवसितः शेषं गतः, मासद्वयस्य अतीतत्वात्। नन्न तेनैव मुनिना निर्द्धारितपूर्वं मासद्वयं व्याप्य तव पारतन्त्र्यं पराधीनत्वादि अवसितमिति लिङ्गव्यत्ययेन, इति उक्त्वा प्रणिपतन्तीं प्रणमन्तीम्, अनया मद्बन्धनमुक्तिविषयिण्या वार्त्तया संवादेन मम प्राणसमां जीवितप्रतिमाम् अवन्तिसुन्दरीं व्यादिश्य आदिश्य विसृसर्ज्ज प्रस्थापयामास। पाणिस्पर्शस्य करावलम्बनस्य रागेण अभिलाषेण प्रसारिते विस्तारिते, अम्बालिकायाः करग्रहणाय पुरः प्रसारिते इत्यर्थः। बलवत् अतिशयितशक्तिसहकारेण इत्यर्थः। क्रियाविशेषणमिदम्। दुष्करम् अतिकृच्छ्रसाध्यं कर्त्तुमशक्यमिव वा कर्म्म यस्य तथाभूतेन असाधारणकार्य्यसाधकेन, राजमन्दिरोद्देशं राजप्रासादस्थानं शवशतमयं बहुलशवदेहयुक्तम् आपादयन् अचकितगतिः निःशङ्क-

তিরস্করিণী বিদ্যায় অদৃশ্য হইয়া অবন্তিসুন্দরীকে তোমার অঙ্কদেশে সুরতশ্রমে অবসন্নদেহা এবং ত্রিভুবনের সৃষ্টিস্থিতি ও প্রলয়ের অমৃতপূর্ণ বৃত্তান্ত শ্রবণে পুনরায় নবোদ্যমপ্রাপ্তা দেখিতে পাইলেন। মিলিতভাবে আপনাদের দেখিয়া সে অত্যন্ত ক্রুদ্ধ হইলেও আপনার তেজস্বিতায় তাহার ভবদীয়নিরোধেচ্ছা প্রতিরুদ্ধ হইল। পরস্পর আলিঙ্গনে বদ্ধ হইয়া আপনারা সুপ্ত আছেন, এই অবস্থায় দৈববলে উৎসাহিত হইয়া রজতশৃঙ্খলীভূত আমাদ্বারা ত্বদীয় পাদপদ্মযুগল বাঁধিয়া ক্রোধসহকারে চলিয়া গেল। ( ন-প )

**महापुरुषो येनैतन्मानुषमात्रदुष्करं कर्म्मानुष्ठितम्। आगच्छतु। स मया सहेमं मत्तहस्तिनमारोहतु। अभयमेव मदुपकण्ठवर्त्तिनो देवदानवैरपि विग्रह्लानस्य" इति [ इत्यवदत् ]। निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संग्रा-**

विहारः, इति उक्तरूपा वाच. वचनानि समभवन् प्रादुरभूवन्। तमेव मत्तहस्तिनं चण्डपोताख्यं तद्वधसाधनाय समुपनीतमित्यर्थः। उदस्तः उत्क्षिप्तः आधोरणः हस्तिपकः येन तथाभूतः "आधोरणा हस्तिपक"इत्यमरः। राजपुत्रः राजवाहनः, उत्तमेन अतिमात्रेण रंहसा वेगेन, अविलम्बितमिति भावः। राजभवनम् अभि लक्ष्यीकृत्य अवर्त्तत, तां दिशमभि हस्तिनं चालयामास इत्यर्थः। स्तम्बेरमस्य हस्तिनः "इभः स्तम्बेरमः पद्मी" इत्यमरः। रयेण वेगेन अवधूताः अपसारिताः ये पत्तयः पद्गाः पदातय इत्यर्थः। तैः दत्तम् अर्पितं वर्त्म पन्थाः यस्य तथाभूतः हस्तिभयसम्भ्रमेण सर्वैरेव प्रवर्त्तितमार्गः, वेश्मनः गृहस्य अभ्यन्तरं प्रविश्य, अदभ्रः, प्रचुरः समांसलः इत्यर्थः। यः अभ्रनिर्घोषो मेघध्वनिः तद्वत् गम्भीरेण "अदभ्रं बहुलं बहु" इत्यमरः। 'अभ्रं मेघो करिवाह' इत्यमरः। अभ्यधात् कथयामास, स्तम्भेरमेत्यादिविशेषणेन पत्तिभिर्निरोधप्रसक्तिर्निराकृता।

(ব) येन पुरुषेण एतत् चण्डवर्म्महननरूपं मानुषमात्रैः सकलैरेव मानुषैर्दुष्करम् अतिदुःखेन निष्पाद्यं कर्त्तमशक्यमित्यर्थः। कर्म्म, मात्रशब्दोऽत्र कार्त्स्न्ये, अनुष्ठितं निष्पादितम्। स पुरुषः मया सहेति शेषः। सहेमं सुवर्णसज्जादिसज्जितं वा। अभयं भयाभावः अभावार्थे अव्ययीभावः। मम उपकण्ठे समीपे

আজ আমার শাপ শেষ হইয়াছে। আপনারও দুইমাস পরাধীনতা চলিয়া গিয়াছে। অতএব এখন অনুগ্রহপূর্ব্বক বলুন আপনার কি করিতে হইবে?" এই বলিয়া প্রণিপাত করিলে রাজবাহন তাহাকে এই বলিয়া বিদায় দিলেন যে, 'এই সংবাদে আমার প্রাণপ্রতিমা অবন্তিসুন্দরীকে আশ্বাস প্রদান কর।' সেইক্ষণেই কোলাহল শুনা গেল যে,—'চণ্ডবর্ম্মা

कुञ्चितं कुञ्जरगात्रमसक्तमध्यरूहत्। आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः "अयि! प्रियसखोऽयमपहारवर्म्मैव" इति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास। स्वयञ्च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्य्यवेष्टयत् ( ब )। तत्क्षणोपसंहृतालिङ्गनव्यति-

वर्त्तते यः तस्य। देवैः दानवैरपि सहेति शेषः। विग्रहुानस्य युद्धं कुर्व्वतः, तथाहि स एतत् दुष्करं कर्म्म कृत्वा चण्डवर्म्मपक्षाद्भीतः अत्मप्रकाशे मा नाम वैमुख्यं गच्छतु इति भावः। एवम् उक्तरूपं राजवाहनवचनं निशम्य श्रुत्वा। सः चण्डवर्म्महन्ता पुमान् उपोढ़ः प्राप्तः आनन्दः येन तथाभूतः, सानन्द इत्यर्थः। संज्ञया सङ्केतविशेषेण कुञ्चितम् अवनमितं कुञ्जरस्य तस्य हस्तिनः गात्रं पश्चात् चरणजङ्घास्थानं "द्वौ पूर्व्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमा"दित्यमरः। आक्रम्य चरणाभ्यामवष्टभ्य असक्तं राजवाहनशरीरस्य असक्तभावेनैव। अध्यरूहत् आरुरोह। एतेन राजवाहनस्य सम्मानः प्रदर्शितः। आरोहन्तमेव आरोहणसमकाल एव इत्येवशब्दार्थः। एनं पुरुषं, निर्व्वर्ण्य दृष्ट्वा। हर्षेण आनन्देन प्रफुल्ला विकसिता

সিংহবর্ম্মার কন্যা অম্বালিকার পাণিগ্রহণের জন্য হস্ত প্রসারণ করিলে কোনও দুষ্কর কার্য্যকারী তস্কর সবলে আকর্ষণ করিয়া ছুরিকা দ্বারা তাহাকে বধ করিয়াছে, এবং রাজমন্দির শত শত মৃতদেহে পরিব্যাপ্ত করিয়া নির্ভীকচিত্তে ভ্রমণ করিতেছে।" এই কথা শুনিয়া সেই মত্ত হস্তীর মাহুতকে ফেলিয়া দিয়া তদারোহণে রাজপুত্র অতি ত্বরিতভাবে রাজভবনাভিমুখে চলিলেন। হস্তীর বেগে পদাতিবৃন্দ তাহাকে পথ ছাড়িয়া দিল, তিনি ভবনাভ্যন্তরে যাইয়া জলদগম্ভীর স্বরে বলিলেন কে সেই মহাপুরুষ—যিনি এই অলৌকিক কার্য্য সম্পন্ন করিয়াছেন? আসুন তিনি আমার সহিত স্বর্ণালঙ্কৃত এই মত্তহস্তীতে আরোহণ করুন।

कश्चापहारवर्म्मा चाप-चक्र-कणप-कर्पण-प्रास-पट्टिश-मुषल-तोमरादिप्रहरणजालमुपयुञ्जानो [नान्] बलावलिप्तान् प्रतिबल-वीरान् बहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन चाद्राक्षीत् तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम् (भ)। अनन्तरञ्च कश्चित् कर्णिकार-

दृष्टिः यस्य तथाभूतः आनन्दतया विस्फारितनेत्रः। उभयभुजमूलयोः प्रवेशितं प्रापित-प्रवेशनम् अग्रे सम्मुखभागे अवलम्ब्य धृत्वा। पृष्ठतः पश्चाद्भागे वलिताभ्यां कुटिलं चालिताभ्यां भुजाभ्यां पर्य्यवेष्टयत् तामिति शेषः।

(भ) तस्मिन् एव क्षणे मुहूर्त्ते उपसंहृतः प्रतिरुद्धः आलिङ्गनस्य व्यतिकरः संसर्गो येन तथाभूतः, तदानीमेव विश्लिष्टगात्रः। चापादीनि तोमरान्तानि अस्त्रविशेषाणां नामानि। प्रहरणजालम् अस्त्रसमूहम् उपयुञ्जानो यथास्थानं प्रयुञ्जानः। बलेन भुजवीर्य्येण अवलिप्तान् गर्वितान् प्रतिबलवीरान् प्रतिपक्षशूरान् बहुप्रकारैः युध्यन्ते ये तान्, तथा परिक्षिपतः आक्रमणं कुर्व्वतः क्षितौ विचिक्षेप अस्त्रसम्प्रहारैः भूमितले पातयामास इत्यर्थः। तदपि सैन्यं प्रतिपक्षीयसैनाग्रणी अन्येन अपरेण अभिमुखं सम्मुखमेव अभिधावता द्रवता बलनिकायेन सैन्यसमूहेन समन्ततः चतुर्द्दिक्षु परिक्षिप्तं वेष्टितम्। अद्राक्षीत् सः अपहारवर्म्मेति शेषः।

---

"আমার সমীপে দেবতা দানবের বিরুদ্ধে থাকিলেও তাহার ভয় নাই।" এই কথা শুনিয়া সেই পুরুষ হৃষ্টান্তঃকরণে কৃতাঞ্জলিকরে নির্গত হইয়া সঙ্কেতে হস্তীকে অবনত করিয়া তাহাতে আরোহণ করিলেন। আরোহণ করিবার সময়ই ইহাকে দেখিয়া হর্ষোৎফুল্লনেত্রে রাজপুত্র বলিয়া উঠিলেন,—'আঃ! এই আমার প্রিয় বন্ধু অপহারবর্ম্মা' এই বলিয়া পশ্চাদ্ভাগে অবস্থিত তাহার বাহুযুগল স্বীয় বাহুমূলদ্বয়ে প্রবেশ করাইয়া নিজের অঙ্গে আলিঙ্গন করাইলেন এবং স্বীয় বাহুযুগল পশ্চাদ্ভাগে চালিত করিয়া তাহাকে বেষ্টন করিলেন। (ফ—ব)

गौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बि-दुग्धधवल-स्निग्ध-नीललोचनः कटितट-निविष्टरत्नखरः पट्ट-निवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुल-मिषुवर्षेणाभिवर्षन् [अभिपात्य]पादाङ्गुष्ठ-निष्ठुरावघृष्ट-कर्णमूलेन प्रजविना गजेन सन्निकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्य अपहारवर्म्मणि निविष्टदृष्टि-राचष्ट (म)—"त्वदादिष्टेन मार्गेण सन्निपातितमेतदङ्गराज-

(म) कर्णिकारं स्थलपद्मकुसुमं तद्वत् गौरः रक्तश्वेतोभयमिश्रणादिव जात-वर्णः। कुरुविन्दो नीलगुच्छः तेन सवर्णाः सदृशवर्णाः कुन्तलाः यस्य सः परे तु "दृशदारण्ये मुस्ते च कुरुविन्द" इति कोषात् पाषाणसवर्णकेशाः इत्यर्थः। कमलवत् कोमलं पाणिपादं यस्य तथाभूतः, कर्णचुम्बिनी आकर्णविश्रान्ते दुग्धवत् धवले विशदशोभे स्निग्धे नीले च लोचने यस्य तथाभूतः, तथाहि चक्षुषोर्मध्यभागौ सुकृष्णौ तद्बहिः स्थानञ्च सुश्वेतमित्यवच्छेदकभेदेनैकत्राधिकरणे दुग्धवत् धावल्यं नीलत्वञ्च न विरुध्येते। कटितटे निविष्टम् अवस्थितं रत्नखरं रत्नमयी छुरिका यस्य सः। पट्टं निवसनं वस्त्रं यस्य सः, कृशञ्च अकृशञ्च कृशाकृशे उदरम् उरःस्थलञ्च यस्य तदाभूतः, उदरं कृशम् उरःस्थलञ्च अकृशमिति यथासंख्येनान्वयो बोध्यः। कृतहस्ततया क्षिप्रहस्ततया इषुवर्षेण बाणवर्षणेन रिपुकुलं

অপহারবর্ম্মা তৎক্ষণেই আলিঙ্গনবন্ধন মুক্ত করিয়া চাপ চক্র প্রভৃতি অস্ত্রশস্ত্র লইয়া বলদৃপ্ত আক্রমণকারী প্রতিপক্ষীয় বীরগণকে ক্ষিতিতে পাতিত করিয়া বহুপ্রকারে যুদ্ধ করিলেন; তখনই আবার দেখিতে পাইলেন, অপর এক ব্যক্তি প্রচুর সৈন্যসমভিব্যাহারে সম্মুখে সেই সৈন্যগণকে বেষ্টন করিয়াছেন। এই ব্যক্তির বর্ণ কর্ণিকার পুষ্পের মত গৌর, কেশ কুরুবিন্দকুসুমের ন্যায় কৃষ্ণ, কর ও চরণ কমলের ন্যায়

সাহায্যদানায়োপস্থিতং রাজকম্ [ ন্যকম্ ]। অবিলম্ব বিহত-বিধ্বস্তং স্ত্রীবালহার্য্যশস্ত্রং বর্ত্ততে। কিমন্যত্ কৃত্যম্” ইতি। হৃষ্টস্তু ব্যাজহারাপহারবর্ম্মা—“দেব! দৃষ্টিদানেনানুগৃহ্যতামযমাত্মাকরঃ। সোঽযমপ্যহমেব অমুনা রূপেণ

শরৎসমূহম্ অভিবর্ষন্ বাণৈঃ শরান্ ঘ্নন্ ইত্যর্থঃ। পাদাঙ্গুষ্ঠেন নিষ্ঠুরম্ অতিকঠোরম্ অবঘৃষ্টে বিমর্দ্দিতে কর্ণমূলে যস্য তথাভূতেন প্রজবিনা অতিবেগগামিনা গজেন হস্তিনা, সন্নিকৃষ্য সন্নিকৃষ্টো ভূত্বা রাজবাহনস্য ইতি শেষঃ। পূর্ব্বোপদেশস্য পূর্ব্বোপদিষ্টপরিচয়স্য প্রত্যয়াত্ বিশ্বাসাত্ হেতোঃ প্রাঞ্জলিঃ কৃতাঞ্জলিঃ প্রণম্য রাজবাহনমিতি শেষঃ। নিবিষ্টা সাভিনিবেশং স্থাপিতা দৃষ্টিঃ নেত্রং যেন তথাভূতঃ আচষ্ট কথয়ামাস বক্ষ্যমাণমিতি শেষঃ।

(য) ত্বয়া আদিষ্টেন কথিতেন মার্গেণ উপায়েন অঙ্গরাজস্য সাহায্যং সাহচর্য্যম্ আনুকূল্যম্ ইত্যর্থঃ। তস্য আদানায় স্বীকারায় তত্সহকারিতাকরণায় ইত্যর্থঃ। উপস্থিতং সম্মিলিতম্ এতত্ দৃশ্যমানং রাজকং রাজসমূহঃ সমূহার্থে

কোমল, লোচনদ্বয় আকর্ণবিশ্রান্ত এবং দুগ্ধতুল্য ধবল ও স্নিগ্ধ। তাঁহার কটিভাগে রত্নখচিত ছুরিকা, পরিধানে পট্টবস্ত্র, উদর অতি কৃশ এবং উরঃস্থল বিস্তৃত। ইনি অতি ক্ষিপ্রভাবে রিপুগণের উপর বাণবর্ষণ করিতেছেন। পাদাঙ্গুষ্ঠদ্বারা বাহনীভূত গজের কর্ণ ঘর্ষণ করায় ইঁহার গজটী অতিদ্রুত ভাবে আসিতেছে। করিপৃষ্ঠে আরূঢ় সেই পুরুষ রাজবাহনের নিকটে আসিয়া পূর্ব্বোপদিষ্ট পরিচয়ের বিশ্বাসে—“এইত আমাদের রাজা রাজবাহন” এই বলিয়া প্রাঞ্জলি হইয়া প্রণাম করিলেন এবং অপহারবর্ম্মার দিকে দৃষ্টি ন্যস্ত করিয়া বলিতে লাগিলেন। (ভ-ম)

“তোমার কথিত পথ অনুসরণ করিয়া অঙ্গরাজের সাহায্যার্থে উপস্থিত এই রাজগণকে আমি আনিয়াছি, এবং শত্রুগণকে এরূপভাবে হত ও

धनमित्राख्यया चान्तरितो मन्तव्यः। स एवाद्य निर्गमय्य बन्धनादङ्गराजम् अपवर्जितञ्च कोशवाहनमेकीकृत्य, अस्मद्गृह्येण चामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु, यदि न दोषः" इति (य)। देवोऽपि "यथा ते रोचते" इति।

राजन्शब्दात् अकन्। सन्निपातितम् उपानीतम् मयेति शेषः। शत्रोः चण्ड-वर्म्मणः बलं सैन्यमभिहत्य, विहतम् आहतं विध्वस्तं क्षयं प्रापय्य, कियन्ति अति-बलानि आहतानि कियन्ति च विनाशमेव गतानि इति भावः। स्त्रीभिः बालैश्च हार्य्यं हरणयोग्यम् अस्त्रं यस्य तथाभूतं वर्त्तते, तथाहि अतिबलमस्माभिरेव निगृहीतं यथा प्रतिपक्षभावेन स्त्रीणां बालानाञ्च उपस्थितानां तत्करस्थितप्रहरणा-न्याकर्षतामपि निरोधं न सहते इति का कथा अस्माकं शौर्य्यवतामिति भावः। अन्यत् एतदतिरिक्तं किं वस्तु कृत्यं तत् कथय इति भावः। अयं मत्स्वरूपः आज्ञा-करः आदेशपालकः। अहमेव अपहारवर्म्मा एव नान्यः। किन्तु अमुना रूपेण वर्त्तमानभावेन, धनमित्राख्यया धनमित्रनाम्ना अन्तरितः गोपितस्वरूपो मन्तव्यः धनमित्रनाम्ना अहमेव वर्त्ते इति जानीयादिति भावः। बन्धनात् कारागारात् अङ्गराजं सिंहवर्म्माणं निर्गमय्य बहिष्कृत्य मोचयित्वा इत्यर्थः। अपवर्ज्जितं संग्रामसम्मर्द्दात् परितो विशृङ्खलतां गतं, कोशाश्च वाहनानि च कोशवाहनं "सेनाङ्गानाञ्च बहुत्वे" इति समाहारद्वन्द्वः। एकत्वमपि तत्कारणकम्। एकीकृत्य एकत्र संगृह्य। अस्मद्गृह्येण अस्मदीयपक्षपातिना "पदपक्षयोश्च" इति ग्रहेः क्यप्। "गृह्यः

আহত করিয়াছি যে, স্ত্রীলোক অথবা অতিশিশুও ইহাদের অস্ত্র অপহরণ করিতে পারে। এখন আর কি কর্ত্তব্য আছে, আদেশ কর।" অপহার বর্ম্মা অত্যন্ত হৃষ্টান্তঃকরণে বলিলেন—'মহারাজ! এই আজ্ঞাবহ ব্যক্তির প্রতি দৃষ্টিনিক্ষেপ করিয়া ইহাকে অনুগৃহীত করুন, এই ব্যক্তিও আমিই; কিন্তু উক্ত ব্যক্তিকে কেবল ধনমিত্র নামে প্রচ্ছাদিতমৎস্বরূপ

तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचिन्मूले क्षौमावदातसैकते गङ्गातरङ्गपवन-पातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहार-वर्म्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव स्फटिकमय इव भागीरथीपुलिनमण्डले सुखं निषसाद। तथा निषण्णञ्च तम् उपहारवर्म्मार्थपाल-प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुतैर्मैथिलेन च प्रहारवर्म्मणा, काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्म्मणा सहोपागत्य धनमित्रः प्रणिपपात (र)। देवोऽपि हर्षाविद्ध-

पञ्चक उच्यते' इति वैजयन्ती। राजन्यकेन क्षत्रियराजसमूहेन, एकान्ते रहःसीक-देशे। सुखेन उपविष्ट सुखासीनम्। देवं महाराज भवन्तम् उपतिष्ठतु परिचरतु अयं धनमित्र इति शेषः। "वा लिप्साया"मित्यात्मनेपदस्य वैकल्पिकतया उपपूर्व्वस्य तिष्ठतेः परस्मैपदम्, पक्षे उपतिष्ठतामित्यपि। यदि न दोषः क्षतिर्वर्त्तते इति शेषः। तथाहि देवः अस्मत्पक्षीयान् अमून् राज्ञ एकान्ते स्थित आनन्दयतु धनमित्रश्च भवन्तमवैवोपतिष्ठताम् इति भावः।

(र) तेन अपहारवर्म्मणा निर्द्दिष्टेन प्रदर्शितेन मार्गेण पथा। अतिमहतः सुविशालस्य रोहिणद्रुमस्य वटतरोः "वटवृक्षस्तु रोहिण" इति वैजयन्ती। क्षौमवत् पट्टवस्त्रवत् अवदातम् अतिशुभ्रसैकतं वालुकामयी भूमिः यत्र तथाभूते, गङ्गायाः तरङ्गपवनः वीचिसम्पृक्तो वायुः तस्य पातेन समागमेन शीतले, द्विरदात् हस्तिनः अवततार। प्रथमतः

মনে করিবেন, ইনিই আজ অঙ্গরাজকে কারাগার হইতে মুক্ত করিয়াছেন, এবং বিশৃঙ্খল কোষ ও বাহন সমস্ত পুনরায় সুশৃঙ্খলভাবে রক্ষা করিয়া অস্মৎপক্ষীয় ঐ রাজন্যগণের সহিত একান্তে আপনি সুখোপবিষ্ট হইলে, যদি কোনও দোষ মনে না করেন, তবে আপনাকে সেবা করুক।' (য)

রাজবাহনও "তোমার যাহা ভাল বোধ হয় তাহাই কর" এই বলিয়া

मभ्युत्थित: "कथं समस्त एष मित्रगण: समागत: को नामाय-मभ्युदय:" इति कृतयथोचितोपचारान्निर्भरतरं उत्पीड़िततरं, [ अनुत्पीड़िततरं ] परिरेभे। काशीपति-मैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवदपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोप-

आदौ समवतीर्णेन कृतावरोहेण स्वहस्तेन निजकरतलेन सत्वरम् अविलम्बितं समीकृते अवन्धुरीकृते मातङ्गे श्वेतगजे इव स्फाटिके इव भागीरथ्या गङ्गाया: पुलिनमण्डले तोयोत्थिते स्थाने "तोयोत्थितं तत् पुलिनम्" इत्यमर:। सुखं यथा तथा निषसाद उपविवेश। अपहारवर्म्मणो राजवाहनमतिक्रम्य प्रथमावतरणम् उपवेशनस्थानसमीकरणार्थमेव इति न दोष:। तथा उक्तप्रकारेण निषण्णम् उपविष्टं तं राजवाहनम्। मैथिलेन मिथिलाधिपतिना काशीभर्ता काशीराजेन। प्रणिपपात प्रणनाम।

( ल ) देव: राजवाहन: हर्षाविद्धम् आनन्दसङ्कुलं यथा तथा। अभ्युत्थित: कृतोद्गमन: अयं वर्त्तमान: अभ्युदय: मङ्गलसमागम: क: कीदृश:, तथाहि असाधारणेयं कल्याणपरम्परा इति भाव:। इति उक्त्वा, कृता यथोचिता यथायोग्या उपचारा: प्रणामसम्भाषणादिव्यापारा यै: तान् निर्भरतरम् अतिगाढं परिरेभे परिषस्वजे सुहृदा अपहारवर्म्मणा निवेदितान् तत्परिचयेन विज्ञापितान्, पितृवत् जनक-

তৎপ্রদর্শিত পথানুসারে নগরের বহির্ভাগে পট্টবস্ত্রের ন্যায় শুভ্র, গঙ্গা তরঙ্গসম্পৃক্ত বায়ুপ্রবাহে শীতল সৈকতভূমিতে কোন বৃহৎ বটবৃক্ষের মূলে যাইয়া হস্তী হইতে অবতীর্ণ হইলেন। অপহারবর্ম্মা প্রথম নামিয়া ভাগীরথীর সেই পুলিনভূমিকে স্বহস্তে সমভাবাপন্ন করিলেন, উহা শুভ্র হস্তিগাত্রের ন্যায় কিংবা স্ফটিকনির্ম্মিতের ন্যায় বোধ হইতে লাগিল। তথায় রাজবাহনও নামিয়া সুখে উপবেশন করিলেন। রাজবাহন তথায় আসীন হইলে উপহারবর্ম্মা, অর্থপাল, প্রমতি, মিত্রগুপ্ত,

गूढ़ः परमभिननन्द। ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्य-गणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदा-मपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुङ्क्त।

सादृश्येन अपश्यन्, सम्मानयामास। वृद्धत्वात् पितृसम्बन्धत्वाच्च तैः काशीराजादिभिः, हर्षेण आनन्दातिरेकेण कम्पितानि चालितानि पलितानि पक्वकेशाः यत्र तद्यथा तथा, "पलितं पक्वतापयोः, पक्वकेशे केशपाके" इति हैमः, सरभसं त्वरया उपगूढः आलिङ्गितः सन् परमम् अतिमात्रम् अभिननन्द आनन्दं प्राप। सर्व्वं एव परस्परं यथायोग्यं बान्धवभावं प्रदर्श्य सुखिनो जाता इति भावः। ततः सर्व्वेषां सम्भाषणादिषु प्रथमतः प्रीतिप्रस्तावनिष्पाद्यवस्तुषु शेषं गतेषु इत्यर्थः। प्रीतिसङ्कथासु

মন্ত্রগুপ্ত, বিশ্রুত, মিথিলাধীশ্বর প্রহারবর্ম্মা, কাশীরাজ কামপাল, চম্পাধীশ্বর সিংহবর্ম্মার সহিত আসিয়া ধনমিত্র প্রণাম করিলেন।

রাজবাহনও অতি হৃষ্টান্তঃকরণে উঠিয়া বলিলেন, কি অদ্ভুত আনন্দের ব্যাপার! সমস্ত মিত্রই এককালে আসিয়া উপস্থিত হইয়াছেন। এই বলিয়া সকলেই যথোচিত উপচারে অভ্যর্থনা করিয়া গাঢ় আলিঙ্গন করিলেন। মিত্রগণ কাশীরাজ কামপাল, মিথিলাধিপতি প্রহারবর্ম্মা ও অঙ্গদেশাধিপতি সিংহবর্ম্মার পরিচয় দিলে তাঁহাদিগকে পিতৃতুল্য সম্মান করিলেন। তাঁহারাও পককেশপাশ কম্পিত করিয়া রাজবাহনকে আলিঙ্গন করিলেন এবং রাজবাহন পরম সন্তোষ লাভ করিলেন।

অতঃপর পরস্পর প্রীতিসম্ভাষণপ্রসঙ্গে বয়স্যগণ জিজ্ঞাসা করায় নিজের এবং সোমদত্ত ও পুষ্পোদ্ভবের বৃত্তান্ত বর্ণনা করিয়া সুহৃদ্‌গণের প্রত্যেকের বৃত্তান্ত শ্রবণ করিবার প্রস্তাব করিয়া তাঁহাদিগকে নিজ নিজ

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरखण्डे
राजवाहनचरितं नाम
प्रथम उच्छ्वासः ॥ १ ॥

सप्रणयप्रियालापेषु, प्रवृत्तासु सम्पद्यमानासु प्रियवयस्यगणैः प्रियबन्धुभिः अनुयुक्तः पृष्टः "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। कृतप्रस्तावः कृतप्रसङ्गः। तदुक्तौ तद्वृत्तान्त-कथने अन्वयुङ्क्त पप्रच्छ। तेषु सुहृत्सु मध्ये, प्रथमम् आदौ, प्राह स्म उवाच अपहारवर्म्मेति शेषः। निजवृत्तान्तमिति भावः।

---

বৃত্তান্তকথনে নিয়োগ করিলেন, তন্মধ্যে প্রথম অপহারবর্ম্মা বলিতে লাগিলেন। (ব)

# द्वितीयोच्छ्वासः।

"देव! त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं, त्वदन्वेषणप्रसृते च मित्रगणे, अहमपि महीमटन् अङ्गेषु गङ्गातटे बहिश्चम्पायाः 'कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिः' इति कुतश्चित् संलपतो जनसमाजादुपलभ्य अमुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम्। न्यशामयञ्च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य च्छायायां कमप्युद्विग्नवर्णं तापसम् (क)। अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः

(क) द्विजस्य मातङ्गनामकस्य ब्राह्मणस्य उपकाराय साहाय्यकरणाय असुरविवरं दैत्यरन्ध्रं पातालमित्यर्थः। "अधोलोकश्च पातालं दैत्यरन्ध्रं रसातल"मित्यजयः। अवतीर्णे प्रविष्टे मित्रगणे बन्धुसमूहे तव अन्वेषणाय अनुसन्धानाय प्रसृते इतस्ततो गते, महीमटन् पृथिवीपर्य्यटनं कुर्व्वन्, अङ्गेषु अङ्गदेशे "बहुत्ववदस्वादे"रिति देशवाचकस्य बहुत्वप्रवृत्तिः। चम्पायाः चम्पाख्यनगर्य्याः बहिः बहिर्भागे, तदुपकण्ठे इत्यर्थः। तपःप्रभावेण तपस्यासामर्थ्येन उत्पन्नं जातं दिव्यं चक्षुरिन्द्रियासन्निकृष्टस्यापि विषयस्य दर्शनक्षमं ज्ञाननेत्रं यस्य तथाभूतः, संलपतः परस्परम् आलपतः जनसमाजात् लोकसमवायात् उपलभ्य

দেব! আপনি ব্রাহ্মণের উপকারার্থে ভূগর্ভে প্রবেশ করার পর ভবদীয় মিত্রবর্গ আপনার অন্বেষণে প্রবৃত্ত হইয়া চারিদিকে প্রস্থান করিলেন। তন্মধ্যে আমি পৃথিবী ভ্রমণ করিতে করিতে একদিন লোকের কথোপকথনে জানিলাম যে, অঙ্গদেশে গঙ্গার তটে চম্পার বহির্ভাগে মরীচি

'क्वासौ भगवान् मरीचिः, तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम्, आश्चर्य्यज्ञानविभवो हि स महर्षिर्मह्यां विश्रुत' इत्यवादिषम्। अथासावुष्णमायतञ्च निश्वस्याशंसत् "आसी-त्तादृशो मुनिरस्मिन्नाश्रमे। तमेकदा काममञ्जरी नाम

ज्ञात्वा, अमुतः अमुष्मात् महर्षेः, तस्य समीपादित्यर्थः। तव गतिं प्रस्थानप्रदेशं बुभुत्सुः ज्ञातुमिच्छुः, तम् उद्दिश्य तत्स्थानं गङ्गातटस्थितं चम्पाबहिर्भागम् अगमम् चूतपोतकस्य बालचूतवृक्षस्य, छायायाम् अनातपप्रदेशे, उद्विग्नस्य भ्रान्तचित्तस्य वर्णो रूपं यस्य तथाभूतः विचलितचित्तसदृशः "उद्विग्नो भ्रान्तमानस" इति वैजयन्ती। कमपि तापसं तपस्विनम्। न्यशामयम् अदर्शं "शमोऽदर्शने" इति नियमेन अदर्शनार्थे एव णिजन्तस्य शमेः ह्रस्वविधानात्, प्रकृते दर्शनार्थे न तथा।

(ख) अमुना तापसेन अतिथिवत् अभ्यागतजन इव उपचरितः सत्कृतः। तस्मात् मरीचिनामधेयात् मुनेः तस्य सकाशादित्यर्थः। प्रसङ्गतः कार्य्यक्रमेण प्रोषितस्य प्रवासं गतस्य सुहृदः बन्धोः गतिं गमनपदवीम् उपलिप्सुः ज्ञातुमिच्छुः। वर्त्ते इति शेषः। स मरीचिनामा महर्षिः आश्चर्य्यः विस्मयसमुत्पादकः असाधारण इत्यर्थः। यो ज्ञानविभवः ज्ञानमेव विभवः सम्पत् यस्य तथाभूतः असाधारणज्ञानशाली, मह्यां वसुन्धरायां विश्रुतः, अतएव तस्य समीपे अहमज्ञातं वस्तु ज्ञातुमायात

নামে এক ঋষি আছেন, তপঃপ্রভাবে তাঁহার দিব্য চক্ষু উৎপন্ন হইয়াছে। তাঁহার নিকটে ভবদীয় গতিস্থান জানিবার ইচ্ছায় সেই স্থানে গেলাম। গিয়া দেখিলাম তত্রত্য আশ্রমে একটী ক্ষুদ্র চূত বৃক্ষের ছায়ায় একজন তাপস বসিয়া আছেন; তাঁহাকে দেখিয়া মনে হইল, তিনি কোনও মানসিক বিষাদে উদ্বিগ্ন হইয়া কালাতিপাত করিতেছেন। (ক)

আমার উপস্থিতিমাত্রেই তাপস অতিথিবৎ আমার অভ্যর্থনাদি করিলেন। আমি ক্ষণকাল বিশ্রামের পর তাঁহাকে জিজ্ঞাসা করিলাম,

अङ्गपुर्य्यवतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभेत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट। तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत् (ख)। स किल कृपालुस्तं जन-

इति भावः। अथ ममैवमुक्ते अनन्तरम्, असौ तापसः, उष्णम् आयतं दीर्घञ्च। अयं सत् व्यक्तमकथयत् वक्ष्यमाणमिति शेषः। तादृशः भवता वर्णितरूपः, आसीत् इतः पूर्व्वम् अवर्त्तत, इदानीं नास्तीति भावः। अङ्गपुर्य्याः अङ्गदेशीयराजधान्याः चम्पाभिधानाया नगर्य्याः अवतंसस्थानीया शिरोभूषणस्वरूपा तत्रत्यरमणीकुलललामभूता इत्यर्थः। तथात्वञ्च तस्याः सौन्दर्य्यादिप्रकर्षेणैव इति मन्तव्यम। वारयुवतिः तरुणी वाराङ्गना, अश्रुबिन्दुभिः बाष्पधाराभिः तारकितौ तारायुक्तौ कृतौ पयोधरौ स्तनौ यया तथाभूता, नेत्राम्बुप्लावितपयोधरा इत्यर्थः, तारकिते तारकादित्वादितच्, केचित्तु तारकावत्शब्दात् इति क्वप्रत्यये पदं निष्पादयन्ति। सनिर्व्वेदं सविषादम् अभेत्य निकटमुपेत्य, कीर्णेन भूविलुण्ठितेन शिखण्डेन कुन्तलकलापेन आस्तीर्णा परिव्याप्ता भूमिः यया तथाभूता, अभ्यवन्दिष्ट प्रणतवती तमिति कर्म्मपदमस्याः क्रियायाः। मातृप्रमुखः, जननीप्रभृतिकः तस्याः काममञ्जर्य्या आप्तवर्ग आत्मीयगणः, "आप्तो लब्धे स्वसत्ययो-" रिति मेदिनी। सानुक्रोशं सदयम् अनुप्रधावितः पश्चात् पश्चात् द्रुतं प्रस्थितः, तत्रैव तस्मिन्नेव स्थाने, अविच्छिन्नः अविरलः पातो यत्र तद् यथा तथा, अपतत् उपानिष्ठत।

ভগবান্ মরীচি কোথায়? আমি তাঁহার নিকট হইতে কোনও কার্য্যবশতঃ প্রবাসী মদীয় সুহৃদের গতিস্থান জানিবার জন্য আসিয়াছি। সেই মহর্ষির জ্ঞানশক্তি অতি বিস্ময়কর ইহা শুনিয়াছি।' তদনন্তর সেই তাপস উষ্ণ ও দীর্ঘনিশ্বাস পরিত্যাগ করিয়া বলিলেন, এই আশ্রমে সেইরূপ একজন মুনি ছিলেন, একদিন অঙ্গপুরীর আভরণরূপা

मार्द्रया गिरा आश्वास्य [ उत्थाप्य ] आर्त्तिकारणं तां गणिकामपृच्छत्। सा तु सव्रीड़ेव सविषादेव सगौरवेव चाब्रवीत्—"भगवन्! ऐहिकस्य सुखस्याभाजनं जनोऽयम्, आमुष्मिकाय श्रेयसे आर्त्ताभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्नः" इति (ग)। तस्यास्तु जनन्युदञ्जलिः

(ग) स मरीचिः, कृपालुः दयार्द्रचित्तः सन् तं जनम् उपस्थितं काममञ्जर्य्याः आप्तवर्गम् आर्द्रया कृपाकोमलया गिरा आश्वास्य आश्वस्तं कृत्वा, तां गणिकां काममञ्जरीं नाम वाराङ्गनाम् आर्त्तेः दुःखस्य कारणम् अपृच्छत् "कथं त्वमेवं दीनानना रोदिषि" इति पर्य्यनुयोगं कृतवान् इति भावः। प्रच्छेर्द्विकर्म्मकत्वात् तामिति आर्त्तिकारणमिति च कर्म्मद्वयी। सा काममञ्जरी, सव्रीडा सलज्जा इव गणिकाजातेः स्वतो लज्जाया असत्त्वात् तथात्वेन सम्भावनम्, सविषादा सदुःखा इव, विषादस्य प्रकृते मुनिप्रतारणायैव प्रस्तुततया वस्तुतो न विषादसत्त्वं, सगौरवा मुनेरतिमात्रं सम्मानं सम्भावयन्तीव, निजशृङ्गारविषयतया अभिमतस्य वस्तुतः सम्माननं विरुद्धमिति सगौरवत्वमपि न, अब्रवीत् वक्ष्यमाणमिति शेषः। न वास्तविकमिति इवार्थवितर्कनिष्पत्तिः। अयं मत्स्वरूपो जनः, अभाजनम् अनाश्रयः भाजनशब्दस्य अजहल्लिङ्गत्वात् "नञ्तत्पुरुषस्योत्तरपदवत्" इति नियमेन न उद्देश्य-

---

কামমঞ্জরী নাম্নী একটী বারাঙ্গনা অশ্রুধারায় স্তনতট প্লাবিত করিয়া নির্ব্বেদসহকারে আসিয়া উপস্থিত হইল এবং স্বীয় কেশপাশ ভূমিতলে লুণ্ঠিত করিয়া প্রণাম করিল। সেই সময়েই তাহার মাতা ও তদীয় অপরাপর বন্ধুবর্গ সদয়ান্তঃকরণে তাহার পশ্চাৎ পশ্চাৎ আসিয়া সেই স্থানে ক্রমশঃ উপস্থিত হইল। সেই কৃপালু মুনি তাহাদিগকে স্নেহপূর্ণ কোমল বাক্যে সান্ত্বনা করিয়া কামমঞ্জরীকে বিষাদের কারণ জিজ্ঞাসা করিলেন। কামমঞ্জরী লজ্জায় দুঃখে এবং তদীয় গৌরবজ্ঞানে অভিভূত হইয়াই যেন বলিতে লাগিল, 'ভগবন্!

पलितशारशिखण्डबन्ध-स्पृष्टमुक्तभूमिरभाषत—"भगवन्! अस्या मे दोषमेषा वो दासी विज्ञापयति। दोषश्च मम स्वाधिकारानुष्ठापनम्। एष हि गणिकामातुरधिकारः, यत् दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया (घ)। तेजोबलवर्णमेधासंवर्द्धनेन दोषाग्नि-

विधेयविशेषणयोरेकलिङ्गता 'वेदाः प्रमाण'मित्यादिवत्। ऐहिकस्य सुखस्य स्रक्चन्दनवनितादुग्रपभोगस्य। अमुष्मिन् लोके भवम् आमुष्मिकं तस्मै परलोकसम्बन्धिने श्वोवसीयाय मङ्गलाय, "श्वः श्रेयसं स्यात् कल्याणं श्वोवसीयं शिवं शुभम्" इति हलायुधः। आर्त्तानां दुर्गतानाम् अभ्युपपत्तिः अनुग्रहः तया वित्तयोः विश्रुतयोः "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः। भगवतः ऐश्वर्य्यशालिनः तव पादयोः मूलं प्रान्तदेशं शरणं रक्षकतया अभिप्रपन्नः प्राप्तः तथाहि क्रियताम् अस्मिन् जने करुणेति भावः।

(घ) तस्याः काममञ्जर्य्याः। उदञ्जलिः रचिताञ्जलिः, पलितेन केशानां परिणामेन शारः कर्व्वुरितः शिखण्डबन्धः केशपाशः तेन स्पृष्टा संस्पृष्टीकृता पश्चात् मुक्ता परिवर्ज्जिता भूमिः यया तथाभूता, मस्तकलुण्ठनेन कृतनमस्कारा, अस्याः मत्पुत्र्याः काममञ्जर्य्याः सम्बन्धे मे मम दोषं दूषणं वो युष्माकं तवेत्यर्थः। गौरवे बहुवचनम्। एषा मत्स्वरूपा। स्वाधिकारस्य आत्मकर्त्तव्यकर्म्मणः वेश्याजात्युचितविधानस्य परपुरुषसंसर्गस्य अनुष्ठापनम् आचरणप्रयोजकत्वम्। गणिकामातुः वेश्याजनन्याः। अधिकारः कर्त्तव्यम्। अङ्गक्रिया शरीरशोभासम्पादनचेष्टा, अथवा अङ्गेषु हरिद्रातैलादिशोभासम्पादकवस्तुनः सम्मर्द्दनम्। "अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्द्दन"मिति वात्स्यायनीयात्।

এই ব্যক্তি ঐহিকসুখে অনুরাগী নহে; অতএব পারত্রিক মঙ্গলার্থে আর্ত্তজনের একমাত্র অনুগ্রহের হেতু ভবদীয় পাদপঙ্কজদ্বয়ের আশ্রয় গ্রহণ করিয়াছে। (খ-গ)

धातुसाम्यकृता मितेनाहारेण शरीरपोषणम्, आ पञ्चमाद्वर्षात् पितुरप्यनतिदर्शनम्, जन्मदिने पुण्यदिनेषु च उत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्य-गीत-वाद्य-नाट्य-चित्रास्वाद्य-गन्ध-पुष्प-कलासु लिपिज्ञानवचनकौशलादिषु (ङ)। सम्यग् विनयनम्, शब्द-हेतु समय-विद्यासु

(ङ) तेजः मानसिकः प्रभावः, बलं शारीरिकी शक्तिः, वर्णो रूपं मेधा धारणावती धीः तासां संवर्द्धनेन पुष्टिसम्पादकेन दोषाणां वातपित्तकफानाम् अग्नेः जाठरानलस्य धातूनां रसरक्तादीनां साम्यकृतत्वम्, स्वभावत्वःास्थापकेन मितेन अनधिकेन आहारेण भोजनेन शरीरस्य पोषणं रक्षणम्, आ पञ्चमात् वर्षात् पञ्चम-वर्षात् प्रभृति, अवध्यर्थस्य आङो योगे पञ्चमी। पितुः स्वजनकस्यापि पुरुषस्य अनतिदर्शनं नाधिकः सङ्गः, उत्सवः आनन्दप्रयोजकव्यापारः उत्तरः परवर्त्ती यस्य तथाभूतः मङ्गलविधिः देवतार्च्चनादिव्यापारः। बहुतरोत्सवव्यापारानुशीलनेन चरितस्य उत्सवोन्मुखत्वसम्पादनाय इति भावः। साङ्गानाम् अवान्तरहावभावादिसहकृतानाम् अनङ्गविद्यानां कामशास्त्रोक्तविद्याविशेषाणाम् अध्यापनम् उपदेशः। नाट्यम् अभिनयादि-

---

তদীয় জননী অঞ্জলি উত্তোলন করিয়া পক্ক কেশজাল ভূমিতলে লুণ্ঠিত করিয়া বলিল, 'ভগবন্! আপনার দাসীরূপা আমিই আমার দোষ প্রকাশ করিতেছি। আমার দোষ এই যে, আমি ইহাকে স্বজাতিযোগ্য কার্য্যে নিয়োগ করিয়া থাকি। গণিকা-মাতার ইহাই কর্ত্তব্য যে, দুহিতার জন্ম হইতেই তাহার আঙ্গিক সংস্কার করিবে; তেজ, বল, বর্ণ ও মেধার বর্দ্ধনকারী দোষ অগ্নি ও ধাতুর সাম্যসম্পাদক পরিমিত আহার দ্বারা শরীর পোষণ করিবে; পঞ্চম বর্ষ হইতে স্বীয় জনকের সহিতও অধিক দেখা করাইবে না; জন্মদিন ও অপরাপর পুণ্যদিনে বহুবিধ উৎসব সহকারে মাঙ্গলিক বিধানের প্রবর্ত্তন করিবে, সাঙ্গ কাম্যবিদ্যা শিক্ষা

**वार्त्तामात्रावबोधनम्, आजीवज्ञाने, क्रीड़ाकौशले, सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, अभ्यन्तरकलासु वैश्वासिकजनात् प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनम् ( च )।**

क्रिया, चित्रम् आलेख्यचित्रणम्, आस्वाद्यं सुखास्वादनीयम् आहार्य्यं मत्स्यमांसादिकं, कलाः एतदतिरिक्ताः शिल्पविद्याः तासु। लिपिज्ञानं बहुविधभाषावेदित्वं, सकलदेशीयलोकानामिव वेश्याभी रञ्जनीयत्वात् तत्तद्भाषानभिज्ञत्वे तथाशक्तेरसम्भवात् विजातीयताबोधेन स्वत एवानुरागस्य लाघवप्रसङ्गात्। वचनकौशलं सौष्ठवगठनवाक्यादिविन्यासचातुर्य्यं तस्य कामानुकूलत्वात्। सम्यक् प्रकर्षेण विनयनं शिक्षादानम्।

( च ) शब्दविद्या व्याकरणशास्त्रं हेतुविद्या तर्कशास्त्रं समयविद्या ज्यौतिषविज्ञानं तासु वार्त्तामात्रस्य कथामात्रस्य प्राधान्येन प्रतिपाद्यवस्तुमात्रस्य अवबोधनं ज्ञानम्। यथा व्याकरणे पदसाधनानुशासनानि कारकादिविधानप्रतिपादनञ्च भाषाविज्ञानानुकूलं, तर्के अनुमित्यनुमानादिलक्षणविचाराः, मुख्योद्देश्यतया च मोक्षानुकूलात्मनिर्द्देशः, समयविद्यायां ज्यौतिषशास्त्रे समयानां शुभाशुभादिनिर्द्धारणमित्येवम्। अथवा वार्त्तामात्रेण प्रस्तावमात्रेण अवबोधनं तत्कथायाः प्रवृत्तावेव तदर्थग्रहणक्षमता तत्र तत्र सुतरामभिज्ञत्वमिति तत्तद्विद्यापारदर्शिनामपि वेश्याभिः संग्राह्यत्वादिति भावः। आजीवस्य जीवनोपायस्य पुरुषमोहनेन धनादिसंग्रहरूपस्य ज्ञाने तत्तद्विषयाणां तत्त्ववेदने इत्यर्थः। क्रीड़ानां नर्म्मभाषितानां कौशले चातुर्य्ये, क्रीड़ानाम् अक्षक्रीड़ादिविविधवस्तूनां कौशले इति वा, क्रीड़ाया रसिकजनप्रियत्वात्

---

দিবে; নৃত্যগীত প্রভৃতি কলাবিদ্যা ও লিপিজ্ঞান বচনকৌশল প্রভৃতির শিক্ষা করাইবে; শব্দবিদ্যা হেতুবিদ্যা ও জ্যোতিষবিদ্যায় স্বল্পমাত্র জ্ঞান সম্পাদন করাইবে; জীবিকানির্ব্বাহের উপায়জ্ঞান, ক্রীড়াকৌশল সজীব ও নির্জীব দ্যূতকলায় নৈপুণ্য উৎপাদন করাইবে; গুপ্ত বিষয়-

प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्वसंगृहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनम्, कार्त्तान्तिकादिभिः कल्याणलक्षणोद्घोषणम्, पीठमर्द्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्य्य-माधुर्य्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम् (छ)। स्वतो रागान्धाय तद्भाव-

तत्संग्रहे क्रीडाचातुर्य्यस्य दृढोपयोगात् इति भावः। सजीवासु कुक्कुटादिप्राणियुक्तासु तन्निष्पाद्यासु इत्यर्थः। निर्ज्जीवासु निर्ज्जीवपदार्थेन जीवशून्यासु निर्ज्जीवपदार्थेन कन्दुकादिना निष्पाद्यासु द्यूतकलासु क्रीडाविद्यासु अभ्यन्तरीकरणं सविशेषनिवेशनम् इति सर्व्वत्र अन्वेति। तत्तद्वस्तुषु सुतरामभिनिवेशवतां तत्र तत्र प्रकर्षेण एव मानसरञ्जनस्य सौकर्य्यात् अन्यथा स्वाभिलषितवस्तुष्वपाटवदर्शनेन विरागस्य जायमानतया सकृत्यव्याघातात्। अभ्यन्तरकलास्वित्यादि "साभ्यन्तरकला यत्तु स्पृश्याङ्गास्पर्शनं रतौ" इति वात्स्यायनवचनम्। तथाहि विश्वस्तजनादेव प्रयोगेण रतिविषयः शिक्षयितव्या अविश्वस्तजनादनिष्टसम्भवात् इति भावः। आदरेण समाग्रहेण प्रसाधितायाः सुष्ठु अलङ्कृतायाः अपि च स्फीताः प्रचुराः परिबर्हाः परिच्छदाः यस्यास्तथाभूतायाः "परिबर्हस्तु राजार्हे वस्तुन्यपि परिच्छदे" इति वैजयन्ती। प्रकाशनं प्रदर्शनम्, दर्शनेन मुग्धानां लोकानां संग्रहार्थमिति भावः।

(छ) प्रसङ्गवत्यां प्रसङ्गतो जातायाम्। पूर्व्वं संगृहीतैः कथञ्चिदात्मपक्षपतितैः ग्राह्या ग्रहणयोग्या वाचः येषां तैः, विश्वासनीयवचनैः सिद्धेः कर्म्मसाफल्यस्य

---

বিশেষে বিশ্বস্তজনের দ্বারা শিক্ষা প্রদান করাইবে; মহোৎসবাদি স্থানে সাদরে সজ্জিত করিয়া উন্মুক্তভাবে বাহির করিবে। (খ-গ-ঘ-ঙ-চ)

প্রসঙ্গতঃ সঙ্গীতাদি ক্রিয়ার পূর্ব্বসংগৃহীত বিশ্বস্ত ব্যক্তি দ্বারা পুরস্কারাদি দেওয়াইবে, নিপুণ শিল্পিগণ দ্বারা চারিদিকে দুহিতার শিল্প-

दर्शनोन्मादिताय वा जाति-रूप-वयोऽर्थ-शक्तिशौच-त्याग-दाक्ष्य-दाक्षिण्य-शिल्प-शील-माधुर्य्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राप्ततमाय अल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभे अर्थस्य कामस्वीकृते [कामस्वीकृते] स्वामिन्यधिकरणे वा साधनम्, रक्तातरस्य दुहितैकचारिणीव्रतानुष्ठापनम् (ज)। नित्य-नैमित्तिक-प्रीतिदायकतया

लम्भनं प्रापणं तत्कर्म्मणि प्रशंसावचनप्रवर्त्तनम् इत्यर्थः। "मूढः परप्रत्ययनेयबुद्धि"-रित्यादिवाक्प्रतिपाद्यस्य निर्व्यूढत्वात् तत्प्रशंसाश्रवणेन वास्तविकं व्रतम् अविचार्य्य एव वा केषाञ्चित् तदुन्मुखतासम्भवादिति भावः। दिङ्मुखेषु सर्वदिग्भागेषु तत्तच्छिल्पैः नृत्यगीतादिकलाविद्याभिः वित्तकैः प्रख्यातैः जनैः यशसः तत्तद्विद्या-पारदर्शित्वख्यातेः प्रख्यापनं प्रचारणं कार्त्तान्तिकादिभिः दैवज्ञपुरुषादिभिः, कृतान्तशब्दो दैववाचकः, तस्मात् तद्वेत्तीत्यर्थे ष्णिकप्रत्ययात् तत्पदं तदर्थकं, कल्याण-लक्षणानां शुभकरचिह्नानाम् उद्घोषणं प्रचारणम्। पीठमर्द्दः "दूरानुवर्त्तिनि स्यात्तस्य प्रासङ्गिकेति-वृत्ते तु। किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः" इत्युक्तलक्षणकः पुरुषः विटः "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः" इत्युक्तलक्षणकः विदूषकः "कुसुम-

নৈপুণ্য প্রখ্যাপন করিবে; দৈবজ্ঞগণ দ্বারা শুভলক্ষণ উদ্ঘোষণ এবং পীঠমর্দ্দ বিট বিদূষক ও ভিক্ষুকী প্রভৃতি দ্বারা নাগরিক পুরুষগণের মধ্যে রূপ ও চরিত্রাদির প্রশংসা করাইবে; যখন যুবকবৃন্দ দুহিতার প্রতি আকৃষ্ট হইল, তখন অধিক শুল্কে তাহার ব্যবহার নির্দ্ধারণ করিবে; স্বয়ং দুহিতার ভাবদর্শনে উন্মাদগ্রস্ত, রাগান্ধ ও জাতিসৌন্দর্য্য প্রভৃতি গুণপরম্পরায় উৎকৃষ্ট স্বতন্ত্র ব্যক্তির হস্তে দুহিতার স্থাপন, অস্বতন্ত্র ব্যক্তি যদি বহু-

हृतशिष्टानां [ आहृतशिष्टानां ] गम्यधनानां चित्रैरुपायैरपहरणम्; अददता लुब्धप्रायेण च विग्रहासनम्; प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसन्धुक्षणम्; असारस्य वाक्सन्तक्षणैर्लोकोपक्रोशनैर्दुहितृ-निरोधनैर्व्रीडोत्पादनैरन्याभि-

वसन्ताद्यभिदः कर्म्मवपुर्वेशभाषाद्यैः हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञ" इत्युक्तलक्षणाः, सर्व्व एवैते पारिभाषिकाः काव्यनये। नागरिकपुरुषाणां नगरवर्त्तिरसिकजनानां समवायेषु समाजेषु, रूपं शारीरिकी प्राकृतिकी च शोभासम्पत्तिः, शीलम् उदारचारित्र्यादि, शिल्पं नृत्यकलादिकं, सौन्दर्य्यं मनोज्ञतासम्पादकभूषणधारणादिजन्यं रूपम् इति रूपसौन्दर्य्ययोरविशेषेण न पुनरुक्ततापत्तिः। माधुर्य्यं रसवदालापादिजन्यं प्रियत्वम्। तेषां प्रस्तावना सप्रशंसप्रचारः। युवजनमनोरमाणां तरुणाभिलाषाणां लक्ष्यभूतायाः विषयतां प्राप्तायाः नागरिकजनानां कामविषयीभूतायाः प्रभूततमेन सुप्रचुरेण शुल्केन व्यवहारमूल्येन अवस्थापनं युवकजनभोग्यविधया उपानयनम्।

(ज) स्वतः कस्यचित् प्ररोचनाव्यतिरेकेण आत्मनैव रागान्धाय रूपादिपर्य्यालोचनया मोहं प्राप्ताय तस्याः गणिकाया भावदर्शनेन कृत्रिमानुरागचिह्नविलोकनेन

গুণযুক্ত এবং প্রাজ্ঞ হয়, তবে তাহার নিকট অল্পধন পাইয়াও বহুধন পাইয়াছি প্রকাশ করিয়া কন্যাকে তাহার ভোগ্যরূপে স্থাপন করিবে; অস্বতন্ত্র ব্যক্তির সহিত গান্ধর্ব্ব বিধানে গোপনে তনয়ার মিলন সম্পাদন করিয়া তদীয় পিত্রাদির নিকট হইতে পরে প্রকাশ্যে বহু অর্থ গ্রহণ করিবে; নায়ক স্বীকৃত অর্থ দান করিতে অসম্মত হইলে অথবা না দিলে, রাজার নিকট অথবা বিচারালয়ে যাইয়া ব্যবহার ( নালিশ ) স্থাপন করিবে, আর কেহ অত্যন্ত অনুরাগী হইলে, দুহিতাকে একমাত্র তাহারই ভোগ্যরূপে ব্যবস্থিত রাখিবে। ( ছ-জ )

নিত্য ও নৈমিত্তিক উৎসবাদি ক্রিয়ার দ্বারা প্রীতিদান করিয়া হৃত-

योगैरवमानैश्चापवाहनम्; • अर्थैरनर्थप्रतिघातिभिश्चानिर्न्थै-रन्यैरनुबन्धार्थानर्थसंशयान् विचार्य्य भूयः [ इभ्यैरनुबन्धार्थावर्थ-संशयान् विचार्य्य भूयो भूयः ] संयोजनमिति (भ)। गणि-

उन्मादिताय प्राप्तोन्मादाय, जातिः सत्कुलसम्भवः • ब्राह्मणत्वादुत्कृष्टजातिर्वा। रूपं सौन्दर्य्यं, वयः तारुण्यम्, अर्थः सम्पत्, शक्तिः शरीरसामर्थ्यं, शौचम् अन्यविध-पापकरविषयेषु अनासक्तिः शुद्धचारित्रमिति यावत्। त्यागः दानशौण्डत्वं, दाक्ष्यं कर्म्मसु दक्षता, दाक्षिण्यं सारल्यं, शिल्पं कारुकौशलं, शीलं सच्चरित्रता, माधुर्य्यम् उग्रभावराहित्यं तैः उपपन्नाय युक्ताय स्वतन्त्राय स्वेच्छावशेनैव सर्व्वकर्म्म-साधनक्षमाय, प्रदानं तद्भोग्यतया व्यवस्थापनम्, अधिकगुणाय बहुगुणयुक्ताय, अस्वतन्त्राय अस्वाधीनाय, पित्रादिकानां वश्याय इत्यर्थः। प्राज्ञतमाय विद्यागौरवेण श्रेष्ठाय, अल्पेनापि अनधिकेनापि अर्थेन बहुव्यपदेशेन अधिकच्छलेन, अधिक-लाभप्रख्यापनेन इत्यर्थः। अर्पणं भोग्यतया प्रदानम्। वा अथवा अस्वतन्त्रेण तेन अस्वाधीनेन जनेन सह गान्धर्व्वसमागमेन गान्धर्व्वविधिना मेलनसम्पादनेन, तद्-गुरुभ्यः तस्य पित्रादिगुरुजनेभ्यः शुल्कानाम् अर्थानाम् अपहरणं ग्रहणम् अर्थस्य दातव्य तया स्वीकृतस्य शुल्कस्य अलाभे अप्राप्तौ, नायकेन अर्थे अनिष्पादिते इत्यर्थः। कामेन मन्मथवशेन स्वीकृते आयत्तीकृते स्वामिनि भूपतौ। अधिकरणं विचारा-लये साधनं निवेदनम्, अभियोगसमुपस्थापनेन तस्मात् प्राप्तव्यस्य अर्थस्य ग्रहण-मिति भावः। रक्ततरस्य अतिशयेन गणिकायामासक्तस्य जनस्य सम्बन्धे, दुहिता स्वीयकन्यया रक्ततरस्य अनुरागविषयीभूतया इत्यर्थः। एकचारिणीव्रतस्य एकपुरुष-

ধনের অবশিষ্ট ধন নানা উপায়ে আত্মসাৎ করিবে; কৃপণ অথবা ধনদানে বিমুখ ব্যক্তির সহিত বিবাদ করিবে; প্রতিবেশীর উৎসাহে লুব্ধ অথচ অনুরাগী ব্যক্তির ত্যাগশক্তির প্রশংসাপ্রচার, নির্ধন

कायाश्च गम्यं प्रति सज्जतैव न सङ्गः, सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थिते, अनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि।

मात्रगामित्वलक्षणस्य नियमस्य अनुष्ठापनम् आचरणप्रयोजकता, अन्यथा कदाचित् वैपरीत्यदर्शनेन तदीयातिमात्ररागस्यापि भङ्गप्रसङ्गात्।

( भ ) नित्यं प्रतिनियतं नैमित्तिकी स्त्रीयभावप्रकाशादिरूपनिमित्तजनिता या प्रीतिः तद्दायकतया, हृताः वशीकृताः ये जनाः तेभ्यः शिष्टानाम् अवशिष्टानां तदतिरिक्तानाम् इत्यर्थः। गम्यं प्राप्तिसमुचितं धनं येषां तेषां महाधनानाम्, अथवा नित्ये नित्यकर्त्तव्ये कर्म्मणि नैमित्तिके निमित्तविशेषादुपस्थिते च विषये महोत्सवादौ प्रीतिदायकतया हृदयामोदसाधकतया हृतेभ्यः आत्मसात्कृतेभ्यः धनेभ्य इति शेषः। शिष्टानाम् अवशिष्टानाम् अनायत्तानामित्यर्थः। गम्यानां नायकानां विटानामित्यर्थः। "गम्यो विटः पाल्लविको भुजङ्ग" इति भागुरिः। धनानाम् अर्थानाम् इति। चित्रैः नानारूपैः विचित्रैः उपायैः अपहरणं वशीकारः। अददता अर्थम् अनिष्पादयता अथच लुब्धप्रायेण तां गणिकां प्रति अत्यासक्तभावं गतेन। विगृह्य कश्चित् कलहं प्रक्रम्य इत्यर्थः। आसनं स्वगृहे एव वर्त्तनम्। अनुरक्ततया बाधितसंसर्गस्य कदाचित् स्वत एव अर्थदानवाञ्छाया भविष्यत्त्वादिति भावः। प्रतिवृत्तिभिः प्रातिवेश्यैः आसन्नगृहवेश्यापतिभिरित्यर्थः। "प्रातिवृत्ती प्रातिवेश्य" इति वैजयन्ती। प्रोत्साहनेन समुत्साहसम्पादनेन, लुब्धस्य आत्मानं प्रति लोभवतः

---

ব্যক্তির প্রতি কঠোর বাক্যপ্রয়োগ, লোকনিন্দায় কন্যার নিরোধে ও লজ্জাসম্পাদনে এবং অন্যান্য অভিযোগ ও অবমাননায় স্বতন্ত্র রাখিবে; অনর্থনিরাকরণপটু অর্থদানকারী প্রশস্ত অপর ব্যক্তিগণের সহিত অর্থদানবিষয়ে নিঃসন্দেহ হইয়া কন্যাকে যুক্ত করিবে; গণিকা নায়কের প্রতি বিহারের উদ্যম মাত্র করিবে; কিন্তু বিহার করিবে না; নায়কের

**गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षमाणयाऽनया प्रकोपितः स्वकुटुम्बकश्चावसादितम्। 'एषा कुमतिर्न कल्याणी' इति**

रागिणः नायकस्य त्यागशक्तेः दानशक्तेः सन्धुक्षणम् उद्दीपनम्। तेन औदार्य्यरक्षण-प्रवृत्त्या वा धनदानस्य आवश्यकत्वादिति भावः। अथवा लुब्धस्य अर्थासक्तस्य कृपणस्य इति, तेषामर्थाकाङ्क्षाया बलवत्त्वात् परित्यागः स्वतो न सम्भवतीति पर-प्ररोचना कर्त्तव्या इति भावः। असारस्य निर्धनस्य "श्रेष्ठि स्वामिनि धने शुक्रे" इत्यादि हलायुधः। वाक्सन्तक्षणैः परुषवाक्प्रयोगैः इत्यर्थः। लोकेषु जनसमाजेषु उपक्रोशनैः निन्दावादप्रचारैः। दुहितुः कन्यायाः निरोधनैः तत्सम्पर्काद्बहिरेव अवस्थापनैः। व्रीडोत्पादनैः लज्जाजननैः अन्यत्र धर्म्माधिकरणादौ अभियोगैः तद्विरोधेन व्यवहारस्थापनैः अपमानैः च अपवाहनं स्वगृहाद् बहिष्करणं निज-दुहितृसम्पर्काद् दूरीकरणमित्यर्थः। अन्यैः अपरैः जनैः अभियोगैः आक्रमणैः अपमानैः तज्जन्यापमानैरित्यर्थः। सर्व्वत्र एव विरुद्धव्यवहारदर्शनात् तस्य अपसरण-मावश्यकम्। अर्थदैः धनदानशक्तैः अनर्थान् अनिष्टानि प्रतिघ्नन्ति ये तैः अनिष्ट-दूरीकरणसमर्थैः अनिन्द्यैः निन्दातामुक्तैः, अन्यैः अपरैः अपवाहितादितरैरित्यर्थः सह इति शेषः। अनुबद्धः अनुगतः अर्थः येषु तान् अर्थानां धनानां संशयान् सन्देहान् विचार्य्य विशेषेण विविच्य "धनं दास्यति न वा" इत्याकारं सन्देहलेशमपि अकृत्वा धनदानमावश्यकमेव मत्वा इत्यर्थः। भूयः पुनः संयोजनं सम्मेलनं वारा-न्तरीणत्वञ्च संयोजनस्य अपवाहितजनसंयोजनवारापेक्षया।

(अ) गम्यम् उपनायकं प्रति, सञ्जाता समुद्यममात्रं रमणस्येति शेषः।

---

সহিত অত্যন্ত অনুরাগ জন্মিলেও মাতা বা উপমাতার আজ্ঞা অতিক্রম করিয়া তাহার সহিত বিহারাদি কার্য্যে রত হইবে না। এইরূপ নিয়মসত্ত্বে আমার এই কন্যা প্রজাপতির নির্দ্দিষ্ট স্বকীয় ধর্ম্ম উল্লঙ্ঘন করিয়া কেবল রূপবান্ আগন্তুক এক ব্রাহ্মণ যুবার প্রতি অনুরক্ত হইয়া নিজ ধনব্যয়ে বিহার করত একমাস অতিবাহিত করিয়াছে। কিন্তু

निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता। सा चेदियमहार्थ्यनिश्चया, सर्वं एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यत इत्यरोदीत् (ञ)। अथ सा वारयुवतिस्तेन तापसेन

न सङ्गः न रमणक्रियाप्रवृत्तिरित्यर्थः। प्रीतौ प्रणये उपनायकं लक्ष्यीकृत्येति शेषः। मातुः निजजनन्याः, मातृकायाः मातामह्याः "मातुर्माता तु मातृका" इति वैजयन्ती। मातृकायाः मातृरूपेण रक्षिकायाः कुट्टन्या वा शासनस्य आदेशस्य अतिवृत्तिः अतिक्रमः, तदादेशातिक्रमेण तेन सह व्यवहारो न कर्त्तव्यः, तथा व्यवहारे उभयोः प्रीतिमात्रमेव शुल्कं स्यात् न धनं, तेन च आजीवस्य एव विलोपापत्तिरिति भावः। एवम् उक्तरूपे स्थिते नियमे सति उक्तनियमस्य रक्षणीयत्वे इत्यर्थः। अनया मद्दुहित्रा काममञ्जर्य्या, प्रजापतिना विधात्रा विहितं कर्त्तव्यतया स्थापितं स्वधर्म्मं वेश्याजात्युचितं विधिम् उल्लङ्घ्य अतिक्रम्य, रूपमात्रं केवलं सौन्दर्य्यमेव न तु वेश्याजनानुरागोपयोगि धनमपि इति मात्रशब्देन व्यवच्छिद्यते, धनं सम्बलं यस्य तथाभूते, विप्रयूनि तरुणब्राह्मणे रममाणया रतिं भुञ्जानया, मासमात्रं समस्तं मासम् एकमासं वा व्याप्य, अत्यन्तसंयोगे द्वितीया। अत्यवाहि अतिक्रान्तम्। मासं यावत् तस्मात् धनप्राप्तिस्तु दूरे आस्तां स्वधनं व्ययित्वापि केनचित् विप्रयूना यौवनसुखमास्वादितं, तच्च वेश्याजात्यनुचितमिति भावः। अर्थयोग्यः धनदानक्षमः अतएव गम्यः उपभोगयोग्यः जनश्च। प्रत्याचक्षमाणया अपवाहयन्त्या प्रार्थिभावेन उपस्थितानामपि प्रत्याख्यानं कुर्व्वत्या इत्यर्थः। अनया मम दुहित्रा प्रकोपितः कोपं लम्भितः। स्वकुटुम्बकं निजाः आत्मीयजनाः, अवसादितं दुःखे पातितम्, बहुतरोपदेशदानेऽपि

যাহাদের অর্থ আছে এবং যাহাদের সহিত বিহার করা গণিকার পক্ষে কর্ত্তব্য, তাহাদিগকে প্রত্যাখ্যান করিয়া রাগাইয়া দিয়াছে এবং আত্মীয়গণকে দুঃখিত করিয়াছে। আমি "তোমার এ বুদ্ধি ভাল নহে" এই বলিয়া নিবারণ করিতে থাকিলে সে ক্রুদ্ধা হইয়া বনে বাস করিবার জন্য

"भद्रे ! ननु दुःखाकरोऽयं वनवासः, तस्य फलमपवर्गः स्वर्गो वा। प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुःसम्पाद एव, द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्म्मानुष्ठायिनः, तदशक्यारम्भादुपरम्य मातुर्मते वर्त्तस्व" इति सानुकम्पमभिहिता "यदीह

तदनुग्रहणेन मनोव्यथां लम्भितमित्यर्थः। एषा आत्मधनव्ययेन सप्रणयं तस्य विप्रयुवकस्य भोगविषयिणीत्यर्थः कुमतिः असद्बुद्धिः न कल्याणी न शुभकरी। इति उक्तवाक्येन निवारयन्त्यां प्रतिषेधन्त्यां मयि कोपात् वनवासाय कानने वासकल्पनार्थम् प्रस्थिता आगता इयमिति शेषः। सा इयं मम दुहिता काममञ्जरी चेत् अहार्य्यः अपरित्याज्यः निश्चयः तस्य नायकस्य तथाभोगविषयकी वनवासविषयकी वा यस्यास्तथाभूता। तदा इति पूरणीयम्। एष उपस्थितः सर्व्वः जनः सकला एव एतस्या आत्मीया इत्यर्थः। अनन्यगतिः निरुपायः। अनशनेन उपवासेन। संस्थास्यते मरिष्यति "समवप्रविभ्यः" इत्यात्मनेपदम्। तथाहि इयं यथा वर्त्तमानां मतिम् अन्यथा कृत्वा पुनरात्मगृहे स्वजातिसमुचितेन विधिना तिष्ठेत् तथा करोतु महाभाग इति भावः।

( ट ) दुःखानां नानाविधकष्टानां आकरः उत्पत्तिभूमिः, तथाहि अत्र वसतां बहूनि कष्टानि जायन्ते, तत्तया एतत्कष्टं सोढ़ुं न शक्यते इति भावः। तस्य वनवासस्य विषयभोगस्पृहाशून्यतया वनमध्ये अवस्थानस्य फलम् उद्देश्यभूतं वस्तु अपवर्गः मोक्षः वा अथवा स्वर्गः, निरभिसन्धानक्रियाकारितया वनवासोद्देश्यो मोक्षः, साभिसन्धानक्रियाकारितया च स्वर्ग इति पक्षद्वयनिष्पत्तिः। तयोः अप-

প্রস্থান করিয়াছে। যদি ইহার ইহাই নিশ্চয় হয়,—অন্যথা না হয়, তবে অনন্যগতি হইয়া ইহার আত্মীয়স্বজন সকলে অনাহারে মরিবে। এই বলিয়া তাহার মাতা কাঁদিতে লাগিল। ( ঝ-এ )

পরে সেই বারাঙ্গনাকে তাপস আর্দ্রস্বরে বলিলেন,—ভদ্রে ! এই বনবাস

भगवत्पादमूलं न शरणम् शरणमस्तु कृपणाया हिरण्यरेता देव एव" इत्युदमनायत ( ट )। स तु मुनिरनुविमृश्य गणिकामातरमवदत्—"सम्प्रति गच्छ गृहान्, प्रतीक्षस्व कानिचि-

वर्गेऽपवर्गयोः प्रथमः आदिकथितः अपवर्ग इत्यर्थः। प्रकृष्टज्ञानेन मतविशेषेषु सत्त्वपुरुषान्यताप्रत्ययादिरूपज्ञानविशेषेण साध्यः निष्पाद्यः, अतएव प्रायः बहुस्थलेष्वेव दुःसम्पादः अतिकृच्छ्रसाध्यः, तथाहि प्रथमतः कठोरतपस्यादिना पुण्यविशेषादुत्पत्या तादृशज्ञानविशेषजननस्यैव अतिकृच्छ्रसाध्यत्वे तेनैव तत्फलस्य तथा इति भावः। द्वितीयः स्वर्गस्तु सर्व्वस्यैव सकलस्यैव जनस्य कुलधर्म्मानुष्ठायिनः स्वजात्युचितकार्य्याण्याचरतः सुलभः अनायासलभ्यः, अत्र सुलभ इति पदस्य खल्प्रत्ययनिष्पन्नतया निष्ठादित्वात् षष्ठीप्रतिषेधेऽपि सम्बन्धविवक्षया सा न विरुद्धा। तत् तस्मात् अशक्यः साधयितुमशक्यः आरम्भः उद्यमः यस्य अपवर्गस्य तस्मात् अपवर्गाभिप्रायात् इत्यर्थः। उपरम्य विरम्य, उपरमोऽत्र विराममात्रार्थे प्रयुक्तः, न तु प्राणत्यागे। मातुः स्वजनन्याः मते अभिप्रेते वेश्याजनकर्त्तव्ये विधौ इत्यर्थः वर्त्तस्व। सानुकम्पं सम्भाव्यमानतत्कष्टप्रहरणकाम्यया इत्यर्थः। अभिहिता कथिता सती, भगवतः ऐश्वर्य्यशालिनो भवतः पादमूलं न शरणम् आश्रयभूतं रक्षकं वा "शरणं गृहरक्षितो" रिति कोषात्। तदा इति पूरणीयं शरणमस्तु इत्यस्मात् प्राक्। कृपणाया दीनाया मम इति शेषः। हिरण्यरेताः अनलः शरणम् आश्रयः अस्तु, तथाहि यदि भवतः समीपे अहं विपदस्त्राणं न लभेय तदा वह्नावेव जीवनविसर्ज्जनं करिष्यामि न तु आत्मानभिमतस्य मातृमतस्य स्वीकरणमिति भावः। गूढ़ार्थस्तु तवैव पादमूले अहं त्वया भोग्यतया स्वीकृता चिरमवतिष्ठेय इति। उदमनायत उन्मनस्कताया भावं परिदर्शयामास। क्यङ्प्रत्ययेन प्रकृतोन्मनस्कताया अभावः प्रत्याय्यते।

( ठ ) स मुनिः मरीचिः, अनुविमृश्य तद्वाक्यानन्तरं विशेषेण विभाव्य उक्त-

অত্যন্ত দুঃখজনক, উহার ফল হয় মুক্তি, না হয় স্বর্গ; উক্ত দুইটী বস্তুর প্রথমটী প্রকৃষ্ট জ্ঞানে নিষ্পন্ন হইয়া থাকে, অতএব তাহা প্রায়ই অত্যন্ত

द्दिनानि, यावदियं सुकुमारी सुखोपभोगसमुचिता सत्यरण्यवास-
व्यसनेनोद्वेजिता भूयो भूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव
स्थास्यति" इति। तथा इति तस्याः प्रतियाते स्वजने सा
गणिका तन्तु षिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्याहत-

मर्थमिति शेषः। सुकुमारी कोमलाङ्गी, सुखोपभोगस्य समुचिता अनायासलभ्य-
वस्तुसम्भोगयोग्या कष्टासहिष्णुरित्यर्थः। अरण्यवासव्यसनेन वनवासजन्यविपत्तिलाभेन
उद्वेजिता तत्कष्टभोगासहिष्णुः सती भूयोभूयः पुनः पुनश्च अस्माभिः मया
सर्व्वान्तःकरणेनेत्यर्थः, विबोध्यमाना प्रबोधवाचा स्वस्थीक्रियमाणा प्रकृतावेव स्थास्यति
पुनर्यथापूर्व्वां प्रकृतिमेव लप्स्यते तवैव मते वर्त्तिष्यत इत्यर्थः। तथा 'तदेव अस्तु
कियन्ति दिनानि प्रतीक्षेय" इति एवम् उक्त्वा इति शेषः। तस्याः काममञ्जर्य्याः
स्वजने मातृप्रमुखे आत्मीयवर्गे प्रतियाते प्रस्थिते सति, सा गणिका काममञ्जरी
अलघुभक्तिः सातिशयभक्तिशालिनी, धौते सुपरिष्कृते ये उद्गमनीये वसने ते वस्ते
या सा, सुनिर्म्मलवसनावृताङ्गी, अत्र "तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युग"मिति

দুর্লভ ; দ্বিতীয়টী নিজ নিজ কুলধর্ম্মের অনুষ্ঠানকারী সকল ব্যক্তির পক্ষেই সুলভ। অতএব এই অশক্য কার্য্য হইতে বিরত হইয়া মাতার মতানুসারে অবস্থান করে। পরে কামমঞ্জরী উন্মনস্কভাবে বলিল,—"যদি আমি আপনার চরণে আশ্রয় না পাই, তবে অনলদেবই আমার আশ্রয় হইবেন।" সেই মুনি বিবেচনা করিয়া কামমঞ্জরীর মাতাকে বলিলেন,—তুমি সম্প্রতি গৃহে ফিরিয়া যাইয়া কিছু দিন অপেক্ষা কর। সুখোপভোগে অভ্যস্ত এই সুকুমারী অরণ্যবাস-কষ্টে বিত্রস্ত হইয়া মদীয় প্রবোধবাক্যে পুনরায় প্রকৃতিস্থা হইবে। 'তাহাই হউক' এই বলিয়া কামমঞ্জরীর স্বজনগণ প্রস্থান করিলে, কাম-মঞ্জরী গাঢ় ভক্তিসহকারে ধৌতবসনে আচ্ছাদিত হইয়া শরীরসংস্কারে

शरीरसंस्कारा वनतरुपोतकालवालपूरणैर्देवतार्च्चन-कुसुमोच्चया-वचयप्रयासैर्नैकविकल्पोपहारकर्म्मभिः कामशासनार्थे च गन्ध-माल्य-धूप-दीप-नृत्य-गीत-वाद्यादिभिः क्रियाभिः, एकान्ते च त्रिवर्गसम्बन्धिनीभिः कथाभिः, अध्यात्मवादैश्चानुरूपैरल्पीय-सैव कालेनान्वरञ्जयत् (ठ)। एकदा च रहसि रक्तं तमुपलच्य

कौषात् यद्यपि उद्गमनीयशब्द एव धौतवस्त्रद्वयवाचकः तथापि अतिपरिष्कृतत्व-सूचनाय पुनर्धौतविशेषणमुपात्तम्। चूतवृक्षादिशब्दवत् एकदेशस्य नैरर्थक्यं वा स्वीकार्य्यम्। न अति आदृतः शरीरसंस्कारः अङ्गोपलम्भनं यया तथाभूता एतेन औदार्य्यं प्रतिपादितम्। वनतरुपोतकानां काननस्थक्षुद्रतरुनिवहानाम् आल-वालानां जलसेकार्थं कृतानां मूलवर्त्ति खातानां पूरणैः जलसेकेन इति शेषः। देवतानाम् अर्च्चनाय कुसुमोच्चयानां पुष्पसमूहानाम् अवचये चयने प्रयासैः समुद्यमैः, पुष्पचयनकष्टैः। नैकविकल्पाः नानाविधभावैः कल्पिताः ये उपहाराः पूजोपचाराः तेषां कर्म्मभिः व्यापारैः कामशासनो महादेवः तस्य अर्थे कारणाय, तत्पूजनस्य हेतोरित्यर्थः। एकान्ते निभृतस्थाने, त्रिवर्गः धर्म्मार्थकामाः तत्सम्बन्धिनीभिः तद्विषयिणीभिः कथाभिः आलापैः, अनुरूपैः मुनिजनेन सह व्यापारयोग्यैः कथाप्रसङ्गेन उत्थितैर्व्वा अध्यात्मवादैः आत्मसम्बन्धिकथाभिः, अल्पीयसैव कालेन दिनकतिपयेनैव तम् ऋषिं मरीचिम् अन्व-रञ्जयत् स्वं प्रति जातप्रणयं चकार।

(ठ) रहसि निर्ज्जने, तं मुनिं रक्तम् अनुरागयुक्तम् उपलच्य विज्ञाय। लोकः

অধিক আদর করিত না। সে ক্ষুদ্র ক্ষুদ্র বনতরুর আলবালে জলসেক, দেবতার অর্চ্চনার্থ কুসুমসমূহচয়ন, বহুবিধ পূজার উপহার—শিবপূজার জন্য গন্ধমাল্য ধূপ দীপ ও নৃত্যগীতবাদ্য প্রভৃতি ক্রিয়া দ্বারা নির্জ্জনে ধর্ম্ম অর্থ ও কাম বিষয়ক প্রস্তাবে এবং অনুরূপ অধ্যাত্মবাদ দ্বারা অল্পকালমধ্যেই তাপসকে বশীভূত করিল। (ট—ঠ)

"मूढ़ः खलु लोको यत् सह धर्म्मेणार्थकामावपि गणयति" इति किञ्चिदस्मयत। "कथय वासु! केनांशेनार्थकामातिशयी धर्म्मस्तवाभिप्रेत" इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम् (ड)। 'इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम्? अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य। भवतु श्रूयताम्।

जनः मूढ़ः अतिमात्रं विवेकहीनः, यत् यस्मात् धर्म्मेण सह धर्म्मां विधिम् आचरन्नपि इत्यर्थः। अर्थकामौ धर्म्मात् निकृष्टौ अपि तदाख्यौ द्वौ वर्गौ गणयति आचरणीयतया स्वीकरोति, इति उक्त्वा किञ्चित् अस्मयत ईषद्धास्यं कृतवती। तथाहि धर्म्म एव त्रिवर्गेषु श्रेष्ठः अर्थकामौ च निकृष्टौ अतस्तौ परिहार्यौ इति भावः काममञ्जर्याः प्रतिपाद्यतया अभिलषितः। वासु। बालिके! सम्बोधनमिदं गूढ़तत्त्वावगमे तस्या अक्षमताप्रत्यायकं, तदेव प्रकृते उपयुज्यते। केन अंशेन केन गुणेन, धर्म्मः त्रिवर्गाणां प्रथमो वर्गः अर्थकामौ अतिशेते अतिक्रामति यः तथाभूतः, तथात्वेन इत्यर्थः। तव अभिमतः सम्मतः, कीदृशम् उतकृष्टत्वं धर्म्मस्य येन अर्थकामौ तस्मात् निकृष्टौ इति भावः। इति एवं वाक्येन मरीचिना तेन मुनिना प्रेरिता पृष्टा कथनाय प्रयोजिता इत्यर्थः। अभिधातुं धर्म्मस्य प्रकर्षकारणम् अर्थकामयोश्च अपकर्षकारणं वक्तुम्। लज्जया मन्थरम् अलसं मन्दं मन्दमित्यर्थः। आरभत सा काममञ्जरीति शेषः।

(ढ) प्रथमतः मुनेः गौरवं प्रकटयितुम् आत्मानं परिहरति—इत इत्यादिना।

একদিন নির্জ্জনে কামমঞ্জরী সেই মুনিকে নিজের প্রতি অত্যন্ত অনুরক্ত জানিয়া একটু হাসিয়া বলিল,—"লোকসমূহ অত্যন্ত অজ্ঞ যে, তাহারা ধর্ম্মের সহিত অর্থকামেরও সেবা করিয়া থাকে।" মরীচি বলিলেন,—'বালিকে! অর্থ ও কাম অপেক্ষা কোন্ উৎকর্ষে তোমার নিকট ধর্ম্ম অত্যন্ত অভিমত?' লজ্জামন্থরভাবে কামমঞ্জরী বলিতে

ननु धर्म्मादृते अर्थकामयोरनुत्पत्तिरेव। तदनपेक्ष एव स धर्म्मो निवृत्तिसुखप्रसूतिरात्मनः समाधानमात्रसाध्यश्च। सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते। तत्त्वदर्शनोपबृंहितश्च

इतः अस्मात् भगवतः ऐश्वर्य्यशालिनः जनात् भवादृशात् महापुरुषात् त्रिवर्गाणां धर्म्मार्थकामानां बलाबलयोः उत्कर्षापकर्षयोः ज्ञानं, तथाहि तवैव प्रसादेन अहं त्रिवर्गेषु धर्म्मस्य उत्कर्षम् अर्थकामयोश्च अपकर्षं जानामि इति भावः। अथवा इतः मल्लक्षणात् जनात् भगवतः ऐश्वर्य्यशालिनोऽपि भवतः त्रिवर्गबलाबलज्ञानं भविष्यतीति शेषः। एतेन यदहं प्रतिपादयामि तदेव तव बुद्धिं परिवर्त्तयिष्यतीति भावः। एतच्च सोल्लुण्ठनवाक्यम्, तथाहि अहं यद्यपि त्रिवर्गविषये अत्यन्तमज्ञा तथापि त्वमेवं मयि मुग्धः यथा मत्प्रतिपादितमेव वस्तु निष्कुण्ठं स्वीकरिष्यसीति भावः। एतदपि उक्तज्ञानं दासजने सेवकजने मयि अनुग्रहस्य प्रसादस्य प्रकारान्तरं भावभेदः। तथाहि त्वत्त एव शिक्षितां विद्यां त्वां शिक्षयेयमिति भावः। धर्म्मादृते धर्म्मं विना, अर्थकामयोः अर्थस्य कामस्य च अनुत्पत्तिः असम्भवः, एवशब्दः कथमपि उत्पत्तिव्यवच्छेदाय। तथाहि जन्यमात्रं प्रति अदृष्टं कारणम् अर्थकामौ च जन्यौ, अतएव धर्म्मव्यतिरेकतस्तदनुत्पादः अधर्म्मस्यापि धर्म्मभिन्नस्य यद्यपि कारणतास्ति तथापि प्रकृते सदर्थकामयोरेव सुखजनकयोरभिप्रेतत्वात् तौ प्रति च अधर्म्मस्य कारणत्वाभावात् सामञ्जस्यम्। तदनपेक्षम् अर्थकामयोरपेक्षां विनैव इत्यर्थः। स पूर्व्वप्रस्तुतो धर्म्मो निवृत्तिसुखस्य संसारविरागजन्यसुखमार्गस्य मोक्षात्मकस्य इत्यर्थः।

লাগিল—"এই ব্যক্তির নিকট হইতে ত্রিবর্গবিষয়ে আপনার উৎকর্ষাপকর্ষ জ্ঞান অসম্ভব। অথবা, আপনি যে তথাপি আমার নিকট তদ্বিষয়ে জানিতে ইচ্ছা করিয়াছেন, ইহা কেবল আমার প্রতি অনুগ্রহ ব্যতীত আর কিছুই নয়। যাহা হউক, শ্রবণ করুন। ধর্ম্ম ব্যতীত অর্থ ও কাম উৎপন্নই হইতে পারে না (কারণ অদৃষ্ট সকল জন্য বস্তুর কারণ, অর্থ ও

यथाकथञ्चिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते। बाधितोऽपि च अल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते (ठ)। तथापि पितामहस्य तिलोत्तमा-

प्रसूतेः समुत्पादस्य हेतुः कारणं, निरभिसन्धानमेव प्रवर्त्तितेन धर्म्मेण वर्त्तमानदुरितध्वंसपुरःसरं मुक्तिरूपपरमपुरुषार्थफलकत्वादिति भावः। आत्मनः स्वस्य समाधानमात्रेण समाधिविधिना, चित्तवृत्तिनिरोधादिना प्रकारेण, साध्यः निर्व्वर्त्तनीयः, सः धर्म्मः अर्थकामवत् अर्थकामाविव बाह्यसाधनेषु बहिःस्थितविषयेषु न अति अत्यन्तं आयतते अधीनतां गच्छति, तथाहि धर्म्मः अन्तःकरणस्य शुभया वृत्त्या प्रयुक्त एव सम्पत्तुमर्हति न तु स्रक्चन्दनादिबाह्यवस्तूपभोगादिना। तत्त्वदर्शनेन ब्रह्मविज्ञानजननेन उपबृंहितः सम्यक् युक्तः यथाकथञ्चित् येन केनापि रूपेण अनुष्ठीयमानाभ्यां आचरणविषयीकृताभ्याम् अर्थकामाभ्यां कर्त्तृभ्यां न बाध्यते प्रतिबध्यते। तथाहि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इति श्रवणात् तत्त्वदर्शनकाले सर्व्वकर्म्मादीनां विलयने बाधनाभाव इति सामञ्जस्यम्। ननु "तस्मिन् दृष्टे परावरे" इत्यत्र अतीते क्तप्रत्ययान्तोत्तरं भावप्रत्ययस्य अतीतकालवृत्तिदर्शनविषयत्वाश्रयत्वसमकालीनार्थकतया तत्त्वदर्शनस्य च हृदयग्रन्थिभेदादिकं प्रति कारणत्वप्रतीत्या तत्त्वदर्शनकाले नियतपूर्व्ववर्त्तित्वं न घटते इति कथं प्रकृतनिष्पत्तिरित्यत आह—बाधितोऽपीत्यादि। यद्यपि सः धर्म्मः तदानीं बाधितः विघ्नितप्रसरः अर्थकामाभ्यामिति शेषः, तथापि अल्पेन लघुना आयासेन परिश्रमेण प्रतिसमाहितः प्रतिहतबाधः सन् तमपि दोषं बाधनालक्षणं

काম জন্য পদার্থ।) কিন্তু ধর্ম্ম—অর্থ ও কাম অপেক্ষা না করিয়াই নিবৃত্তি-সুখের উৎপত্তিসাধন করিতে পারে এবং আত্মার সমাধিক্রমে সিদ্ধ হয়। অর্থ ও কাম যেমন বাহ্য বস্তুর অধীন, ধর্ম্ম সেরূপ বাহ্যবস্তুর অধীন নহে। ধর্ম্ম তত্ত্বজ্ঞানোপধায়ক হইলে অর্থ ও কাম অনুষ্ঠান করিলেও তাহার বাধা

भिलाषः भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणम्, पद्मनाभस्य षोड़शसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्य्यपि प्रणय-प्रवृत्तिः, शचीपतेरहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम्, अंशुमालिनो वड़वालङ्घनम्, अनिलस्य केसरिकलत्रसमागमः, वृहस्पतेरुतथ्यस्य भार्य्याभिसरणं, पराशरस्य दासकन्यादूषणं,

निर्हृत्य अपसार्य्य अनल्पाय अधिकाय श्रेयसे मङ्गलाय कल्पते, तथाहि धर्म्मस्य सातिशयबाधा अर्थकामाभ्यां तदानीं कर्त्तुं न शक्यते, इति धर्म्मस्य उत्कर्षः।

(ख) पितामहस्य ब्रह्मणः तिलोत्तमायाः तदाख्यायाः सुराङ्गनायाः अभिलाषः कामना। पितामहस्य इत्यनेन वार्द्धक्यं प्रतिपाद्य कामभावनायोग्यत्वं प्रतिपाद्यते। भवानीपतेः पतिव्रताकुलशिरोमणेः सकलनारीकुलललामभूतायाः भर्त्तुः महादेवस्यापि इति भवानीपतिशब्देन तन्निर्द्देशतात्पर्य्यम्। अत्र यद्यपि भवानीपतिशब्दो भवान्याः पत्य-न्तरप्रतीतिकारितया विरुद्धमतिकारिताख्यं दोषम् आवहेत, तथापि तादृशविशिष्टार्थ-प्रतिपत्तये तदुपादानात् न तस्य प्रकृते दूषकता, तादृशतात्पर्य्यगौरवेण दोषस्य विलीन-पथाश्रयणात्। मुनिपत्नीसहस्राणां बहुमुनिवनितानां सन्दूषणं सकाममनुसरणम्, पद्मनाभस्य महनीयप्रभावस्य नारायणस्य षोड़शसहस्राणां तत्संख्यकानाम् अन्तःपुराणाम् अन्तःपुरेषु वा विहारः षोड़शसहस्रगोपरमणीषु रतिसाधनम्। प्रजा-पतेः विधातुः स्वदुहितरि आत्मनः कन्यायाः प्रणयप्रवृत्तिः रमणाभिलाषः। शशाङ्कस्य चन्द्रस्य गुरुतल्पगमनं गुरुपत्नीसमास्कन्दनं, "तल्पं शय्याट्टदारेषु" इत्यमरः। अंशुमालिनः सूर्य्यस्य वड़वाया अश्वपत्न्या लङ्घनं रमणाभिलाषेण आक्रमणम्, अनिलस्य

জন্মে না। বাধা অল্পমাত্র জন্মিলেও অল্প আয়াসেই তাহার প্রতীকার হয় এবং দোষের প্রতিকার করিয়া অতিরিক্ত শ্রেয়ঃসাধনে সমর্থ হইয়া থাকে। (ড—ঢ)

অতিবৃদ্ধ ব্রহ্মার তিলোত্তমার প্রতি অনুরাগ, মহাদেবের সহস্র

पाराशर्य्यस्य भ्रातृदारसङ्गतिः, अत्रेर्मृगीसमागम इति। अमराणाञ्च तेषु तेषु कार्य्येषु असुरविप्रलम्भनानि ज्ञानबलान्न धर्म्मपीड़ामावहन्ति। धर्म्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते। तन्मन्ये, नार्थकामौ धर्म्मस्य शततमीमपि कलां स्पृशत" इति (ग)। श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्य-

प्रभञ्जनस्य केसरिकलत्रे केसरिनामकवानरस्य पत्न्यां समागमः सम्पर्कः बृहस्पतेः देवगुरोः उतथ्यस्य तन्नामकस्य भ्रातुः भार्य्यायाः अभिसरणम् अभिलाषेण आक्रमणम्, पराशरस्य ऋषेः दासकन्यायाः धीवरदुहितुः मत्स्यगन्धाया दूषणं बलात्कारः, पाराशर्य्यस्य व्यासस्य भ्रातृदारेषु विचित्रवीर्य्यभार्य्यायां सङ्गतिः समागमः, अत्रेः तदाख्यस्य ऋषेः मृगीसमागमः हरिणीसङ्गमः इति उक्तवस्तूनीत्यर्थः, पापसाधनयोग्यानि अपीत्यर्थः। प्रागुक्ताः सर्व्वे कामदोषा इदानीम् अर्थदोषा दर्श्यन्ते तैश्च धर्म्मकामाभिभवः प्रतिपाद्यते। अमराणां देवानां तेषु तेषु प्रसिद्धेषु कार्य्येषु समुद्रमन्थनादिव्यापारेषु असुराणां विमातृसूतानां देवद्वेषिणां विप्रलम्भणानि प्रतारणानि अमृतविभागाद्यवसरे इति शेषः। ज्ञानबलात् प्रकृष्टज्ञानमहिम्ना न धर्म्मपीड़ां धर्म्मस्य उपघातम् आवहन्ति जनयन्ति, तदुत्थपापैः न ते ते समाक्रम्यन्ते इति भावः। धर्म्मेण पूते जनितपावित्र्ये मनसि नभसि आकाशे इव रजः धूलिः राजसिकभावश्च जातु कदापि न अनुषज्यते संसृष्टं भवति। शततमीम् अपि कलां शतभागैकभागम् अपि न स्पृशति, धर्म्मस्य अर्थकामापेक्षया शतांशैः प्रकर्ष इति भावः। रज इत्यत्र श्लेषात् नभसीवेति श्लेषानुप्राणिता उपमा।

মুনিপত্নীর প্রতি কামাভিলায, নারায়ণের ষোড়শসহস্র নারীসহ বিহার, প্রজাপতির নিজ দুহিতার প্রতি প্রণয়, ইন্দ্রের গুরুপত্নী অহল্যাভিগমন, শশাঙ্কদেবের গুরুপত্নী তারার প্রতি রতি, সূর্য্যের অশ্বীগমন, বায়ুর কেসরি-

धात्—"अयि विलासिनि! साधु पश्यसि! न धर्म्मस्तत्त्व-दर्शिनां विषयोपभोगेणोपरुध्यत" इति। किन्तु जन्मनः प्रभृत्यथ कामवार्त्तानभिज्ञा वयम्। ज्ञेयौ चेमौ किंरूपौ किंपरि-वारौ किंफलौ चे"ति (त)। सा त्ववादीत्—"अर्थ स्तावदर्जन-

(त) एतत् उक्तरूपं वस्तु धर्म्मस्य सयुक्तिकं प्रकर्षव्यवस्थापनप्रकारमित्यर्थः। श्रुत्वा ऋषिः मरीचिः उदीर्णा वृद्धिं गता रागवृत्तिः अनुरागवृत्तिः यस्य तथाभूतः, जलस्रोतो यथा प्रवहत् बाधाप्राप्तं महावेगताम् आपद्यते तथैव कामप्रतिबन्धकभाव-समवधानेन भूयोवृद्धिंनराग इति भावः। अथवा धर्म्मस्य अर्थकामाप्रतिबध्यताप्रस्तावेन प्रकृते प्रवर्त्तनादिति अभ्यधात् अकथयत् वक्ष्यमाणमिति शेषः। साधु सम्यक् पश्यसि जानासि दृशेः ज्ञानसामान्यवचनत्वात्। तत्त्वदर्शिनां मुक्तिपथे स्थितानां तत्त्वविदिना-मित्यर्थः। अत्रापि पूर्व्ववत् दृशिर्ज्ञानसामान्यवचनः। धर्म्मः विषयोपभोगेन अर्थकाम-सेवया न उपरुध्यते बाध्यते, अर्थकामयोः वार्त्तासु व्यापारेषु कथामात्रेषु वा अनभिज्ञाः अपारदर्शिनः, अर्थकामयोः व्यवहारोपायं न जानीम इति भावः। इमौ अर्थकामौ किंरूपौ किम्प्रकारौ किंपरिवारौ कीदृशाङ्गयुक्तौ किंफलौ किंप्रयोजनकौ च, तथाहि अनयोः किं स्वरूपं केन केन अङ्गविधिना इमौ व्यवहार्य्यौ किञ्च फलमेतद्-व्यवहारेण लभ्यते इति भावः।

নামক বানরের কলত্রে রতিসাধন, বৃহস্পতির ভ্রাতা উতথ্যের ভার্য্যাভিগমন, পরাশরের ধীবরকন্যা মৎস্যগন্ধাব্যবহার, ব্যাসের ভ্রাতৃপত্নীসমাগম, অত্রির মৃগীগমন। অমরবৃন্দেরও বহুকার্য্যে অসুরপ্রবঞ্চনা প্রভৃতি অন্যায্য হইলেও উহা ধর্ম্মের অবনতিসম্পাদন করে নাই। আকাশে যেমন ধূলি সংসক্ত হয় না, সেইরূপ ধর্ম্মপূত চিত্তে রাজোভাব সংসক্ত হইতে পারে না। অতএব আমার মনে হয় যে, অর্থ এবং কাম ধর্ম্ম অপেক্ষা শতগুণে অপকৃষ্ট। ইহা শুনিয়া ঋষির চিত্তে অনুরাগবৃত্তি প্রবল হইয়া

वर्द्धन-रक्षणात्मकः कृषिपाशुपाल्य-वाणिज्य-सन्धि-विग्रहादिपरिवारस्तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः। परिवारस्त्वस्य याव-

(थ) सा काममञ्जरी, अवादीत् वक्ष्यमाणमिति शेषः। प्रथमतः अर्थस्य स्वरूपप्रश्नमुपक्रम्य उत्तरयति—अर्थ इत्यादिना। अर्ज्जनम् आसादनं वर्द्धनं व्यवहारेण वृद्धिप्रापणं रक्षणं तस्करादितः परिपालनम् एतानि आत्मानः स्वभावाः यस्य तथाभूतः, तथाहि यदर्ज्ज्यते अर्ज्जनानन्तरं वर्द्ध्यते परिपाल्यते च तद्धनमेव अर्थशब्दवाच्यमित्यर्थः। अथ परिवारप्रश्नस्योत्तरमाह—कृषीत्यादिना, कृषिः कर्षणव्यापारः, पाशुपाल्यं पशुपालनक्रिया, वाणिज्यं व्यवसायः, सन्धिः विरोधोपस्थितौ स्वपक्षावसादसम्भावनायां मैत्रस्थापनम्, विग्रहः स्वपक्षस्य जयसम्भावनायां विरोधसाधनम्, एत एव आदयः येषां तथाभूताः परिवाराः अङ्गवन्धाः यस्य, तथाहि एतैरेव साधितैरर्थोपस्थानम् इति भावः। तीर्थेषु अध्वरसत्त्रेत्वादिषु प्रतिपादनं सम्प्रदानमेव फलं यस्य तथाभूतः, अर्थस्य सत्पात्रादिषु वितरणमेव प्रकृष्टं फलमित्यर्थः। "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे च" इत्यादि कोषः। अर्थस्य स्वरूपादिकं प्रतिपाद्य कामस्य तत् प्रतिपादयति—कामस्तु इत्यादिना। विषयेषु स्रक्चन्दनादिविलासोपकरणेषु अतिसक्ते सुतराम् अनुरक्ते चेतसी मानसे तयोः ययोः स्त्री च पुमांश्च तयोः निपातनात् साधु। निरतिशयम् अतिमात्रं सुखं यस्मात् तथाभूतः स्पर्शविशेषः

উঠিল এবং তিনি বলিলেন,—বিলাসিনি! তুমি ভালই বিবেচনা করিয়াছ, তত্ত্বদর্শী ব্যক্তিদিগের বিষয়োপভোগে ধর্ম্মের কোনও বাধা জন্মে না। কিন্তু আমি জন্ম হইতে এ পর্য্যন্ত অর্থ ও কাম বিষয়ে কিছুই জানি না। ইহা কিরূপ এবং ইহার অঙ্গ কি ও ফল কি, ইহা অবশ্যই জানা উচিত। (ণ—ত)

কামমঞ্জরী বলিল—যে বস্তুর অর্জ্জন, বর্দ্ধন ও রক্ষণ আছে, উহাই

दिह रम्यमुज्ज्वलञ्च वस्तु। फलं पुनः परमाह्लादनं परस्पर-विमर्द्दजन्म स्मर्य्यमाणमधुरम्, उदीरिताभिमानमनुत्तमं सुख-मपरोक्षं स्वसंवेद्यमेव (थ)। तस्यैव कृते विशिष्टस्थानवर्त्तिनः

सम्पर्कभेदः। ननु कामी हि अभिलाषविशेषे प्रसिद्धः तत् कथं तस्य स्पर्शविशेषत्व-मलीकं व्यवस्थाप्यते इति चेदत्र नव्याः, निरतिशयं सुखं यस्मात् तादृशः स्पर्श-विशेषः सम्पर्कभेदो यस्य, यो हि हृदये जातः परमां प्रीतिम् उपहरति तादृशा-भिलाषविशेष एव काम इति कामलक्षणम्, अथवा निरतिशयसुखं स्पर्शं विशेषयति उद्भावयति यः तथाभूतः मनसि कामसम्पत्तौ कामिजनसंसर्गे रतिरुत्पद्यते सैव रतिः कामपदवाच्या इति भावः। अस्य परिवारं निर्वाचयति—अस्य कामस्य परिवारः अङ्गानि, उपाया इत्यर्थः, इह अस्मिन् भुवने यावत् समग्रमेव रम्यं मनोज्ञम् उज्ज्वलं चित्रञ्च वस्तु, रम्योज्ज्वलवस्तुदर्शनात् कामस्य उद्भवात्। तथाच शाकुन्तले "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्" इत्यादि। फलम् अस्य कामस्य जन्यं वस्तु परस्परविमर्द्दात् अन्योन्यस्फालनात् जन्म यस्य तथाभूतं स्मर्य्यमाणं स्मृति-विषयतां गतं सदपि मधुरम् उपलभ्यमानमाधुर्य्यं परमाह्लादनं विलक्षणानन्दनम्। उदीरितः उद्भावितः अभिमानः अहं प्रकृष्टः सुखी इत्याकारः अहङ्कारः येन तथाभूतम् अनुत्तमम् अतिशयप्रकृष्टम्, अपरोक्षं परोक्षभावमुक्तं स्वेन आत्मनैव संवेद्यं न तु परेण तस्य स्वीयमनोजत्वात्, सुखं सुखरूपम् इत्यर्थः। तथाहि तेन कामेन अलौकिकं किमपि सुखवाच्यं वस्तु अनुभूयते इति भावः।

---

অর্থ-পদে বুঝা যায়, ইহার অঙ্গ কৃষি পশুপালন বাণিজ্য সন্ধি বিগ্রহ প্রভৃতি। ইহার ফল যথাযোগ্য পাত্রে বিনিয়োগ। কাম—বিষয়ে অত্যন্ত আসক্তচিত্ত স্ত্রী ও পুরুষের নিরতিশয়ানন্দজনক স্পর্শবিশেষ। সমস্ত রম্য ও উজ্জ্বল বস্তু ইহার অঙ্গ, ইহার ফল পরস্পর আলিঙ্গনাদিজন্য পরম-আহ্লাদপ্রদ; স্মরণেও মাধুর্য্যময়, অহঙ্কারের উদ্দীপক, উৎকৃষ্টতম স্বসংবেদ্য

कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि समाचरन्तीति। निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत् (द)। सा सुदूरं मूढ़ात्मानञ्च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत्। अभूच्च घोषणा, "श्वः कामोत्सवः" इति। उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालम् आरब्धकामिजनवृत्तं निवृत्तस्ववृत्ताभिलाषं क्षण-

(द) तस्यैव उक्तरूपस्वरूपपरिवारफलयुक्तस्य कामस्य कृते निमित्तम्। अथवा तस्य कामफलभूतस्य अनुत्तमसुखस्य कृते इति। विशिष्टस्थानेषु पुण्यतीर्थेषु वर्त्तन्ते ये ते, कष्टानि अतिकष्टजनकानि तपांसि तपःक्रियाः समाचरन्तीति परेणान्वयः। महान्ति प्रचुराणि दानानि विधिपूर्व्वकं पात्रे धनादिप्रतिपादनानि, दारुणानि अतिभयङ्कराणि, युद्धानि, भीमानि भयङ्कराणि, "भीमादयोऽपादाने" इति सूत्रम्। एतत् उक्तं काममञ्जरीवचनं निशम्य श्रुत्वा, नियतेः अवश्यम्भाविनो नियमस्य बलात् प्रभावात्, सर्वत्र नुशब्दो वितर्के। तस्याः काममञ्जर्य्याः पाटवात् लोकवशीकरणचातुर्य्यात् नु, सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः; स्वस्य बुद्धेः विवेकस्य मान्द्यात् शैथिल्यात् काममञ्जरीदर्शनतः प्रविलुप्तप्रकृष्टविवेकत्वादित्यर्थः। स्वस्य तपस्विनः नियमं तपस्विजनोचितब्रह्मचर्य्यनियमादिकम् अनादृत्य लघुमेव मत्वा तद्गौरवमतिक्रम्य इत्यर्थः। तस्यां काममञ्जर्य्याम्, असौ मरीचिः, प्रासजत् रतिमान् जातः।

(ध) मूढ़ः मोहाक्रान्तः आत्मा स्वभावः यस्य तं कामविकारग्रस्तं, विवेकहीनमित्यर्थः। तं मरीचिं प्रवहणेन शकटेन सुदूरम् अतिदूरं नीत्वा। प्रवहणेन

---

অপ্রত্যক্ষ সুখবিশেষ। জনসমূহ সেই সুখের জন্যই পুণ্যতীর্থ প্রভৃতিতে কষ্টকর তপস্যা, প্রশস্ত দানক্রিয়া এবং দারুণ যুদ্ধ ও ভয়ঙ্কর সমুদ্রলঙ্ঘনাদি ক্রিয়া করিয়া থাকে। এই কথা শুনিয়া মরীচি নিয়তির প্রভাবে অথবা

मात्रे गतेऽपि तया विना दूयमानचित्तं तमृषिमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजन-शतपरिवृतस्य राज्ञः सन्निधौ समासदत्। तत्र स्मितमुखेन तेन "भद्रे! भगवता सह निषीद" इत्यादिष्टा सविभ्रमकृत-प्रणामा सस्मितं न्यषीदत् (घ)। तत्र काचिदुत्थाय बद्धाञ्जलि-

स्त्रीजनवाहनयोग्येन रथेन इति केचित्, "कर्णीरथः प्रवहण" मित्यमरः। पुरं नगरम्, उदारशोभया प्रशस्तशोभाशालिन्या, राजवीथ्या राजमार्गेण। घोषणा प्रचारः, श्वः आगामिदिवसे, कामोत्सवः मदनपूजादिमहोत्सवः भविष्यतीति शेषः। उत्तरेद्युः परदिने, निपातनात् साधुः। प्राक् स्नातं ततः अनुलिप्तं चन्दनादि-चर्च्चिताङ्गम् आरचिता परिहिता मञ्जुमाला शोभनं माल्यं येन तम् एष च विलासि-जनोपचारः, आरब्धं प्रक्रान्तं कामिजनानां विलासिजनानां वृत्तं व्यवहारो येन तं कामिजनोचितपरिच्छदादिधारिणम् निवृत्तः उपरतः स्वस्य वृत्ते तापसजनो-चितव्यापारे अभिलाषः आकाङ्क्षापि यस्य तथाभूतम् तपोव्यापारादिकं चित्तेऽपि अकुर्वाणम् इत्यर्थः। क्षणमात्रे अतिसूक्ष्मतमे काले गते अतीते, तया काममञ्जर्य्या विना दूयमानं परितप्यमानं चित्तं यस्य तथाभूतम्, क्षणमपि तस्या अदर्शन-मसहिष्णुम् इत्यर्थः। तम् ऋषिं मरीचिम्, ऋद्धिमता सुशोभितेन, समासदत् उप-गता बभूव। स्मितं स्मितयुक्तं मुखं यस्य तथाभूतेन, मुखे शयनकर्त्तृत्वाभावे-ऽपि उपचारात् कर्त्तृत्वारोपात् कर्त्तरि ष्मिङः क्तप्रत्ययः। भगवता ऐश्वर्य्यशालिना मरीचिना सह निषीद उपविश। सविभ्रमं सविलासं कृतः प्रणामः यया तथाभूता, न्यषीदत् उपविष्टा बभूव।

কামমঞ্জরীর কৌশলে কিংবা স্বীয় বুদ্ধির মান্দ্যবশতঃ নিজ নিয়ম বিসর্জ্জন করিয়া তাহার প্রতি আসক্ত হইলেন। (থ-দ)

কামমঞ্জরী মুগ্ধচিত্ত মুনিকে স্ত্রীজনযোগ্য রথসাহায্যে বহুদূরবর্ত্তী

दुत्तमाङ्गना "देव ! जितानयाहं, तद्दास्यमद्यप्रभृत्यभ्युपेतं मया" इति प्रभुं प्राणंसीत्। विस्मयमूलश्च कोलाहलो लोकस्योदजिहीत। हृष्टेन च राज्ञा महार्हैरलङ्कारैर्महता च परिवर्हेणानुगृह्य विसृष्टा सा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत "भगवन्! अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थ इदानीमनुष्ठेयः" इति (न)। स तु रागादशनिहत इवोद्भ्राम्याब्रवीत्—"प्रिये !

(न) तत्र तासु युवतिषु मध्ये काचित् उत्तमाङ्गना उत्कृष्टा नारी, बद्धाञ्जलिः कृताञ्जलिः सती। प्राणंसीदिति परेणान्वयः, अनया काममञ्जर्या अहं जिता पराभूता। तत् तस्मात् इतः दास्यं दासीभावः, अभ्युपेतम्, इति उक्त्वा प्रभुं राजानं प्राणंसीत् प्रणनाम। लोकस्य तत्रत्यजनसमुदायस्य विस्मयः आश्चर्यरस एव मूलं कारणं यस्य तथाभूतः कोलाहलः आनन्दध्वनिः उदजिहीत उद्गतो बभूव। हृष्टेन अशक्यसाधनजन्यहर्षसम्वलितेन, महार्हैः महामूल्यैः। परिवर्हेण परिच्छदेन अनुगृह्य प्रसाद्य, वारमुख्याभिः प्रशस्तवारनारीभिः, पौरमुख्यैः प्रधानैः पौरवर्गैः, प्रशस्यमाना प्रशंसावाक्यैरभिनन्द्यमाना। अयम् अञ्जलिः त्वत्प्रसादनाय रचितो मया इति शेषः। अयं मल्लक्षणो दासजनः, अनुगृहीतः। स्वार्थः स्वीयप्रयोजनं तपस्यादिरूपम् अनुष्ठेयः कर्त्तव्यः, न तु मदनुगमनरूपं कर्मेति भावः।

প্রশস্ত শোভাসম্পন্ন রাজপথ দ্বারা নিজ ভবনে লইয়া গেল এবং চারিদিকে ঘোষণা হইল যে, কল্য কামোৎসব হইবে। পরদিন মরীচি স্নান করিয়া স্বগাত্রে অনুলেপন মাখিলেন, সুন্দর মাল্য পরিধান করিলেন, এবং স্বীয় কর্ত্তব্যকার্য্য হইতে চিত্ত অপনীত করিয়া কামিজনের যাবতীয় কর্ত্তব্যসম্পাদনে উদ্যোগী হইলেন। তৎকালে তিনি কামমঞ্জরীর ক্ষণকাল অদর্শনেও দুঃখ অনুভব করিতে লাগিলেন। এই অবস্থায় শোভাসমৃদ্ধি-

किमेतत्, कुत इदमौदासीन्यम्, क्व गतस्तव मय्यसाधारणोऽनुरागः।" अथ सा सस्मितमवादीत् [महर्षे] "भगवन्! ययाऽद्य राजकुले मत्तः पराजयोऽभ्युपेतः, तस्याश्च मम च कस्मिंश्चित् सङ्घर्षे "मरीचिमावर्जितवतीव श्लाघसे" इति तयाहमधिक्षिप्ता, दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्त्तिषि सिद्धार्था चास्मि त्वत्प्रसादा"दिति (प)। स तया तथावधूतो

(प) स तु मरीचिर्नाम ऋषिः, रागात् अनुरागभङ्गात् काममञ्जर्य्यामिति शेषः। अशनिहतः काममञ्जर्य्या वाक्यात् वज्राहत इव इत्यर्थः। उद्भ्रम्य उद्भ्रान्तो भूत्वा। एतत् त्वया उच्यमानं किं, कुतः कस्मात् हेतोः इदं वर्त्तमानम् औदासीन्यं माध्यस्थ्यं, मयि अनुरागहीनत्वमित्यर्थः। असाधारणः असामान्यः सर्वविलक्षण इत्यर्थः। अशनिहत इवेत्युत्प्रेक्षा। यया उत्तमाङ्गनया इतः पूर्वमेव मम दास्यमङ्गीकृतवत्या इत्यर्थः। राजकुले राजभवने, मत्तः मम सकाशात् पराजयः अभ्युपेतः स्वीकृतः, सङ्घर्षे विवादे, मरीचिं तदाख्यं मुनिं त्वामित्यर्थः, आवर्ज्जितवतीव अधिकृतवतीव श्लाघसे गौरवं मन्यसे, तथाहि यदि मरीचिम् आयत्तीकर्त्तुम् अर्हसि रूपादिगौरवेण तदैव तवेदृशोऽभिमानः शोभते इति भावः। तया उत्तमाङ्गनया अधिक्षिप्ता तिरस्कृता दास्यपणबन्धेन यदि मरीचिं मोहयितुं समर्थयेथाः तदा त्वयं जनी दासीपदं ग्रहीष्यतीति शपथेन इत्यर्थः। अस्मिन् त्वद्वशीकरणरूपे अर्थे विषये प्रावर्त्तिषि प्रवृत्ता अभवम्, तव प्रसादात् अनुग्रहात् सिद्धार्था सफलकामा अस्मि, तव वशीकरणेन अस्या दास्यं कारितवत्यस्मि इत्यर्थः।

পূর্ণ রাজপথ দিয়া তাঁহাকে উৎসব স্থানে লইয়া যাইয়া কোন উপবনের প্রান্তে শত শত যুবতিবেষ্টিত রাজার সমীপে কামমঞ্জরী উপবেশন করিল। রাজা ঈষৎ হাস্য করিয়া বলিলেন—ভদ্রে! ভগবান্ মরীচির সহিত আসন পরিগ্রহ কর, পরে বিভ্রমসহকারে প্রণাম করিয়া সস্মিতভাবে কামমঞ্জরী

दुर्म्मतिः कृतानुशयः शून्यवन्न्यवर्त्तिष्ट। यस्त्वयैवं कृतस्तपस्वी, तमेव मां महाभाग! मन्यस्व स्व [शक्ति] निषिक्तं रागमुद्धृत्य तयैव बन्धक्या महद्वैराग्यमर्पितम्। अचिरादेव शकाय आत्मा त्वदर्थसाधनक्षमः कर्त्तुम्। अस्यामेव तावद् वसाङ्गपुर्य्यां चम्पायाम् इति (फ)। अथ तन्मनस्युत्तमःस्पर्शभियेवास्तं रविरगात्।

(फ) सः मरीचिः तया काममञ्जर्य्या तथा उक्तरूपेण अवधूतः प्रवञ्चितः दुर्म्मतिः सदोषान्तःकरणः मुनिरपि कामभावानुषक्तचेता इत्यर्थः। कृतानुशयः स्वेन कृतस्य असद्विषयस्य अनुशोचनया इत्यर्थः। शून्यवत् सर्वेण हृदयवस्तुना रिक्तीकृत इव इत्यर्थः। तस्याः काममञ्जर्य्या एव तदानीं सर्व्वहृदयाक्रमणात् तया अवधूतस्य तस्य हृदयस्य एकान्ततः शून्यत्वादिति भावः। न्यवर्त्तिष्ट तस्मात् स्थानात् निश्चक्राम। तया काममञ्जर्य्या यः तपस्वी मरीचिनामा मुनिः एवम् ईदृशः उक्तरूपः कृतः प्रतारितः, मामेव तं मुनिं मन्यस्व। स्वेन निषिक्तम् अर्पितं मयीति शेषः।

উপবেশন করিল। তত্রত্য একটী উৎকৃষ্টা রমণী উঠিয়া কৃতাঞ্জলিপুটে এই বলিয়া রাজাকে প্রণাম করিল যে, মহারাজ! কমমঞ্জরীর কাছে আমি পরাজিতা হইয়াছি, আজ হইতে আমি ইহার দাসীত্ব গ্রহণ করিলাম। তত্রত্য জনগণ বিস্ময়ে কোলাহল করিয়া উঠিল। রাজা অত্যন্ত হৃষ্ট হইয়া মহামূল্য অলঙ্কারে এবং প্রশস্ত পরিচ্ছদে কামমঞ্জরীকে পুরস্কৃত করিলেন, বারাঙ্গনা ও পুরবাসিবৃন্দ প্রত্যেকেই তাঁহার অসীম প্রশংসা করিতে লাগিল। তখন কামমঞ্জরী নিজ ভবনে না যাইয়াই সেই ঋষিকে বলিল,—ভগবন্! আপনার নিকট আমি কৃতাঞ্জলি হইতেছি, এই দাসী আপনার অনুগ্রহে কৃতার্থ হইয়াছে, সম্প্রতি স্বীয় মুনিজনোচিত কর্ত্তব্য সম্পাদন করুন। (ধ-ন)

মুনি অনুরাগাতিশয়বশতঃ ঐ কথা শুনিয়া বজ্রাহতবৎ উদ্‌ভ্রান্তভাবে

ऋषिमुक्तश्च रागः सन्ध्यात्वेनास्फुरत्। तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन्। अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य सन्ध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः

रागम् अनुरागम् उत्सृत्य प्रत्याहृत्य तया बन्धक्या वेश्यया काममञ्जर्य्या एव महत् अतिशयितं वैराग्यम् अर्पितं निहितं मयीति शेषः। तत्प्रेमप्रत्याख्यानेन पूर्व्वतोऽपि मम वैराग्यं प्रकर्षं प्राप्तमिति भावः। अर्थस्य अभिलषितस्य विषयस्य साधने सम्पादने क्षमः योग्यः। तथाहि योगादिप्रभावेण सत्वरमेव त्वदीयं कृत्यं निष्पादयेयमिति भावः। अस्यामेव अङ्गपुर्य्याम् अङ्गदेशान्तर्गतायां चम्पाख्यायां तदभिधानायां नगर्य्यां वस त्वमिति शेषः।

(ख) तस्य मुनेः मरीचेः मनसः अन्तःकरणात् च्युतं तदानीं विगलितं यत् तमः अज्ञानम् अन्धकारश्च तस्य स्पर्शात् सम्पर्कात् भिया शङ्कया इव रविः सूर्य्यः अस्तम् अगात् अवततार। अत्र रवेरस्तगमने तन्मनश्च्युततमःस्पर्शभीर्हेतुकत्वसम्भावनाया इवशब्देन व्यञ्जनात् वाच्या हेतूत्प्रेक्षा। मुक्तः परित्यक्तः तेनैव मुनिना इति शेषः। रागः काममञ्जरीं प्रति सुमहती आसक्तिः लौहित्यञ्च सन्ध्यात्वेन सायंकालत्वेन अस्फुरत् प्रचकाशे। सन्ध्यायां सूर्य्यः सत्वरम् अवततरन्निव प्रतिभाति

বলিলেন,—প্রিয়ে একি ? তুমি এরূপ উদাসীনা হইতেছ কেন ? আমার প্রতি তোমার অসাধারণ অনুরাগ কোথায় গেল ? তদনন্তর কামমঞ্জরী ঈষৎ হাসিয়া বলিল,—ভগবন্! আজ রাজভবনে আমার নিকট যে নারী পরাজয়প্রাপ্ত হইয়াছে, তাহার এবং আমার একদা বিবাদ সময়ে সে আমাকে বলিয়াছিল যে, তুমি যেন, মরীচি মুনিকে বশীভূত করিয়াছ এইরূপ আত্মশ্লাঘা করিতেছ, তৎপরে পরাজয়ে দাস্যের পণ রাখিয়া সেই কার্য্যে (মরীচির বশ্যতাসম্পাদন কার্য্যে) প্রবৃত্ত হইলাম, তোমার প্রসাদে আমার উক্ত কার্য্যে প্রবৃত্তি সফল হইয়াছে। সেই দুর্ব্বুদ্ধি তাপস কাম-

प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्च्चिषि तं नमस्कृत्य नगरायोदचलम् (ब)। अदर्शञ्च

गगनप्रान्तञ्च सुरक्त इवेति तर्थोत्प्रेक्षा, तमःशब्देन अन्धकारस्य रागपदेन लौहित्यस्यापि प्रत्यायनात् श्लेषश्च तुभयोः सङ्करः। तमोरागयोरन्धकारलौहित्याभ्यां भेदसत्त्वेऽपि श्लेषमूलकाभेदाध्यवसायात् अतिशयोक्तिभेदश्च, द्वितीयवाक्ये गम्या क्रियोत्प्रेक्षा च। तस्य मुनेः कथया वृत्तान्तेन दत्तम् अर्पितं वैराग्यं येषु तानि, समकुचन् सङ्कुचितान्यभवन्। अनुमतम् अङ्गीकृतं मुनेः तस्य तापसस्य शासनम् आदेशो येन तथाभूतः, अमुना मुनिना सह एव, सन्ध्यां पश्चिमां सन्ध्याम् उपास्य सायंकृत्यं सम्पाद्य इत्यर्थः। अनुरूपाभिः योग्याभिः कथाभिः तं मुनिम् अनुशय्य, अत्र अनुपूर्व्वः शीधातुः सकर्म्मकतया व्यवहृतः, अर्थविशेषे धातोरकर्म्मकस्यापि सकर्म्मकतायाः अदुष्टत्वात्। अनुशय्य तेन सहैव शयित्वा इत्यर्थः। नीता अतिवाहिता रात्रिः येन तथाभूतः उदयप्रस्थात् उदयाचलस्थितात् दावात् दावानलात् ईषत् न्यूनः तस्मिन् "ईषदसमाप्तौ कल्पदेश्यदेशीयाः" इति ईषदसमाप्त्यर्थे कल्पप्रत्ययः। कल्पद्रुमस्य कल्पपादपस्य किसलयान् अवधीरयति लौहित्येन तिरस्करोति यः तस्मिन् कल्पवृक्षजातलोहिततमनवपल्लवगुच्छादपि अतिलोहित इत्यर्थः। अरुणार्च्चिषि अरुणकिरणे प्रत्युन्मिषति समुद्गच्छति सति, तं मुनिम्। नगराय उदचलं प्रस्थितवान्। गत्यर्थकर्म्मणि चतुर्थी।

মঞ্জরীর বঞ্চনায় অত্যন্ত অনুতপ্ত হইয়া শূন্য হৃদয়ে ফিরিয়া গেল। সেই কামমঞ্জরী যে তপস্বীর এইরূপ দুর্দ্দশা উৎপন্ন করিয়াছিল, হে মহাভাগ! আমিই সেই তপস্বী, তাহার প্রতি আমি যে অনুরাগ অর্পণ করিয়াছিলাম, তাহা প্রত্যাখ্যান করিয়া সেই গণিকা আমার চিত্তে অসীম বৈরাগ্য উৎপাদন করিয়াছে, অচিরেই আমি আত্মাকে তোমার কার্য্যসাধনে সমর্থ করিতে পারিব। তুমি কিছুকাল অঙ্গদেশের রাজধানী এই চম্পানগরে অবস্থান কর। (প-ফ)

मार्गाभ्यासवर्त्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकषण्डे निषस्मस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमनभिरूपाणां कृपणवर्णं कमपि क्षपणकम्। उरसि चास्य शिथिलितमलनिचयान् मुखान्निपततोऽश्रुबिन्दूनलक्षयम्। अप्राक्षञ्चान्तिकोपविष्टः—"क्व तपः, क्व च रुदितम्। नचेद्रहस्यमिच्छामि श्रोतुं शोकहेतु"मिति। सोऽब्रवीत्—"सौम्य! श्रूयताम्।

(भ) मार्गाभ्यासवर्त्तिनः पथि सन्निकृष्टस्य। क्षपणकविहारस्य बौद्धोपासनास्थानस्य, "विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी। विविक्ते निर्ज्जने रक्ताशोकषण्डे रक्ताशोकतरुकुञ्जे, निषस्मम् आसीनम् अस्पृष्टः अगृहीतः समाधिः चित्तवृत्तिनिरोधः येन तथाभूतम् अनारब्धयोगम् आधिना मनःपीड़या क्षीणं कार्श्यं गतम्, अनभिरूपाणाम् असुन्दराणाम् अग्रगण्यम्, अविदुषां प्रधानं वा, आकारेण उपलक्ष्यमाणचातुर्य्यविरहितमिति वा। कृपणवर्णं दीनकान्तिं कमपि क्षपणकं बौद्धसन्न्यासिनम् अदर्शं दृष्टवान्, अस्य क्षपणकस्य, उरसि वक्षःस्थले च शिथिलताः प्रक्षालनेन विरलीकृताः मलनिचयाः रजःसमूहा यैः तथाभूतात् मुखात् नेत्रवच्छिन्नवदनात् निपततः प्रवहतः अश्रुबिन्दून् अलक्षयं दृष्टवान्। अन्तिके तस्य समीपे उपविष्टः सन् अप्राक्षं पृष्टवान् अहं वक्ष्यमाणमिति शेषः। क्वेत्यादि—तथाहि तपोरुदितयोरतिविप्रकृष्टदेशोचितावस्थानत्वात् त्वयि कथं विरुद्धमिदं द्वयं समाविष्टमिति ज्ञातुं महता कौतूहलेन आक्रान्तः अहमिति भावः। क्वद्वयसमा-

পরে সেই মরীচির চিত্তচ্যুত তমঃস্পর্শভয়েই যেন সূর্য্যদেব অস্তাচলে আশ্রয় লইলেন, ঋষিকর্ত্তৃক বিসর্জ্জিত রাগ যেন সন্ধ্যারূপে পরিণত হইল, তাঁহার বৃত্তান্তে বৈরাগ্যযুক্ত হইয়াই যেন কমলগুলি সঙ্কুচিত হইল। আমি মুনির আদেশ শিরোধার্য্য করিয়া মুনির সহিতই সন্ধ্যার উপাসনা করিলাম, এবং অনুরূপ কথোপকথনসহকারে তাঁহার সহিত শয়ন করিয়া

अहमस्यामेव चम्पयां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम। वैरूप्यात्तु मम 'विरूपक' इति प्रसिद्धिरासीत्। अन्यस्त्वत्र 'सुन्दरक' इति यथार्थनामा कला-[कल्याण] गुणैः समृद्धो वसुना नातिपुष्टोऽभवत्। तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्त्तैरुदपाद्यत (भ)। त एव कदाचिदावयोरुत्सवसमाजे स्वयमुत्-

वैशात् विषमालङ्कारः। रहस्यं गोपनीयं न चेत्, रोदनकारणस्य रहस्यत्वे तच्छ्रवणाभिलाषः अन्याय्य इति तदुपेक्षा। श्रेष्ठिनः वणिजः, ज्येष्ठसूनुः ज्येष्ठपुत्रः वैरूप्यात् कुत्सितत्वात् रूपगतप्रकर्षविरहादित्यर्थः। विरूपकः विगतं रूपं यस्य सः बहुव्रीहौ कप्रत्ययः, सुन्दरक इति यथार्थं स्ववाच्यस्य सौन्दर्य्यप्रतिपादकं सुन्दर एव सुन्दरक इति स्वार्थे कप्रत्ययव्युत्पत्त्या इति शेषः नाम यस्य तथाभूतः। वस्तुत एव सुन्दरकपदप्रतिपाद्यसौन्दर्य्यसम्पन्न इत्यर्थः कलागुणैः सङ्गीतादिप्रकृष्टकलाविद्याभिः समृद्धः युक्तः, वसुना सम्पदा नातिपुष्टः नातियुक्तः स्वल्पमात्रधनसम्पन्न इत्यर्थः। तस्य सुन्दरस्य मम च विरूपकस्य, वपुः तस्य सुन्दरं शरीरं, मम च कुत्सितं शरीरं,वसु तस्य स्वल्पं मम च बहुलं धनम् इति द्वयं निमित्तीकृत्य कारणरूपेण आश्रित्य, तथाहि विरूपकौ नितान्तकुत्सितौ न बहुधनेषु प्रयुज्यते, भवान् च सुन्दरकः न स्वल्पे धने इत्येवम् अपरतश्च विरुद्धपक्षमाश्रित्य इत्यर्थः। वैरोपजीविभिः पक्षद्वयस्य वैरे जाते पक्षसमर्थकतया संहत्य अर्थसंग्रहेण संसारनिर्व्वाहकैः पौरधूर्त्तैः धूर्त्ततमैः पुरवासिभिः। वैरं परस्परं शात्रवम् उदपाद्यत अजन्यत। मम वैरूप्येऽपि धनबाहुल्यं तस्य च स्वल्पधनत्वेऽपि सौन्दर्य्यम् इति द्वयं विरोधमूलमभवत् इति।

রাত্রি কাটাইয়া দিলাম। উদয়পর্ব্বতের সানুসমুথ দাবাগ্নিবৎ কল্পপাদপের কিসলয়তুল্য সূর্য্যদেব উদয়োন্মুখ হইলে, তাঁহাকে নমস্কার করিয়া নগরের দিকে চলিলাম। (ব)

**पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य "न वपुर्वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो हि यः स पुमान्। अतो युवतिललामभूता काममञ्जरी यं वा कामयते, स हरतु सुभगपताकाम्" इति व्यवस्थापयन्।**

(म) त एव पौरधूर्त्ता एव, उत्सवसमाजे उत्सवं कञ्चिदुद्दिश्य मिलिते जनसमाजे, अन्योन्यावमानस्य परस्परावमानस्य मूलं हेतुभूतम् अधिक्षेपस्य तिरस्कारस्य वचनव्यतिकरं वाक्यजातम् उपशमय्य शमयित्वा, यद्वा—सुन्दरकपक्षीया सुन्दरकं प्रति एवमजल्पन् यत् विरूपको भवन्तं दरिद्र इति निन्दति, मत्पक्षीयाश्च मां प्रति सुन्दरको भवन्तं कुत्सितरूप इति निन्दति इत्येवं वचनरचनं श्रावयित्वा इत्यर्थः; वपुः प्रकृष्टो देहः वसु सुप्रचुरं धनं वा प्रत्येकं न पुंस्त्वस्य पुरुषत्वस्य पुरुषप्रशस्तेः मूलं कारणं भवति इति शेषः। यः जनः प्रकृष्टया उत्तमया गणिकया वारवनितया प्रार्थ्यम् आकाङ्क्षणीयं यौवनं यस्य तथाभूतः, पुमान् प्रकृष्टपुरुषः अतः अस्मात् हेतोः। युवतिललामभूता तरुणीप्रधानभूता, सुभगस्य सौभाग्यशालिनः

যাইতে যাইতে পথের পার্শ্বে একটি বৌদ্ধাশ্রমের বহির্ভাগে নির্জ্জন রক্তাশোকবৃক্ষশ্রেণীর মধ্যে উপবিষ্ট সমাধিশূন্য মনোবেদনায় ক্ষীণদেহ অতিকুৎসিতাকার একটি ক্ষপণককে দেখিতে পাইলাম। তাহার বক্ষঃস্থলে মুখ হইতে চ্যুত অশ্রুবিন্দু পতিত হইয়া বক্ষঃস্থিত মলসমূহ আর্দ্র করিয়া দিতেছিল। তাহার সমীপে উপবিষ্ট হইয়া জিজ্ঞাসা করিলাম, "কোথায় তপস্যা আর কোথায়ই বা রোদন (তপস্বীর পক্ষে রোদন আশ্চর্য্যজনক)। যদি গোপনীয় না হয়, তবে তোমার শোকের কারণ কি, তাহা আমি জানিতে ইচ্ছা করি। সে বলিল,—ভদ্র! শ্রবণ কর, আমি এই চম্পানগরস্থ নিধিপালিতনামক শ্রেষ্ঠীর জ্যেষ্ঠপুত্র, আমার নাম বসুপালিত; আমি অত্যন্ত কুৎসিত বলিয়া আমাকে 'বিরূপক' নামে

अभ्युपेत्यावां प्राहिणुव तस्यै दूतान्। अहमेव किलामुष्याः स्मरोन्मादहेतुरासम्। आसीनयोरावयोर्मामिवोपगम्य नीलोत्पलमयमिवापाङ्गदामाङ्गे मम मुञ्चन्ती तं जनमपत्रपयाऽधोमुखं व्यधत्त (म) सुभगम्मन्येन [सुभगेन] च मया स्वधनस्य स्वगृहस्य

पुरुषस्य पताकां वैजयन्तीं विजयपट्टिकामित्यर्थः। हरतु बलात्कारेण एव गृह्णातु इत्यर्थः। इति एवंप्रकारं व्यवास्थापयन् निरवधारयन्। आवाम् अहं सुन्दरकश्च, अभ्युपेत्य तमेव प्रस्तावम् अङ्गीकृत्य, तस्यै काममञ्जर्य्यै। प्राहिणुव प्रेषितवन्तौ। अहमेव न तु सुन्दरक इतीवकारव्यवच्छेद्यम्। अमुष्याः काममञ्जर्य्याः स्मरोन्मादस्य कामजविकारस्य हेतुः कारणम् आसम् अभवम् किलेत्यलीके वेश्यानां प्रकृत्यानुरागाभावात् अर्थमात्रमुद्दिश्य प्रवृत्तेः। आवयोः मम सुन्दरकस्य च मध्ये नीलोत्पलमयं नीलकमलप्रस्तुतमिव अपाङ्गदाम, सकटाक्षदृष्टिधारां मुञ्चन्ती पातयन्ती तं जनं सुन्दरकम् अपत्रपया लज्जया अधोमुखं नताननं व्यधत्त कृतवती। गणिकाया मदन्तिकोपसर्पणकाम्यया मय्येव कटाक्षवर्षणात् स्वीयपराजयसम्भावनया स लज्जितः अधोमुखो जात इत्यर्थः।

সকলে সম্বোধন করিত। এই নগরে অপর এক ব্যক্তি সৌন্দর্য্যাতিশয়-নিবন্ধন সুন্দরক নামে খ্যাত হয়, সেই ব্যক্তি কলাবিদ্যায় অতি বিচক্ষণ; কিন্তু তাহার অধিক ধন ছিল না। উভয় পক্ষের বিবাদ যাহাদের উপজীবিকা, এরূপ কতিপয় ধূর্ত্ত পুরবাসী আমার ধন ও তাহার সৌন্দর্য্য আশ্রয় করিয়া একটা শত্রুতা জন্মাইয়া দিল। (ভ)

তাহারা একদিন উৎসব সভায় স্বকপোলকল্পিত পরস্পরের অপমানসূচক বাক্যসমূহ থামাইয়া দিয়া বলিল—"শারীরিক সৌন্দর্য্য বা ধনবত্তা পুরুষত্বের মূল নহে, কিন্তু যাহাকে উত্তম বারাঙ্গনা প্রার্থনা করিবে; সেই পুরুষ; অতএব যুবতিশ্রেষ্ঠ কামমঞ্জরী যাহাকে কামনা

स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरी कृता। कृतश्चाह-मनया मलमल्लकशेषः। हृतसर्वस्वतया चापवाहितः, प्रपद्य लोकोपहासलक्ष्यताम्, अक्षमश्च सोढुं, धिक्कृतानि पौरवृद्धानाम्, इह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एष वेशो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् (य)।

(य) सुभगम् आत्मानं मन्यते यः तेन आत्मानम् अतिसौभाग्यशालिनं जानता इत्यर्थः। सैव काममञ्जर्य्येव ईश्वरी स्वामिनी कृता। सर्व्वमेव वस्तु तस्या अधीनताम् अनयम् इति भावः। अनया काममञ्जर्य्या, मलमल्लकं कौपीनमात्रं शेषम् अवशिष्टं यस्य तथाभूतः, "आच्छादनं सापिधानं कौपीनं मलमल्लक" मिति वैजयन्ती। तथाहि सा क्रमेण सर्व्वं मे धनमात्मसात् कृतवती अहञ्च कौपीनमात्रसम्बलः अतिदरिद्रो जात इति भावः। हृतं सर्व्वस्वं यस्य तथाभूतस्य भावस्तया, समस्ताया एव मत्सम्पदस्तया ग्रहणेन दारिद्र्यादित्यर्थः अपवाहितः तया बहिष्कृतः लोकानाम् उपहासस्य लक्ष्यतां विषयतां प्रपद्य प्राप्य। पौरवृद्धानां पुरवासिनां प्रवयसां धिक्कृतानि, "अहोदुर्म्मतिः, यत् एकस्याः गणिकायाः कृते सर्व्वस्वं भ्रष्टं सर्व्वस्वशेषे च तयैव अपवाहितः, तत् धिक् ईदृशं वेश्यानुरागमस्य" इत्यादिरूपाणि। जैनायतने क्षपणकविहारे। उपदिष्टः बोधितः मोक्षस्य मुक्तः मार्गः उपायः यस्य सः। वेशात् वेश्यागृहात् "वेशो वेश्यासमाश्रय" इति कोशः। निर्गतानां बहिर्गतानाम्, अन्तर्भूतण्यर्थतया निर्गमितानामिति वा। एषः वेशः नग्नत्वरूपः सुकरः अनायासनिष्पाद्यः वेशान्तरस्य धननिष्पाद्यत्वात् एकान्ततो निःस्वस्य तत्संग्रहाय बहुलायासस्वीकारस्य अवश्यम्भावात् इति भावः। उदीर्णवैराग्यः, प्रवृद्धवैराग्यः, तदपि अवशिष्टं कौपीनमपि अजहाम् त्यक्तवान् नग्नतां स्वीकृतवानित्यर्थः।

করিবে, সেই ব্যক্তিই ভাগ্যবান্ বলিয়া প্রসিদ্ধ হইবে" আমরা দুইজনে সেই প্রস্তাবে স্বীকৃত হইয়া কামমঞ্জরীর নিকট দূত পাঠাইলাম। আমিই

अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्-पिपासादिदुःखः स्थानासनशयनभोजनेष्वपि द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवमृशम्। "अहमस्मि द्विजातिः अस्वधर्म्मा ममैष पाषण्डपथावतारः, श्रुतिविस्मृतिविहि-तेनैव वर्त्मना मम पूर्वजाः प्रावर्त्तन्त। मम तु मन्दभाग्यस्य

(२) प्रकीर्णाः परिव्याप्ताः मलपङ्काः मलकर्द्दमा यस्य सः तदारभ्य गात्रस्य असंस्करणादिति भावः। प्रबला अतिमहती केशलुञ्चनस्य कुन्तलसमुत्पाटनस्य व्यथा यस्य तथाभूतः क्षपणकानामेकान्ततो निष्केशशिरस्कतया औचित्यात् केशोत्पाटनं प्रयोजनीयमिति मन्तव्यम्। प्रकृष्टतमम् अतिप्रवृद्धं क्षुत्पिपासादिदुःखं यस्य तथाभूतम् तदानीं स्वीयभोज्यसंग्रहयोग्यस्यापि अर्थस्य अभावादिति भावः। स्थानं गतिनिवृत्तिः आसनम् एकत्र वसतिः। नवः नूतनः ग्रहः ग्रहणं यस्य तथाभूतः अचिरप्राप्तः द्विपः हस्तीव, उद्वेजितः अतिव्यथितः प्रत्यवामृशम् विविचितवान्। द्विप इवेत्युपमा, यन्त्रणाभिः वेदनाभिः ताड़नाभिश्च इत्यर्थद्वयबोधनात् श्लेषानुप्राणिता च। तथाहि तदानीं वैराग्यवशात् अवलम्बितेऽपि क्षपणकभावे न सर्व्वथा तन्नियमरक्षणादि-व्यतिकरे शान्तिं लब्धवानिति भावः। द्विजातिः "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा

---

কামমঞ্জরীর কামজনিত উন্মত্ততার হেতু হইলাম। আমরা দুইজন বসিয়া আছি, এই অবস্থায় কামমঞ্জরী তথায় আমার নিকট আসিয়া নীলোৎপল-দ্বয়ের ন্যায় অপাঙ্গদৃষ্টি আমার প্রতি নিক্ষেপ করিল, তাহাতে সেই প্রতিপক্ষ সুন্দরক লজ্জায় অধোমুখ হইয়া রহিল। আমি নিজেকে অতি সৌভাগ্যশালী মনে করিয়া ধন জন গৃহ দেহ ও জীবন সমস্তই তাহার অধীন করিয়া দিলাম। সেও আমার সমস্ত ধনরত্ন আত্মসাৎ করিয়া আমাকে কৌপীনমাত্রশেষ করিল এবং সর্ব্বস্ব অপহরণ করিয়া শেষে আমাকে তাড়াইয়া দিল। সকলেই আমাকে উপহাস করিতে লাগিল,

निन्द्यवेशममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवाद-श्रवणनैरन्तर्य्यात् प्रेत्यापि निरयफलम्। अफलं विप्रलम्भप्राय-मीदृशमिदमधर्म्मवर्त्म धर्म्मवत् समाचरणीयमासीत्" इति प्रत्याकलितस्वदुर्नयः पिण्डीषण्डं विविक्तमेतदासाद्यापर्य्याप्तमस्रु विमुञ्चामि" इति (र)। श्रुत्वा चैतदनुकम्पमानोऽब्रवं—भद्र !

द्विजातय" इत्यनुशासनात् वैश्यात्मको द्विज इत्यर्थः। पाषण्डानां वेदविरुद्धाचारिणां पन्था तस्मिन् अवतारः प्रवर्त्तनं, मम अस्वधर्म्मः स्वधर्म्मभिन्न इत्यर्थः। अतएव ममेदमनवलम्बनीयमिति भावः। श्रुतौ वेदे स्मृतौ मन्वादिधर्म्मशास्त्रे च विहितेन कर्त्तव्यतया विनिवेदितेन वर्त्मना पथा। पूर्व्वजाः पूर्व्वपुरुषाः प्रावर्त्तन्त, प्राचलन् निन्द्यः अपवादयोग्यः वेशः यत्र तत् तथाभूतं शरीरमिति विशेष्यपदमध्याहर्त्तव्यम्, अनल्पानाम् अधिकानां दुःखानाम् आयतनम् आश्रयस्थानम्, हिरण्यगर्भः ब्रह्मा, अपवादः निन्दा तच्छ्रवणस्य नैरन्तर्य्यात् अविरलत्वात् बौद्धनये देवतानिन्दायाः प्राचुर्य्येण वेद-विरोधिपथावतारेण सत्त्वात्। प्रेत्य मृत्युं प्राप्यापि निरयफलं नरकफलं भविष्यति इति शेषः। अफलं निष्फलं सत्फलशून्यम् इति यावत्। विप्रलम्भप्रायं प्रवञ्चनाबहुलम् ईदृशं मया अनुष्ठीयमानप्रकारम् अधर्म्मस्य दुरदृष्टस्य वर्त्म जननोपायं धर्म्मवत् धर्म्मजनकोपायवत् समाचरणीयम् अनुष्ठेयम्।

পৌরবৃদ্ধগণ ধিক্কার দিতে লাগিলেন, আমি তাহা সহ্য করিতে না পারিয়া, এই জৈনায়তনে আসিলাম। এক মুনি আমাকে মোক্ষের পথ উপদেশ দিলেন, পরে বেশ্যাবিতাড়িত ব্যক্তির ইহাই অনায়াসলভ্য বেশ ভাবিয়া সাতিশয় বৈরাগ্যবশতঃ কৌপীন পর্য্যন্তও পরিত্যাগ করিলাম। (ম-য)

পরে আবার আমার সমস্ত শরীরে মলপঙ্ক ব্যাপ্ত হইল, কেশচ্ছেদনের ব্যথা বাড়িয়া উঠিল, ক্ষুৎপিপাসায় অত্যন্ত কষ্ট পাইতে লাগিলাম, সদ্যো গৃহীত হস্তী যেমন অবস্থান উপবেশন শয়ন ভোজনবিষয়ে অত্যন্ত

समस्त कञ्चित् कालम्, अत्रैव निवस, निर्जेन द्रव्येनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये, सन्त्युपायास्तादृशाः।" इत्याश्वास्याभ्युत्थितोऽहं [अनूत्थितोऽहं] नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमिति अर्थानां नश्वरत्वञ्च प्रदर्श्य प्रकृतिस्थानमून् विधास्यन् कर्णीसुतप्रहिते पथि मतिमकरवम् (ल)। अनुप्र[पद्य]विश्य च द्यूतसभामत्तधूर्त्तैः

इति उक्तरूपेण प्रकल्पित: अनुध्यात: स्वस्य दुर्नय: दुष्कृतमार्ग: येन तथाभूत:। पिण्डीनाम् अशोकानां षण्डं कुञ्जम् "अशोक: पिण्डिका पिण्डी" इति वैजयन्ती। विविक्तं निर्ज्जनम्, आसाद्य आश्रित्य अपर्य्यासम् सुप्रचरम् अस्तु नेत्रासारं विमुञ्चामि प्रवाहयामि इति अब्रवीत् इति पूर्व्वेणान्वय:।

(ल) अनुकम्पमान:, दयान्वितचित्त:, अब्रवम् अकथयं वक्ष्यमाणं वच: अहमिति शेष:। द्रव्येन धनेन "हिरण्यं द्रविणं द्युम्नं" इत्यमर:। असावेव वेश्या काममञ्जरी नाम सैव वेशवनिता, यथा त्वां योजयिष्यति संयुक्तं करिष्यति, तानि त्वत्त: आहृतानि धनानि तथा तुभ्यं पुन: प्रदास्यति इत्यर्थ:। तथा यतिष्ये चेष्टां प्रवर्त्तयिष्ये, तादृशा: उक्तार्थसाधनयोग्या: उपाया: सन्ति, अतो न त्वं विशेषेण विषादं गच्छे: इति भाव:। इति उक्तरूपेण आश्वास्य तं क्षपणकवेशधरं

---

কষ্ট পায়, সেইরূপ আমিও নূতন আচার অবলম্বনে কষ্ট পাইতে লাগিলাম এবং ভাবিলাম,—আমি ব্রাহ্মণ, আমার এই অন্যায্য পথে প্রবৃত্ত হওয়া স্বধর্ম্ম নহে, বেদ ও স্মৃতিবিহিত কার্য্যেই আমার পূর্ব্বপুরুষগণ প্রবৃত্ত ছিলেন, আমি মন্দভাগ্য, অত্যন্ত দুঃখের স্থান নিন্দনীয় এই বেশ পরিগ্রহ করিয়া নিরন্তর হরিহর ও হিরণ্যগর্ভ প্রভৃতি দেবতাগণের নিন্দা শ্রবণ করিতেছি। আমার মৃত্যুর পরও নরকভোগ নিশ্চিত।

समगंसि। तेषाञ्च पञ्चविंशतिप्रकारासु द्यूताश्रयासु कलासु कौशलम्, अक्षभ्रमि [ भूमि ] हस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्म्माणि, तन्मूलानि सावलेपान्यधिक्षेपवचनानि, जीवितनिरपेक्षाणि संरम्भविचेष्टितानि, सभिकप्रत्ययव्यवहारान् [ व्यवहार ]

वैश्यमिति शेषः, आविशन् प्रविशन् एव प्रवेशसमकाल एव इति शतृप्रत्ययार्थः। लोकवादात् लोकानां कथोपकथनात् लुब्धैः अर्थाकाङ्क्षिभिः अर्थे अत्यासक्तचित्तैः कृपणैरिति यावत्, तथा समृद्धैः ऐश्वर्य्यशालिभिः पूर्णं परिवारितं ...र्णं पुरं तत् नगरम् इति उपलभ्य ज्ञात्वा। नश्वरत्वं क्षणभङ्गुरत्वं प्रदर्श्य विबोध्य। दृष्टिर्ज्ञान-सामान्यवचनः। अमून् लुब्धान् समृद्धान् च तत्पुरवासिनः जनान् प्रकृतिस्थान् प्राप्तस्वभावान् धनेषु आसक्तिविवर्ज्जितान् विधास्यन् कर्त्तुमिच्छन् कर्णीसुतः चौर्य्य-शास्त्रप्रवक्ता कश्चित्। तेन प्रहिते प्रवर्त्तिते पथि मार्गे, चौर्य्यविषये इत्यर्थः। मतिं बुद्धिम् अकरवम चौर्य्यानुशीलनमेव कर्त्तव्यतया निरवाधारयम्। "कर्णीसुतः करटकः स्तेयशास्त्रस्य कारक" इति वैजयन्ती।

(ब) द्यूतसभां द्यूतक्रीड़ार्थं सम्मिलितं जनसमाजम् अनुप्रविश्य प्राप्य अक्ष-धूर्त्तैः अक्षक्रीड़ाचतुरैः जनैः सह समगंसि सङ्गतः अभवम्। तेषाम् अक्षधूर्त्तानां द्यूताश्रयासु द्यूतसम्बन्धिनीषु कलासु क्रीड़ाविधिषु कौशलं कूटनैपुण्यम्। अक्षाणां पाशकानां भ्रमिः स्वेच्छया परिवर्त्तनं यथेच्छं संख्याव्यवहारित्वम् इत्यर्थः। तस्मिन्

---

निষ্ফল এই প্রতারণাবহুল অধর্ম্মের পথ—ধর্ম্মপথের ন্যায় আচরণ করিতে হইল। এইরূপে নিজের কুৎসিত কার্য্যের নিন্দা করিয়া, এই অশোক-বৃক্ষশ্রেণীর মধ্যে আসিয়া অশ্রুমোচন করিতেছি। ঐ কথা শুনিয়া আমি সকরুণভাবে বলিলাম,—ভদ্র! কিছুকাল অপেক্ষা করিয়া এই স্থানেই থাক, যাহাতে ঐ বেশ্যা স্বীয় অর্থ দ্বারা তোমার সেবা করে, আমি তাহা করিব, তাদৃশ বহু উপায় আছে। এইরূপে তাহাকে আশ্বাস দিয়া

न्यायबलप्रतापप्रायान्, प्रयोजितार्थसाधनक्षमान्, बलिषु सान्त्व-नानि, दुर्बलेषु भर्त्सितानि, [ परपक्ष ] पक्षरचनानैपुण्यम्, उच्चावचानि प्रलोभनानि, ग्लहप्रभेदवर्णनानि, द्रव्यसंविभागौ-दार्य्यम्, अन्तरान्तरा अश्लीलप्रायान् कलकलानित्येतानि चान्यानि चानुभवन् न तृप्तिमध्यगच्छम् ( ब )। अहमस्य किञ्चित्प्रमाददत्त-

हस्तादयः चिप्रहस्तादयः तेषु, अत्यन्तम् अतिमात्रं दुः दुःखेन अतिकष्टेन इत्यर्थः। [redacted] अनुमेयानि, कूटकर्म्माणि कपटविधयः। तन्मूलानि तज्जन्यानि, सावलेपानि सगर्व्वाणि, अधिक्षेपवचनानि तिरस्कारवाचः, जीवितनिरपेक्षाणि, प्राणपर्य्यन्तानपेक्षाणि संरम्भविचेष्टितानि क्रोधजनितव्यवहारान् सभिकस्य द्यूतकारस्य प्रत्ययव्यवहारान् सविश्वासानुष्ठानानि, न्यायः औचित्यं, बलं शक्तिः, प्रतापः तेजस्विता, तत्प्रायान् बाहुल्येन तद्युक्तान्, प्रयोजितानां क्रीडायां पणादिरूपेण व्यवस्थापितानाम् अर्थानां धनानां विषयानां वा साधने आत्मसात्करणे प्रतिपादने च क्षमान् शक्तान्।

আমি উঠিলাম এবং নগরে প্রবেশ করিতে লাগিলাম। প্রবেশকালে লোকের মুখে শুনিতে পাইলাম, নগরে বহু কৃপণ সমৃদ্ধ ব্যক্তি বাস করে। তদনন্তর অর্থের ক্ষণভঙ্গুরতা দেখাইয়া নগরবাসীদিগকে প্রকৃতিস্থ করিবার অভিলাষে চৌর্য্যকার্য্যে বুদ্ধি নিবিষ্ট করিলাম। ( র-ল )

নগরে প্রবেশ করিয়া দ্যূতসভায় যাইয়া দ্যূতসভার সভ্যগণের সহিত মিলিত হইলাম। তাহাদিগের পঞ্চবিংশতিপ্রকার দ্যূতকলায় নিপুণতা, অক্ষভ্রমি প্রভৃতি কার্য্যে অন্যের অজ্ঞেয় কূটকর্ম্ম, তন্মূলক সগর্ব্ব তিরস্কার-বাক্য, জীবন পর্য্যন্ত তুচ্ছ করিয়া ক্রোধের কার্য্য, ন্যায় বল ও প্রতাপ-বহুল সভিকগণের প্রত্যয়ব্যবহার, নির্দ্দিষ্ট অর্থদানে শক্ত ব্যক্তিবর্গ, বলী ব্যক্তির সান্ত্বনা, দুর্ব্বল ব্যক্তির তিরস্কার, পক্ষরচনার নৈপুণ্য, অতিশয় প্রলোভন, অক্ষক্রীড়ার ভেদবর্ণনা, দ্রব্যসংবিভাগে ঔদার্য্য, মধ্যে

शारिके क्वचित् कितवे। प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य "शिक्षयसि रे! द्यूतवर्त्म हासव्याजेन? आस्तामयमशिक्षितो वराकः, त्वयैव तावद्विचक्षणेन देविष्यामि"। इति द्यूताध्यक्षानुमत्या व्यत्यषजत् (श)। मया जितश्चासौ

बलिषु स्वापेक्षया शक्तिमत्तरेषु सान्त्वनानि सामवाक्यानि, दुर्बलेषु स्वापेक्षया हीनबलेषु भर्त्सितानि तिरस्कारवचांसि, पक्षरचनायां कस्यचित् सम्प्रदायविशेषस्य निर्माणे नैपुण्यं चातुर्यं स्वपक्षसम्पादनचातुर्यं वा, उच्चावचानि, सामर्थ्यानुसारेण अधिकानि अनधिकानि च प्रलोभनानि लोभकरवाक्प्रयोगाः इत्यर्थः। उच्चावचानि अनेकप्रकाराणि इति वा, "उच्चावचं नैकभेद"मित्यमरः। ग्लहानां पणानां प्रभेदाः विशेषाः तेषां वर्णनानि कीर्त्तनानि, नानाविधपणप्रस्तावान् "पणोऽक्षेषु ग्लहो मत" इत्यमरः। द्रव्याणां पणलब्धार्थानां संविभागे सम्यक् भागविषये औदार्य्यम्, उदारता, अन्तरान्तरा मध्ये मध्ये अश्लीलप्रायान् अश्लीलवाग्युक्तान् कलकलान आनन्दशब्दान् इति एवं प्रकारेण अनुभवन् इति वक्ष्यमाणेनान्वयः। एतानि एतादृशानि अन्यानि उक्तातिरिक्तवस्तूनि च अनुभवन् इति शेषः, इतिशब्दो नोक्तवस्तूनां परामर्शकः, तथा सति कलकलानित्यन्तेषु सन्दर्भेषु द्वितीयाया अनुपपत्तेः, अव्ययये।गे प्रथमाया एव तत्र सिद्धिसम्भवात् अतएव एतानि इत्यत्रापि विलक्षणार्थता। तृप्तिं न अध्यगच्छम् न प्राप्तवान् अहमिति शेषः।

(श) किञ्चित्प्रमादेन स्वल्पानवधानतया दत्ता स्वकोष्ठादन्यस्मिन् कोष्ठे चालिता

মধ্যে অশ্লীলপ্রয়োগসহকারে ক্রীড়াকারীদিগের কোলাহল, এই সকল এবং অন্যান্য ব্যাপার প্রত্যক্ষ করিয়া তৃপ্ত হইতে পারিলাম না। পরে একজন ক্রীড়ারত ব্যক্তি অসাবধানতাবশতঃ নিজ শারিকা চালনা করিলে আমি হাসিলাম, প্রতিপক্ষ ক্রোধে রক্তবর্ণনেত্রে আমাকে যেন দগ্ধকরত আমার দিকে চাহিয়া বলিল,—"ওরে! হাস্যচ্ছলে তুই ইহাকে দ্যূতক্রীড়ার

षोड़शसहस्राणि दीनाराणाम्। तदर्द्धं सभिकाय सभेभ्यश्च दत्त्वा अर्द्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थ्यमानसभिकानुरोधाच्च तदगारे-ऽत्युदारमभ्यवहारविधिमकरवम् (ष)। यन्मूलश्च मे दुरो-

शारिका गुटिका क्रीड़ोपकरणीभूता येन तस्मिन् क्वचित् कितवे द्यूतकारे अहसं, तं प्रति हासं प्रयुक्तवान् इत्यर्थः। प्रतिकितवः प्रतिपक्षीयद्यूतकारः, क्रोधताम्रया रोषारुणया "[illegible] निर्द्दहन्निव ज्वालयन्निव, अत्र क्रियोत्प्रेक्षा वाच्या। हासव्याजेन हासच्छलेन, द्यूतवर्त्म अक्षक्रीड़ामार्गं शिक्षयसि, उपदिशसि, रे इति निकृष्टसम्बोधने तच्च अधिकं क्रोधमस्य व्यनक्ति, अयं मत्प्रतिपक्षभावेन सम्प्रति क्रीड़ाकारी, हास-व्याजेन तव द्यूतोपदेशविषयीभूतः अयमित्यर्थः। अशिक्षितः वराकः अपटुः दीनः आस्तां विरमतु, विचक्षणेन अतिपटुना त्वयैव न तु अनेन, इतीरवकारव्यवच्छेद्यम्, देविष्यामि खेलिष्यामि अहमिति शेषः। सोऽभ्युपेत्यर्कितियम्। द्यूताध्यक्षस्य अनुमत्या आदेशम् आदाय व्यत्यषजत् क्रीड़ाविधौ मया सङ्गतो बभूव। मयैव प्रतिपक्षभावेन क्रीड़ामुपक्रान्तवान् इत्यर्थः।

(ष) असौ मत्प्रतिपक्षः द्यूतकारः, दीनाराणां स्वर्णमुद्राविशेषाणां, तथाच "चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" इति मनुः, "दीनारेऽपि च निष्कोऽस्त्री" इति चामरः, सुवर्णं हि अशीतिरत्तिकामितस्य स्वर्णस्य संज्ञा। जितः इति जयते-र्द्विकर्म्मकदुहादिगणपाठात् कर्म्मद्वयी, कर्म्मणि वाच्ये गौणकर्म्मण उक्तता च,

পথ বলিয়া দিতেছিস্, তবে এই অশিক্ষিত ব্যক্তি থাকুক, বিচক্ষণ তোর সহিতই আমি খেলিব" এই বলিয়া দ্যূতাধ্যক্ষের অনুমতিক্রমে আমার সহিত ক্রীড়া আরম্ভ করিল। (ব-শ)

আমার নিকট সে ষোড়শসহস্র দীনার মুদ্রা হারিল। তাহার অর্দ্ধভাগ ( অর্থাৎ অষ্ট সহস্র দীনার মুদ্রা ) সভাপতিকে ও সভ্যগণকে দান

**दरावतारः स मे विमर्द्दको नाम विश्वास्यतरम् द्वितीयं हृदयमासीत्। तन्मुखेन च सारतः कर्म्मतः शीलतश्च सकलमेव नगरमवधार्य्य धूर्जटि-कण्ठ-कल्माष-कालतमे तमसि नील-निवसनार्द्धोरुक-परिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुख-काकली**

तदर्द्धं तेषां प्राप्तदीनाराणाम् अर्द्धभागं, सभिकाय द्यूतसभाध्यक्षाय, सभ्येभ्यः अपरेभ्यश्च पारिषदेभ्यः, स्वीकृत्य आदाय हर्षगर्भाः आनन्दपूर्णाः प्रशस्तालापा मत्-प्रशंसावाचः उदतिष्ठन् उदभवन्। प्रार्थयमानस्य अनुरुन्धतः सभिकस्य अनुरोधात् सनिर्बन्धप्रार्थनात् तस्य सभिकस्य अगारे गेहे, अत्युदारम् उदारभावशुद्धम् अभ्यवहार-विधिं भोजनविधिम् अकरवं स्वीकृतवान्।

(स) यन्मूलः यत्कारणकः, मे मम दुरोदरस्य अक्षक्रीडायाः अवतारः प्रथमप्रवृत्तिः, सः विमर्द्दको नाम मे मम विश्वास्यतरम् आत्मनो हृदयादपि अतिविश्वास-भाजनं द्वितीयं हृदयम् इव आसीत्, तस्यैव प्रथमतो द्यूतप्रवृत्तिहेतुत्वात् तत्प्रवृत्त्या एव च महतो धनागमस्य जातत्वात् महती प्रीतिस्तत्र मे बभूव इति भावः। "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः। अत्र विमर्द्दकस्य हृदयात् भेदसत्त्वेऽपि अभेदाध्यवसायात् अतिशयोक्तिरलङ्कारः। तस्य मुखेन तन्मुखनिर्गतेन वचनजातेन, सारतः धनविषये शक्तितः वा, कर्म्मतः कार्य्यतः शीलतः चरित्रतः च, अवधार्य्य निश्चित्य, धूर्ज्जटिः नीलकण्ठः शिवः तस्य कण्ठस्य कल्माषः कृष्णवर्णः तद्वत् कालतमे अतिकृष्णे तमसि अन्धकारे, नीलनिवसनं नीलवस्त्ररूपम् अर्द्धोरुकम्

করিয়া অর্দ্ধ আমি লইয়া উঠিলাম। তত্রত্য জনসমূহ হর্ষভরে আমার প্রশংসাবাদ করিতে লাগিল। সভিকের অনুরোধে তাহার গৃহে অতি হৃষ্টচিত্তে ভোজনক্রিয়া সম্পন্ন করিলাম। আমার অক্ষক্রীড়ার মূলীভূত বিমর্দ্দক নামক ব্যক্তি আমার দ্বিতীয় হৃদয়ের ন্যায় বিশ্বাসের পাত্র ছিল। তাহার মুখে ধন কর্ম্ম ও চরিত্র বিষয়ে সমস্ত নগরের ভাব নিশ্চয় করিয়া

सन्दंशक-पुरुषशीर्षक-योगचूर्ण-योगवर्त्तिका-मानसूत्र-कर्कटक-रज्जु-दीपभाजन-भ्रमर-करण्डक-प्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे सन्धिं छित्त्वा पटहाच्चसूक्ष्म-च्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। (स) नील-नीरद-

आवरणवस्त्रं तेन परिहितः आच्छादितशरीरः "अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकः"-... "आहिताग्न्यादिषु वा" इति परनिपातः। नीलवसनेन शरीरा-च्छादनमन्धकारे परेण देहस्य एकान्ततः अनुपलक्षणार्थम्। बद्धः कटिभागे अव-लम्बितः तीक्ष्णः सुधारः कौक्षेयकः कृपाणिका येन तथाभूतः, "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः। अन्येनात्मनो बाधनवारणाय कृपाणिकाधारणम्। फणिनः सर्पस्य मुखमिव मुखं यस्य तथाभूतं फणिमुखं सुरङ्गासाधनं शावलास्त्रं (शावल इति भाषा), काकली गृहस्थस्य निद्राजागरणयोरन्यतरनिश्चायकवंशीविशेषः, केचित्तु काकलीमपि कर्त्तरीभेदमाहुः। सन्दंशकं सन्दंशास्त्रं (सॉड़ाशी इति प्रसिद्धम्), पुरुषशीर्षकं मनुष्यशिरस्तुल्यं वस्तु, एतद्धि चौराः आत्मनः गृहमध्ये प्रवेशात् प्राक् गृहमध्ये सुरङ्गद्वारेण प्रवेशयति, गृहस्थो यदि जागरितः स्यात् तदा चौरमस्तकबुद्ध्या, तत्र प्रहरिष्यति इति बुद्ध्या, तथाच मृच्छकटिकेऽपि शर्व्विलकोक्तौ "प्रतिपुरुषं निवेशयामि" इति। योगचूर्णं योगरचनायोगसाधितं किमपि चूर्णं यस्य विकिरणेन गृहस्था मुग्धा निद्रान्ति। योगवर्त्तिका योगनिष्पादिता दीपदशा यस्याः प्रज्वलितायाः आलोकेन चौर एव दृष्टिं लभते न तु गृहस्थोऽपि तथा-

নীলকণ্ঠের কণ্ঠতুল্য কৃষ্ণবর্ণ অন্ধকারে নীলবসনে শরীর আচ্ছাদন করিয়া একখানি তীক্ষ্ণ ছুরিকা কটিদেশে বাঁধিয়া শাবল, বাঁশী, সাঁড়াশী, কৃত্রিম-পুরুষের মস্তক, অদৃশ্যতাসাধক যোগচূর্ণ এবং যোগবর্ত্তিকা প্রভৃতি বহু উপকরণে সজ্জিত হইয়া কোনও প্রধান লুব্ধ ধনীর গৃহে সিঁধ্ কাটিয়া

निकर-पीवर-तिमिर-निविड़-पीड़ितायां राजवीथ्यां झटिति हुतवहदासम्पातमिव क्षणमालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषरोषिता निःसम्बाध-वेलायां निःसृता सन्निकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। 'क्वासि वासु! क्व यासी'ति सदयमुक्ता त्रासगद्गदमवादीत्।

भूता, मानस्य परिमाणस्य सुरङ्गापरिमितिकरणस्य सूत्रम्। कर्कटकः कर्कटाकार-यन्त्रभेदः, तस्य साहाय्येन गृहीतुमनुपक्रान्तं कुर्वाचित् यस्याङ्कघन्त्यादिना प्रतिरोधं क्रियते। रज्जुः आरोहणावरोहणादिसाहाय्यकारी पाशः, तत्साहाय्येन निम्नादूर्द्धम् ऊर्द्धाच्च निम्नं चौराः स्थलविशेषेषु गच्छन्ति। दीपभाजनं प्रदीपाधानपात्रं पटलकादिकं (लण्ठन इति भाषा) भ्रामरकरण्डकं भ्रमरजातीयकीटविशेषयुक्तपात्रभेदः, तेन हि गृहाभ्यन्तरे प्रज्वलितस्य दीपस्य ऊर्द्धस्थानादौ स्थितस्यापि निर्व्वापणं क्रियते, तथा च मृच्छकटिके—"एष सुर्क्ती मया कीटो यात्वेवास्य दीपस्य उपरि मण्डलैर्व्विचित्रैर्व्वि-चरति" इति शर्व्विलकोक्तौ। उक्तप्रभृतिभिः उक्तैरपरैश्च इत्यर्थः। उपकरणैः द्रव्यभेदैः युक्तः समन्वितः। लुब्धस्य कृपणस्य ईश्वरस्य धनिकस्य सन्धिं प्रवेशमार्गं सुरङ्गमित्यर्थः। छित्त्वा छेदनेन निष्पाद्य, पटहाग्रसूक्ष्मं पटहस्य चर्म्मवर्त्मसि दैवाद् जातः वादनाबाधकः छिद्रविशेष इव क्षुद्रं यत् छिद्रं तेन आसम्यक् लक्षिता अधिगता अन्तर्गृहं गृहाभ्यन्तरस्य प्रवृत्तिः व्यापारः येन तथाभूतः, अन्येषामलक्षितभावेन विज्ञातगृहाभ्यन्तरतत्त्वः अन्यथा अनवधार्य्य प्रवेशे आपाततोऽपि विपत्पातसम्भवात्। अव्यग्रः अनायासः सारैः उत्कृष्टांशैः महतीं प्रशस्तां नीवीं मूलधनं "मूलद्रव्यं परिपणो नीवी" इति हैमः। आदाय गृहीत्वा निरगां निर्गतः अभवम्।

(ह) नीलाः ये नीरदाः सुकृष्णाः ये सजलमेघाः तेषां निकरवत् कादम्बिनीव

---

ঢক্কার একদেশবর্ত্তী ছিদ্রের ন্যায় সূক্ষ্ম ছিদ্র দ্বারা গৃহমধ্যবর্ত্তী সমস্ত বৃত্তান্ত জানিয়া অনায়াসে স্বগৃহবৎ তথায় প্রবেশ করিয়া বহু ধনসহকারে নির্গত হইলাম। (ঘ-স)

"आर्य्ये ! पुर्य्यामस्यामर्य्यवर्य्यः कुबेरदत्तनामा वसति, अस्म्यहं तस्य कन्या मां जातमात्रां धनमित्रनाम्ने अत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद् भार्य्यां मे पिता। स पुनरमुष्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्रति सति, अथोदारक इति च प्रीतल्लोकाधिरोपितापरश्लाघ्यनामनि वरयत्येव तस्मिन् मां तरुणीभूताम् अधन इत्यदत्त्वा, अर्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता (ह)। तदमङ्गलमद्य किल प्रभाते

इत्यर्थः। पीवरं स्थूलस्थूलं यत् तिमिरं अन्धकारं तेन निविडं निरन्तरं यथा तथा पीड़ितायाम् आक्रान्तायां तमःसम्मर्द्दविकटायामित्यर्थः। राजवीथ्यां राजपथे झटिति हठात्, शतह्रदासम्पातं विद्युद्दीप्तिसम्पातमिव, आलोकं दीप्तिम् अलक्षयम् अपश्यम्। अतिभास्वरः कोऽपि आलोकः समुल्ललास राजमार्गं गच्छतो मम नेत्रयोरिति भावः। नगरस्य मोषेण चौर्य्येण तत्रत्यधनराशीनामपहरणेन मत्कृतेन इति शेषः। रोषिता क्रोधपरीता, नगरदेवता तस्या राजधान्या अधिष्ठात्री देवतेव, निः न विद्यते सम्बाधः निघन्नणा जनकोलाहलादिसम्पर्करूपा यत्र तथाभूतायां निशीथत्वात् निस्तब्धभावमय्यां वेलायां समये, निःसृता निर्गता, उन्मिषन्ति प्रकाशमानानि भूषणानि अलङ्काराः यस्याः तथाभूता, नानालङ्कारसमलङ्कृताङ्गी सन्निकृष्टा अदूरवर्त्तिनी, आविरासीत् दृष्टा। वासु, बालिके ! असि त्वं का किम्परिचया ? इति उक्तरूपं वस्तु उक्ता मया अभिहिता सती सदयं करुणायुक्तामिव अतिकोमल-

---

নীলবর্ণ মেঘের ন্যায় গভীর অন্ধকারে আবৃত রাজপথে বিদ্যুদ্দীপ্তির ন্যায় একটী আলোক দেখিতে পাইলাম। সেই নগরে চুরি করার অপরাধে ক্রুদ্ধ হইয়া উপস্থিতা নগরদেবতার ন্যায় সেই সময়ে ভূষণালঙ্কৃতা এক

भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथैकाभिसरा तदगारमभिसरामि। तन्मां मुञ्च, गृहाणैतद्भाण्डम्" इत्युन्मुच्य मह्यमर्पित-

मित्यर्थः। त्रासेन भीतिवशेन गद्गदं जड़ितस्वरम् अवादीत् सा युवतिरिति शेषः। अर्थ्यवर्य्यः श्रेष्ठी वैश्यः, अस्मि भवामि, तस्य कुवेरदत्तनाम्नः वैश्यवरस्य। जातमात्रां मम जननमात्रेणैव न तु योग्यकाले लब्ध्वापि इति भावः। अत्रत्याय एतन्नगरवास्तव्याय। इभ्यः धनिकः "इभ्य आढ्यो धनी स्वामी" इत्यमरः। तस्य कुमाराय कस्यचिदैश्वर्य्यसम्पन्नस्य पुत्राय इत्यर्थः, भार्य्यां पत्नीम् अन्वजानात् अनुमतवान्। तस्मिन् धनिकुमाराय धनमित्राय मद्रूपां कन्यां पत्नीरूपेण प्रादादिति भावः। सः मम पिता अस्मिन् धनमित्राख्ये मम भर्त्तरि अत्युदारतया अतिदानशीलतया, पित्रोः जनकजनन्योः अन्ते अवसाने मृत्योः परम् अर्थिवर्गात् याचकसमूहात् निजैः वित्तैः सम्पद्भिः दारिद्र्यं दीनताम् अर्थाभावम् इत्यर्थः। क्रीतेव विनिमयेन गृहीतेव दरिद्रति दैन्यग्रस्ते सति, उदार एव उदारक इति, प्रीतैः सुखयुक्तैः लोकैः अर्थलाभात् सन्तुष्टचित्तैर्जनैरित्यर्थः। अपरम् अन्यत् श्लाघ्यं प्रशंसनीयं नाम यस्य तथाभूते, तरुणीभूतां युवतिं वरयतीव प्रार्थयमान एव, अधनः निर्धनः इति कृत्वा सः दरिद्र इति हेतोः अदत्त्वा अप्रतिपाद्य अर्थपतिनाम्ने, यथार्थम् अर्थानां पतिः इति व्युत्पत्तियुक्तं नाम यस्य तथाभूताय सम्पत्सम्पन्नाय इत्यर्थः सार्थवाहाय वैश्यात्मजाय, दित्सति दातुमिच्छति।

(च) तत् अमङ्गलम् अर्थपतिनाम्ने वणिजे मम दानरूपम् अशुभं कर्म्म, अमङ्गलत्व-

---

যুবতী আসিয়া উপস্থিত হইল। 'হে বালিকে! তুমি কে, কোথায়ই বা যাইতেছ?' এই কথা জিজ্ঞাসা করিলে সে ত্রাসবশতঃ গদ্‌গদস্বরে বলিল,—মহাশয়! এই নগরে কুবেরদত্ত নামক একজন বণিক্ বাস করেন, আমি তাঁহার কন্যা। আমার জন্মমাত্রেই আমার পিতা অত্রত্য ধনমিত্র নামক একজন ধনিপুত্রের নিকট আমাকে দান করিবেন বলিয়া স্বীকৃত হয়েন,

वती। दयमानश्चाहमब्रवम्—"एहि साध्वि! त्वां नयेयं त्वत्प्रियतमावसथम्"। इति त्रिचतुराणि पदान्युदचलम्, आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम् (च)। दृष्ट्वैव प्रवेपमानां कन्यका

घोषणञ्चास्य स्वेनानभिमतत्वात् इति; भावि भविष्यति इति ज्ञात्वा विज्ञाय अद्य [illegible] इति एकार्द्धरात्रात् अपरार्द्धरात्रपर्य्यन्तस्य एकदिनत्वमते कथितम्, अन्यथा निशीथकाले तथा व्यवहारानुपपत्तिः स्यात्। अथवा सूर्य्यकिरणावच्छिन्नकालं निशाञ्च समस्य एकदिनमतेऽपि रात्रेर्द्दिनान्तर्गतत्वेन वर्त्तमाननिशाया अपि अहःशब्दवाच्यतया, अद्य अस्मिन् अहनि एतस्या दिनाङ्गीभूतरात्रावित्यर्थः प्रतिपत्तव्यः। प्रागेव भाविनोऽमङ्गलकर्म्मणः सम्भवादिति शेषः। प्रियतमेन प्रणयिना धनमित्रेण दत्तः अर्पितः सङ्केतः इङ्गितं यस्यै सा, वञ्चितस्वजना आत्मीयजनान् वञ्चितवती, बाल्याभ्यस्तेन शैशवकालपरिचितेन वर्त्मना पथा, मन्मथः कामः एव एकः अभिसरः सहायः यस्याः केवलं काममेव सहायमभिमन्यमाना अपरानुचरपरिहीना कामव्याकुलताप्रणोदितेति-भावः। तस्य प्रियतमस्य अगारं गेहम् अभिसरामि रहसि गच्छामि। तत् तस्मात्

সেই ধনমিত্র তদীয় পিতা ও মাতার জীবনাবসানে স্বীয় বিত্তদ্বারা অর্থিবর্গের নিকট হইতে যেন দারিদ্র্য কিনিয়া লইয়া দরিদ্র হইয়া পড়িলেন। লোকে তাঁহার উদারতানিবন্ধন প্রীত হইয়া তাঁহাকে 'উদারক' এই শ্লাঘাসূচক নামে আখ্যাত করিল। পরে যখন তিনি আমাকে ভার্য্যারূপে চাহিলেন, তখন নির্ধন বলিয়া পিতা তাঁহার নিকট আমাকে দান করিলেন না এবং অর্থপতিনামক অপর এক ধনীর নিকট আমাকে দিতে ইচ্ছা করিলেন। সেই অমঙ্গলক্রিয়া আজ প্রভাতে সম্পন্ন হইবে, ইহা জানিয়া পূর্ব্বেই স্বজনগণকে ফাঁকি দিয়া প্রিয়তমের সঙ্কেতক্রমে একমাত্র

**मवदम्—"भद्रे ! मा भैषीः, अस्त्यगमसिद्वितीयो मे बाहुः। अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः। शयेऽहं भावित-विषवेगविक्रियः। त्वयाप्यमी वाच्याः "निशि वयमिमां**

मा त्वदयितमनुसरन्तीं मा मुञ्च मा प्रतिबधान. एतत् भाण्डम् अलङ्कारम् अलङ्कारपात्रं वा अभिसारगमनस्य प्रस्तुतस्य रहस्यत्वात् भूषणादिशब्दभयेन सर्व्वमेकीकृत्य पात्रे स्थापयित्वा नीयमानत्वादिति भावः। पूर्व्वकल्पे "भाण्डं भूषाश्वभूषयो" रिति कोषः। उन्मुच्य अवतार्य्य विश्लेष्य इति वा। एतदात्मत्राणाय उत्[illegible]नात दयमानः तस्याः कातर्य्येण सम्भाव्यमानस्य तदीयदुःखस्य प्रहरणकामनया स्थित इत्यर्थः। तव प्रियतमस्य धनमित्रस्य आवसथं गेहं नयेयम् अहमिति शेषः। नयते-र्द्विकर्म्मकत्वात् कर्म्मद्वयी। त्रिचतुराणि त्रीणि वा चत्वारि वा समासे अत्प्रत्ययः। पदानि उदचलम् अगच्छम्। दीपिकानां प्रदीपानां ज्वलदुल्कानामित्यर्थः। आलोकेन दीप्त्या परिलुप्यमानः विलयं गच्छन् तिमिरभारः अन्धकारराशिः येन तथाभूतं यष्टयः लगुडाः कृपाणाः करवालाश्च पाणौ यस्य तथाभूतं "प्रहरणार्थेभ्यः परे निष्ठा-सप्तम्यौ" इति सप्तम्यन्तपरपदो बहुव्रीहिः अनल्पं प्रचुरं नागरिकबलं नगररक्षि-सैनिकाः आपतत् उपातिष्ठत् दृष्टिगोचरतां प्राप्तम्।

(क) दृष्ट्वैव तद्बलम् आलोक्यैव प्रवेपमानां कम्पिताङ्गीं कन्यकां तां तरुणीम्।

মন্মথকে সম্বল করিয়া বাল্যাভ্যস্ত পথে প্রিয়তমের আগারে যাইতেছি, অতএব আমাকে ছাড়িয়া দাও, এই অলঙ্কার গ্রহণ কর, এই বলিয়া আমাকে অলঙ্কার খুলিয়া দিল। আমি সদয়ভাবে বলিলাম,—"সাধ্বি ! তুমি এস, তোমাকে তোমার প্রিয়তমের আবাসে লইয়া যাইব" এই বলিয়া তিন চারি পা চলিলাম, এমন সময়ে প্রদীপালোকে সমস্ত অন্ধকার বিদূরিত করিয়া যষ্টি ও কৃপাণহস্তে বহু নাগরিক সৈন্য উপস্থিত হইল। (হ-ক্ষ)

पुरीं प्रविष्टाः, दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन् सभागृहकोणे, यदि वः कश्चिन्मन्त्रवित् कृपालुः, स एनमुज्जीवयन् मम प्राणानाहरेदनाथायाः" इति (क)। सापि बाला भयगद्-

असिः मम करस्थितः कृपाणः द्वितीयः यस्य तथाभूतः, असिप्रहरणयुक्तः, मे मम बाहुः अस्ति, तथाहि स एव विपदं नाशयिष्यति इति भावः। त्वदपेक्षया त्वदर्थे मृदुः भीषणतारहितः प्राणिहिंसाव्यतिरिक्तः, अयं वक्ष्यमाणः उपायः प्रकारः परित्राणोपाय इत्यर्थः। चिन्तितः स्थिरीकृतः मया इति शेषः। किन्तदित्याकाङ्क्षायामाह—शयेऽहमित्यादि। अहं भाविता प्रकाशिता विषवेगस्य देहे सर्पाघातजन्यविषप्रसारस्य विक्रिया विकारः येन तथाभूतः सन् शये शयितो भवामि। अमी सैनिकपुरुषाः वाच्याः वक्तव्याः वक्ष्यमाणं वस्तु इति शेषः। एषः शयितः नायकः पतिः नायकः प्रियसमीपप्रापक इति गूढम्, दर्वीकरेण विषधरभुजङ्गेन "सर्पः पृदाकुर्भुजग" इत्यारभ्य "दर्वीकरो दीर्घपृष्ठ" इत्यादिरमरः। अमुष्मिन् अदूरस्थिते इति हस्तेन निर्देशः। वः युष्माकं मध्ये, निर्द्धारणे षष्ठी। मन्त्रवित् विषापनोदकमन्त्राभिज्ञः, विषवैद्य इत्यर्थः। एनं मम नायकम्, अनाथायाः अशरणायाः अथच अद्यापि परिणयाभावात् स्वामिशून्याया इत्यर्थः। प्राणान् आहरेत् आयत्तीकुर्य्यात्, यदि कश्चिदेनं जीवयति तदाहं तस्य चिरं क्रीता भविष्यामि इति भावः।

তদ্দর্শনে সেই কন্যা ভয়ে কাঁপিতে লাগিল, আমি তাহাকে বলিলাম, —ভদ্রে! তুমি কোনও ভয় করিও না। অসিযুক্ত আমার এই হস্ত বর্ত্তমান আছে, কিন্তু তোমার জন্য আমি এই একটী সহজ উপায় ভাবিয়াছি। আমি কৃত্রিম বিসবিকার দেখাইতে থাকি এবং তুমিও উহাদিগকে বলিবে যে, রাত্রিযোগে আমরা এই নগরে প্রবেশ করিয়াছি। তৎপরে আমার স্বামীকে ঐ সভাগৃহের কোণে এক সর্পে দংশন করিয়াছে, যদি আপনাদের

**गद्स्वरा बाष्पदुर्द्दिनाक्षी बद्धवेपथुः कथं कथमपि गत्वा मदुक्त-मन्वतिष्ठत्। अशयिषि चाहं भावितविषवेगविक्रियः। तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रा-तन्त्र-मन्त्र-ध्यानादिभिश्चोपक्रम्याकृतार्थः "गत एवायं कालदष्टः, तथाहि स्तब्धश्याव-**

(ख) सापि बाला भयेन सैनिकैः स्वस्य धारणाशङ्कया गद्गदम् अस्पष्टः स्वरः यस्याः तथाभूता, बाष्पेण अश्रुधारया दुर्द्दिनं वृष्टियुक्तदिनवत् [redacted] यस्याः तथाभूता अश्रुभारप्लुतनेत्रा, बद्धवेपथुः प्रकम्पिताङ्गी, कथं कथमपि अतिकृच्छ्रेण गत्वा नागरिकसमीपे इति शेषः। मदुक्तं मया कथितं सर्व्वं वस्तु इति शेषः। अन्वतिष्ठत् आचरितवती, मम कथनक्रमेण सर्व्वं कथितवतीति भावः। तेषु नागरिकेषु मध्ये कश्चित् नागरिकपुरुषः, नरेन्द्राभिमानी विषवैद्यम्मन्यः, "नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपि कथ्यते" इति विश्वः। मां निर्वर्ण्य दृष्ट्वा, मुद्रा अङ्गुरीयकविशेषः विषापनोदनक्षमः, तन्त्रं विषचिकित्सोपकरणं मण्डलादिकं, मन्त्रः गारुडादिशास्त्रनिबद्धानि विषापनोदकवचनानि, ध्यानं भावनाविशेषः तानेव आदीनि येषां तैः, उक्तैरपरैश्च उपायैरित्यर्थः। उपक्रम्य विषवेगमपाकर्त्तुम् उद्युक्तः अकृतार्थः विफलमनोरथः, कथमपि मम कृत्रिमं विषवेगम् अपहर्त्तुम् अक्षम इत्यर्थः। अयं कालेन अन्तकसदृशेन सर्पेण दष्टः, गतः प्रस्थितः

মধ্যে কেহ বিস নামাইবার মন্ত্র জানেন, তবে কৃপা করিয়া মদীয় নায়কের জীবনদানে এ অনাথার প্রাণ কিনিয়া রাখুন। সেই বালিকাও ভয়বশতঃ গদ্গদকণ্ঠে বাষ্পমোচন করিয়া কম্পিত-কলেবরে অতিকষ্টে যাইয়া আমার কথিত মত কার্য্য করিল। আমি বিষবেগ দেখাইয়া শয়ন করিলাম। সেই নাগরিকগণের মধ্যে বিষবৈদ্য বলিয়া অহঙ্কারী এক ব্যক্তি আমাকে ভালরূপে দেখিয়া মুদ্রা তন্ত্র ও ধ্যান প্রভৃতি দ্বারাও বিষের

मङ्ग', कृष्णा दृष्टिः, शान्त एवोष्मा। शुचा अलं वासु! श्वोऽग्निसात् करिष्यामः। कोऽतिवर्त्तते दैवम्” इति सहेतरैः प्रायात् (ख)। उत्थितश्चाहमुदारकाय तां नीत्वाब्रवम्— “अहमस्मि कोऽपि तस्करः। त्वद्‌गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम्; भूषणमिदममुष्या” इत्यंशुपटल-पाटितध्वान्तजालं तदप्यर्पितवान् (ग)। उदारकस्तु तदादाय सलज्जश्च सहर्षश्च ससम्भ्र-

इहलोकादिति शेषः। मृत इति तात्पर्य्यम्। तदेव मरणं हेतुदर्शनेन द्रढयति—तथाहीत्यादिना। अङ्गम् अस्य शरीरं स्तब्धं निश्चलं श्यावम् अतिश्यामवर्णं, दृष्टिः चक्षुः कृष्णा निमीलिता, उष्मा शरीरतापः शान्तः अवसितः, तथाहि सर्वमेतत् विषवेगेन मरणचिह्नमिति भावः, शुचा पतिवियोगजन्यशोकेन अलं निष्प्रयोजनं वासु, बालिके! श्वः आगामिनि दिवसे, अग्निसात् करिष्यामः इममिति शेषः। दैवं नियतिम् अतिवर्त्तते अतिक्रामति, सर्वमेव दैवाधीनम् इति मत्वा शोकः परित्यज्यतामिति भावः। इतरैः अन्यैः नागरिकपुरुषैः सह प्रायात् प्रस्थितः स्वाभिमतकार्य्यसम्पादनाय इति शेषः।

(ग) तां मम शरणागतां तरुणीं नीत्वा उदारकस्य धनमित्रस्य समीपं प्रापय्य, अब्रवं वक्ष्यमाणमिति शेषः। उदारकाय इति कथनार्थधातुयोगे तादर्थ्यविवक्षायां

---

উপশম করিতে না পারিয়া এই বলিয়া অপর নাগরিকগণের সহিত চলিয়া গেল যে, ইহাকে কালে দংশন করিয়াছে, অতএব ও মৃত্যুপ্রাপ্ত হইয়াছে। বালিকে! শোক করিও না। ইহাকে আগামী কল্য অগ্নিতে দাহ করিব। দৈব কে অতিক্রম করিতে পারে? (ক-খ)

আমি উঠিয়া সেই উদারকের নিকট তাহাকে লইয়া গিয়া বলিলাম,—

मश्च मामभाषत—"त्वयैवेयमस्यां निशि प्रिया मे दत्ता; वाक् पुनर्ममापहृता। तथाहि—न जाने वक्तुम्। त्वत्कर्म्म तदद्भुतमिति, ननु ते शीलमद्भुतवत् [न ते स्वशीलमस्तुतवत्] प्रतिभाति। नैवमन्येनापि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः। नहि

चतुर्थी। त्वद्गतेन त्वयि अनुरक्तेन चेतसा मनसा एव सहायभूतेन न तु अन्येन केनापि बाह्यसहायेन इति एवशब्दार्थः। त्वाम् अभिसरन्तीं त्वदुद्देशेन रहसि प्रतिष्ठमानाम् इमां दृश्यमानां युवतिम् अन्तरा पथिमध्ये उपलभ्य ज्ञात्वा, कृपया करुणया तव समीपम् अनैषम् प्रापयम् अहमिति शेषः। अमुष्याः तव प्रियायाः। इति उक्तरूपम् उक्त्वा, अंशुपटलेन किरणसमूहेन अलङ्कारोत्थेन इति भावः, पाटितं विध्वंसितं ध्वान्तजालम् अन्धकारसमूहः येन तथाभूतं स्वतेजसा समस्ता दिशः आलोकिताः कुर्व्वाणं तदपि तथा प्रदत्तपूर्व्वं भूषणमपि अर्पितवान् तस्या इति शेषः। अपिशब्दस्य अर्पितवानित्युत्तरमन्वयः कार्य्यः। अन्नवमिति क्रियापेक्षया अर्पणेनैव तदर्थान्वयस्य सामञ्जस्यात्।

(घ) तत् मया दत्तं भूषणं आदाय गृहीत्वा। सलज्जं आत्मनस्तास्कर-

'আমি একজন তস্কর, এই বালিকা একমাত্র তোমার প্রতি অনুরক্ত চিত্তকে সহায় করিয়া তোমার নিকট আসিতেছিলেন। আমি পথিমধ্যে ইহাকে দেখিতে পাইয়া তোমার নিকট লইয়া আসিয়াছি, এই অলঙ্কার ইহার' এই বলিয়া সেই অলঙ্কারের কিরণজালে অন্ধকারসমূহ নষ্ট করিয়া তাহা অর্পণ করিলাম। উদারক তাহা গ্রহণ করিয়া লজ্জায় হর্ষে সম্ভ্রমের সহিত আমায় বলিল,—তুমিই এই রাত্রিযোগে আসিয়া আমার প্রিয়াকে আনিয়া দিলে! কিন্তু আমার বাক্‌শক্তি রুদ্ধ হইয়াছে, আমি কিছুই বলিতে পারিতেছি না। তোমার এই কার্য্য অতি অদ্‌ভুত, অতএব তোমার চরিত্রও অদ্‌ভুত বলিয়া প্রতীত হইতেছে।

त्वय्यन्यदीया लोभादयः, त्वयाऽद्य साधुतोन्मीलितेति तत्प्राय-स्त्वत्पूर्वावदानेभ्यो न रोचते। दृष्टमिदानीमौदार्य्यस्य स्वरूप-मिति त्वदाशयमननुमान्य न युक्तो निश्चयः। त्वयाऽमुना सुकृतेन

त्रस्त्या लज्जायुक्तं सहर्षं तस्य उपकारकरणक्षमतया हर्षयुक्तं, ससम्भ्रमं प्रसह्य लब्ध्वा आनीतायाः निशीथे अपक्रान्तायाः अनुसरणकारिभिरात्मनः विपदाशङ्कया सम्भ्रमयुक्तमित्यर्थः। माम् अभाषत आचष्ट, त्वयैव नानेयन, एतेन अन्यस्य अशक्यत्वमपि तत प्रतिपाद्यते, मे मम प्रिया प्रियतमा इयं दत्ता अर्पिता, वाक् वचनं कृतज्ञता-ज्ञापनोचितम् इत्यर्थः। अपहृता आनन्दातिशयेन विलुप्ता, वक्तुं प्रशस्ततया मनोभाव-प्रकाशकं वाक्यं प्रयोक्तुं न जाने, अतएव यथायथं वाक्यं भवति महोपकारसाधकेऽपि यत् न प्रयोजयितुं शक्यते तत् क्षमार्हमेव अज्ञतायाः क्षमार्हत्वात्। एतत् त्वत्कर्म्म त्वया अद्य आचरितं प्राप्तस्य भूषणपरित्यागरूपम् असहायाया अस्याः पथिप्राप्ताया मत्समीप-प्रापणरूपञ्च कार्य्यम् अद्भुतं विस्मयजनकं साधारणजनानाम् ईदृशकर्म्मसु तथा प्रकर्षा-दर्शनादिति भावः। इति अनेन हेतुना उक्तरूपविस्मयकर्म्मदर्शनेन इत्यर्थः। ते तव शीलं चारित्रम् अद्भुतवत् प्रतिभाति ज्ञायते, तथाहि तवास्य कर्म्मणो दर्शनेनैव त्वम् अतिमहान् विज्ञायसे इति भावः। एवं त्वदाचरितरूपं कर्म्म अनेयन त्वदितरेणापि न कृतपूर्व्वम् अनुष्ठितपूर्व्वं त्वमनन्यसुलभं माहात्म्यं प्राप्तः असि, येन असाधारणं कर्म्म त्वया अद्य सम्पादितमिति भावः। वस्तूनां शक्तिः धर्म्मः प्रतिनियतैव तत्तद्व्यक्तिभेदेन विल-क्षणैव, तथाहि एकजातीये पदार्थे अन्यजातीयपदार्थधर्म्मो न कदापि तिष्ठेत् यथा न घटे पटत्वं नापि पटे घटत्वम् इत्येवम्। तमेवार्थं प्रकृते समन्वितं करोति—न हीत्या-

এরূপ কার্য্য অন্ত কোন ব্যক্তিই করে নাই, অতএব বস্তুশক্তি নিয়ত, ( অর্থাৎ যে বস্তুর যে শক্তি, তাহা তাহাতেই থাকে। ) তোমাতে অন্তজন-সুলভ লোভ প্রভৃতি নাই। তুমি আজ পরম সৌজন্য প্রকাশ করিয়াছ, ইহাও হয় ত তোমার পূর্ব্বকৃত সৎকার্য্য পর্য্যালোচনায় প্রশংসনীয় হইবে

क्रीतोऽयं दासजन इत्यसारम्, अतिगरीयसा क्रीणासीति स ते प्रज्ञाधिक्षेपः। प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम्। अथवैतावदत्र प्राप्तरूपम् अद्य प्रभृति भक्तव्योऽयं दासजनः" इति मम पादयोरपतत् (घ)।

दिना त्वयि महात्मनि अन्यदीया नीचजनसुलभाः लोभादयः परद्रव्यस्पृहादयः दोषा इत्यर्थः, न हि सन्ति इति शेषः। सति असाधुगतधर्म्माणाम् असति च साधुगतधर्म्माणा-मसम्भवादिति भावः। साधुता साधुभावः, उन्मीलिता प्रकटिता। तत् पूर्व्वकृत्रिमं वस्तु प्रायः बाहुल्येन तव पूर्व्वेभ्यः इतः प्राक्तनेभ्यः अवदानेभ्यः कृतवृत्तान्तेभ्यः "अवदानं कर्म्म वृत्त" मित्यमरः। त्वया पूर्व्वं कृतेभ्यः इतोऽपि प्रशस्ततरेभ्यः कर्म्मभ्यो हेतुभ्यः हेतौ पञ्चमी। न रोचते रुचिं जनयति, तथाहि इदानीं यद्यपि भवानेवं प्रशस्तं कर्म्म कृतवान् तथापि इतः पूर्व्वम् एतदपेक्षया प्रशस्ततरकर्म्मकरणे एतत्प्रशंसा निन्दैव स्यात् इति भावः। इदानीम् अधुना एतत्कार्य्यानुष्ठानानन्तरमित्यर्थः। औदार्य्यस्य प्रशस्तहृदयतायाः स्वरूपं दृष्टं परीक्षितम्। इति उक्तरूपं वस्तु तव आशयम् अभिप्रायम् अननुमान्य अनु-मतिमकारयित्वा निश्चयः एककोटिकावधारणं न युक्तः न उचितः, त्वया अधुना सम्प्रत्येव कृतेन सुकृतेन परोपकारजन्यपुण्येन प्रशस्तकृत्येन वा अयं मल्लक्षणः दासजनः क्रीतः, इति उक्तवाक्यमपि असारं सारहीनम् अपकृष्टं वस्तु इत्यर्थः, अतिगरीयसा अतिबहुलेन मूल्येन क्रीणासि इति एतदर्थप्रतिपादकः प्रज्ञायाः तव बुद्धेः अधिक्षेपः, निर्बोध एव बहुना मूल्येन असारं वस्तु क्रीणातीति भावः। प्रियाया अस्या मम दयितायाः

না। সম্প্রতি ঔদার্য্য কাহাকে বলে, তাহা জানিতে পারিলাম, ইহাও তোমার আশ্রয় না জানিয়া নিশ্চয় করা যায় না। যদি বল যে, সেই সাধু কার্য্য দ্বারা এই দাসকে তুমি ক্রয় করিয়াছ, তাহা হইলেও বহুমূল্যে তুমি অসার বস্তু ক্রয় করিয়াছ বলিয়া তোমার বুদ্ধির নিন্দা করা হইবে। তুমি যে আমার প্রিয়াকে দান করিয়াছ, তাহার প্রতিদান এই শরীর—

उत्थाप्य चैनमुरसोपश्लिष्याभाषिषि—"भद्र! काऽद्य ते प्रतिपत्तिः" इति। सोऽभ्यधत्त—"न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम्, अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि। को वाऽहं, यथा त्वमाज्ञापयसि" इति। अथ मयोक्तम्—"अस्त्येतत्। स्वदेशो देशान्तरमिति नेयं गणना

दानस्य अत्रानयनकर्म्मणा मयि प्रतिपादनस्य प्रतिदानम् इदं मदीयं शरीरम् इति इत्यपि अनुक्तमिति शेषः। तत्र कारणमुपन्यस्यति—तदलाभे इत्यादिना। तस्याः प्रियाया अलाभे अप्राप्तौ निधनोन्मुखं विनाशप्रवणम् एतच्च सम्भावनया उच्यते, इदमपि एतत्प्रतिदानतया व्यवस्थाप्यमानं शरीरमपि त्वया एव दत्तम् अत्रापि नास्ति मम स्वतः प्राधान्यं येन तद् दासीय, अथवा त्वं यत् शरीरं मयि प्रादाः तस्य दाने त्वया ग्रहणेन च दत्तापहारितादोषदुष्ट एव त्वं कृतः स्या अतएव न अत्रापि प्रवृत्तिर्म्ममेति भावः। अथवा एतावत् इयन्मात्रं वक्ष्यमाणरूपं वस्तु अत्र एतदवस्थायां प्राप्तरूपम् उचितं नान्यत् किमपि, अयं मल्लक्षणः दासजनः भर्त्तव्यः परिरक्षितव्यः।

(ङ) एनं धनमित्रम्, उत्थाप्य उत्तोल्य, उरसा वक्षसा उपश्लिष्य आलिङ्ग्य।

ইহাও যুক্তিযুক্ত নহে, কারণ আমি প্রিয়াকে না পাইয়া মৃত্যুমুখে পতিত হইয়াছিলাম, তুমি তাহাকে দান করাতে, আমার সে শরীরও তুমিই দান করিয়াছ; অতএব তাহাও আমার স্বীয় বস্তু নহে। অথবা ইহাই এস্থলে যোগ্য যে, আজ হইতে এই দাসকে তুমি পালন করিবে", এই বলিয়া আমার চরণে পতিত হইল (গ ঘ)।

তাহাকে তুলিয়া বক্ষে আলিঙ্গন করিয়া বলিলাম,—'ভদ্র! আপনি সম্প্রতি কি করিতে চাহেন?' সে বলিল,—'আমি ইহার পিতা ও মাতার অনুমতি ব্যতীত ইহাকে বিবাহ করিয়া এস্থানে জীবিত থাকিতে পারিব

विदग्धस्य पुरुषस्य, किन्तु बालेयमनल्पसौकुमार्य्या, कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः। शैथिल्यमिव किञ्चित्प्रज्ञा-सत्त्वयोरनर्थेनेदृशेन देशत्यागेन सम्भाव्यते। तत् सहा-नया सुखमिहैव वस्तव्यम्। एहि, नयावैनां स्वमेवा-वासम्” इति (ङ)। अविचारानुमतेन तेन सद्य एवैनां तद्-

प्रतिपत्तिः विवेकः कर्त्तव्यविषये, किमिदानीं कर्त्तव्यतया निर्द्धारयसीति भावः।) सः धनमित्रः, अभ्यधत्त अकथयत्। एनां युवतिं, पित्रोः एतस्या मातुः पितुश्च, माता च पिता च तयोः, अनभ्यनुज्ञया अननुमत्या उपयम्य परिणीय, जीवितुं न शक्नोमि इति पूर्व्वेणान्वयः। “कालसमयवेलाशक्त्यर्थेषु च” इति तुम्। अस्यामेव वर्त्तमानायामेव न तु एतामतिक्रम्य इत्यर्थः। इमं देशं जिहासामि परित्यक्तुमिच्छामि, वा अथवा अहं कः कर्त्तव्यविधाने नाहं स्वतः प्रभुरिति भावः, त्वं मम प्रभुभूत इत्यर्थः। यथा येन प्रकारेण आज्ञापयसि तथैव करिष्यामि इति भावः। अथ अनन्तरं तस्य तथाभिधानात् परम् इत्यर्थः। एतत् त्वया यत् कथितं तदित्यर्थः। अस्ति यथार्थमेव इत्यर्थः, विदग्धस्य सुबुद्धेः पुरुषस्य स्वदेशः आत्मनो देशः देशान्तरं स्वदेशादन्यः देश इति च न गणना विवेचना, तस्य उभयत्रैव स्वबुद्धिप्रभावेण समा प्रतिपत्तिः सम्भवतीति भावः। इयं तव प्रिया एषा दृश्यमाना, अनल्पं सुप्रचुरं सौकुमार्य्यं कोमलता यस्याः तथाभूता, सुकोमलशरीरा इत्यर्थः। कान्तारपथाः दुर्गमवर्त्मानः प्रत्यवायभूयिष्ठाः विघ्नबहुलाः अतएव कष्टाः कष्टातिशय-जनकाः। तथाहि तेषु कान्तारपथेषु अनया गन्तुमशक्यमेव इति भावः। ईदृशेन रहसि भीतभीतं सम्पादितेन अनर्थेन बहुविघ्नसङ्कुलेन देशत्यागेन प्रज्ञासत्त्वयोः बुद्धिसामर्थ्ययोः

না, অতএব আজ রাত্রিযোগেই এই স্থান ত্যাগ করিতে ইচ্ছা করি। অথবা এ বিষয়ে আমার প্রভুত্ব নাই, তুমি যাহা আদেশ করিবে তাহাই করিব।’ পরে আমি বলিলাম,—তাহা সত্য। কিন্তু বিজ্ঞ ব্যক্তির পক্ষে স্বদেশ বা অন্য

गृहमुपनीय तयैवापसर्पभूतया तत्र गृहभाण्डावशेषमचोरयाव। ततो निष्पत्य क्वचिन्मुषितकं निधाय समुच्चलन्तौ नागरिकपुरुष-सम्पाते मार्गपार्श्वशायिनं कञ्चिन्मत्तवारणम् उपरि पुरुष [ पुच्छ ]

किञ्चित् शैथिल्यम् अवसाद इव सम्भाव्यते विविच्यते मया इति शेषः। तथाहि एतत्-स्थानपरिहारेण अन्यत्र गमनमेव सम्प्रति भयबहुलं न तु अत्रावस्थानमिति भावः। तत् तस्मात् अनया स्वप्रियया सह सुखं निर्विघ्नम् इहैव वस्तव्यम् अवस्थातव्यं न तु स्थानान्तरे प्रस्थातव्यमिति भावः। एनां तव दयितां, स्वम् आत्मीयम् आवासं गृहम्।

(च) अविचारम् अचिन्तितं उक्तस्य दोषादोषविचारशून्यम् इत्यर्थः, अनुमतं अनुमतिर्यस्य तथाभूतेन तेन धनमित्रेण एनां प्रियां तस्याः गृहम् उपनीय नीत्वा तया एव अपसर्पभूतया गुप्तचररूपया तद्गृहवर्त्तीनि द्रव्याणि तया एव विदित्वा इत्यर्थः। "अपसर्पश्चरः स्पशश्चारश्च गूढपुरुष" इत्यमरः। तत्र तद्गृहे, गृहभाण्डान्येव अवशेषाणि यत्र क्रियाया तद् यथा तथा अचोरयाव आवामिति शेषः। ततः तदनन्तरं निष्पत्य बहिर्गत्य, मुषितकं चोरितं वस्तु निधाय अवस्थाप्य नागरिकाणां पुररक्षिणां पुरुषाणा सम्पाते उपस्थितौ, मार्गपार्श्वशायिनं पथिपार्श्वे शयानं मत्तवारणं मदमत्तं हस्तिनम् उपरि तस्य पृष्ठे स्थितमिति शेषः। पुरुषं हस्तिपकम्

দেশ বলিয়া বিবেচনা আসিতে পারে না। (তাহার পক্ষে উভয় স্থলই সমান) কিন্তু এই বালিকা অতি কোমলা ; এ স্থান পরিত্যাগ করিতে যে দুর্গম পথে যাইতে হইবে, তাহা অত্যন্ত কষ্টকর এবং বিঘ্নবহুল, এই অনর্থ-কর দেশত্যাগকার্য্যে যেন বুদ্ধি ও সামর্থ্যের স্বল্পতা মনে হয়, অতএব ইহার সহিত এই স্থানেই সুখে বাস কর। চল ইহাকে ইহার নিজ আবাসে লইয়া যাই।' উদারক বিবেচনা না করিয়াই এ বিষয়ে সম্মতি প্রকাশ করিলেন এবং তৎক্ষণেই সেই বালিকাকে তাহার গৃহে লইয়া গিয়া তাহার নিকটেই সেই গৃহের সমস্ত বৃত্তান্ত জানিয়া

माक्रम्याध्यारोहाव। ग्रैवेयप्रोतपादयुगलेन च मयोत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः पुरीतल्लता-परीत-दन्त-काण्डः स रक्षिबलमक्षिणोत्। अध्वंसयाव चामुनैवार्थपति-भवनम्। अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकतया चावातराव। स्वगृहगतौ च स्नातौ शयनमध्यशिश्रियाव (च)।

आक्रम्य अपवाह्य, अध्यारोहाव आरूढ़वन्तौ आवामिति शेषः। ग्रैवेये हस्तिनो गललग्ने पाशे प्रोतं प्रवेशितं पादयुगलं येन तथाभूतेन "ग्रीवाविभूषणं रज्जौ ग्रैवं ग्रैवेयमित्यपि" इति वैजयन्ती। उत्थाप्यमानः उत्तोलितः उत्थितः कृत इत्यर्थः। पातितस्य प्रसह्य पृष्ठात् उत्सारितस्य आधोरणस्य हस्तिपकस्य पृथुले सुविशाले उरःस्थले वक्षःस्थले परिणतः तिर्य्यग्दन्तप्रहारकारी "तिर्य्यग्दन्तप्रहारी तु गजः परिणतो मत" इति हलायुधः। पुरीतत् नाडी सा लतेव तया परीतं युक्तं दन्तकाण्डं काण्डाकारः दन्तः यस्य तथाभूतः सः हस्ती रक्षिबलं नगररक्षिपुरुषसम्प्रदायम् अक्षिणोत् क्षपितवान्। अमुना एव मदमत्तेन तेन हस्तिना एव, अर्थपतेः भवनम् आगारम् अध्वंसयाव विनाशं नीतवन्तौ आवामिति शेषः। अपवाह्य निर्गमय्य तस्मादिति शेषः। शाखाग्राहिकतया कस्यचित् वृक्षस्य शाखावलम्बनेन, स्वगृहगतौ निजगृहे उपस्थितौ। शयनं शय्यातल्पम् अध्यशिश्रियाव आश्रितौ।

---

তস্করবৃত্তির দ্বারা মৃন্ময় পাত্রমাত্র অবশিষ্ট রাখিয়া সমস্ত বস্তু অপহরণ করিলাম। পরে তথা হইতে নির্গত হইয়া অপহৃত দ্রব্যগুলি একটী স্থানে রক্ষা করিয়া চলিলাম, যাইবার সময় কতকগুলি নাগরিকের সমাগমে পথিপার্শ্বশায়ী একটী মত্তহস্তীর পৃষ্ঠদেশ হইতে মাহুতকে ফেলিয়া দিয়া দুইজনে তাহার উপর উঠিলাম। আমি হস্তীর কণ্ঠস্থিত রজ্জুর অভ্যন্তরে চরণযুগল

तावद्देवोदगादुदधेरुदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुम-हेम-पल्लवापीड़पाटलं पतङ्गमण्डलम्। उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गलान्यनुष्ठाय अस्मत्कर्म्मतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम्। अथार्थैरर्थपतिः कुबेरदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमकल्पयत् (छ)।

(छ) तावत् एव तस्मिन्नेव काले, उदधेः समुद्रगर्भात् उदयाचलेन्द्रस्य उदयशैलश्रेष्ठस्य पद्मरागशृङ्गं पद्मरागमणिमयं शृङ्गं तत्कल्पं तत्तुल्यम् उपमालङ्कारः। कल्पद्रुमस्य कल्पवृक्षस्य हेमपल्लवापीड़ः—स्वर्णमयकिसलयावतंसः तद्वत् पाटलं लोहितवर्णं पतङ्गमण्डलं सूर्य्यमण्डलम् उदगात् उदगच्छत्। तदैव रक्तवर्णः सूर्य्यः समुदितोऽभूदिति भावः। सूर्य्यस्य उदयकाले समुद्रादिव तस्य उद्गमः प्रतीयते इति उदधेरिव उदगात् इत्युत्प्रेक्षा गम्या। 'पतङ्गौ पक्षिसूर्य्यौ च' इति नानार्थप्रकरणे अमरः। उत्थाय शयनादिति शेषः। धौतवक्त्रौ प्रक्षालितमुखौ प्रगेतनानि प्रभातकालीनानि, मङ्गलानि शुभानुष्ठानानि "सायं साये प्रगे प्रात"रित्यमरः। तस्माच्च प्रगेशब्दात् 'सायंचिरं'मित्यादिना भवार्थे तनट्प्रत्ययः। आवयोः उदारकस्य मम च कर्म्मणा अतीतायां रात्रौ निष्पादितेन भीषणेन विधिना तुमुलं सङ्कुलं पुरं, विस्मितैर्भीतैश्च जनसङ्घैः कोलाहलितं पुरमित्यर्थः। तुमुलं व्याकुलरवमिति वा "तुमुलो व्याकुलरव" इति हैमवचनात्। वधूगृहेषु अर्थपति-कुलपालिकार्थम् उपरचितेषु गृहेषु इत्यर्थः। कोलाहलं चीत्कारध्वनिम् अशृणुव तत्रैव अतीतायां रात्रौ अत्याचारविशेषस्य सम्पादितत्वात्। मास एव अवधिः सीमा यस्य तथाभूतम् एकमासमध्ये एव निष्पाद्यम् अकल्पयत् निरधारयत्।

প্রবিষ্ট করাইয়া তাহাকে উঠাইতে থাকিলে, সেই হস্তী ভূমিতলে পতিত মাহুতের বক্ষঃস্থলে বক্রভাবে দন্তপ্রহার করিল, এবং হস্তীর দন্তে মাহুতের নাড়ীসমূহ জড়াইয়া গেল, সেই অবস্থায় রক্ষিগণকে নষ্ট করিল।

उपह्वरे पुनरित्यशिक्षयं धनमित्रम्—"उपतिष्ठ सखे! एकान्त एव चर्म्मरत्नभस्त्रिकामिमां पुरस्कृत्याङ्गराजम्। आचक्ष्व च—"जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रम्। सोऽहं मूलहरत्वमित्यार्थिवर्गादस्मादवज्ञातः। मदर्थमेव संवर्द्धितायां कुलपालिकायां महादारिद्र्यदोषात् पुनः कुबेरदत्तेन दुहितर्य्यर्थपतये दित्सितायामुद्वेगादुज्झितुमसून्-

(ज) उपह्वरे रहसि, "रहोऽन्तिकमुपह्वरे" इत्यमरः। इति वक्ष्यमाण-रूपेण अशिक्षयम् उपादिशम्। एकान्ते निभृतस्थाने इमां चर्म्मरत्नभस्त्रिकां चर्म्म-मयीं रत्नाधारपेटिकां पुरस्कृत्य अग्रे उपहाररूपेण प्रदाय उपतिष्ठ प्रत्युद्गच्छ, आचक्ष्व कथय। नैककोटयः बहुकोटिसंख्याः साराः धनानि यस्य तथाभूतस्य असीमसम्पत्तिशालिनः वसुमित्रस्य तदाख्यवणिजः। एकपुत्रम् अद्वितीयं तनयं जानाति। सः अहम् असीमधनशालिनः वसुमित्रस्य तनय अपीत्यर्थः। अर्थि-वर्गात् याचकसमूहात् मूलहरत्वं स्थितधनभंशकारित्वम् एत्य प्राप्य सर्व्वमेव धनजातम् अर्थिभ्यो दत्त्वा एकान्ततो दारिद्र्यं प्राप्य इत्यर्थः। अवज्ञातः अवमानितः अस्मि मदर्थं ममैव उद्देशेन, मया सह परिणयनिश्चयेन इति भावः। दुहितरि

পরে ঐ হাতীর দ্বারাই অর্থপতির ভবন নষ্ট করিলাম, অর্থপতির ভবন হইতে নির্গত হইয়া এক জীর্ণোদ্যানে তরুশাখা অবলম্বন করিয়া অবতীর্ণ হইলাম, পরে নিজগৃহে যাইয়া স্নানানন্তর শয়নতল আশ্রয় করিলাম। (ঙ-চ)

তখনই সমুদ্রগর্ভ হইতে উদয়াচলের পদ্মরাগময় শৃঙ্গতুল্য কল্পদ্রুমের হেমময় পল্লববৎ পাটলবর্ণ সূর্য্যমণ্ডল উদিত হইল। আমরা শয্যা হইতে উত্থিত হইয়া মুখপ্রক্ষালনানন্তর প্রাতঃকর্ত্তব্য মঙ্গলকার্য্য অনুষ্ঠান

पनगरभवं [ उपपौरिक ] जरद्वनमवगाह्य कण्ठन्यस्तशस्त्रिकः केनापि जटाधरेण निवार्य्यैवमुक्तः—"किन्ते साहसस्य मूलम्" इति। मयोक्तम् 'अवज्ञासोदर्य्यं दारिद्र्यम्' इति ( ज )। स पुन-

कुलपालिकायां दित्सितायां दातुमिष्टायां मत्याम् उद्वेगात् तदीयविरहोत्कण्ठाविकारात् असून् निजान् प्राणान् उज्झितुं परिहातुम् उपनगरे नगरोपकण्ठे भवं जातं नगरोपान्तवर्त्ति इत्यर्थः। जरद्वनं जीर्णोद्यानम् अवगाह्य प्रविश्य, कण्ठे निजगले न्यस्ता स्थापिता शस्त्रिका कृपाणिका येन तथाभूतः शस्त्रिकासाहाय्येन कण्ठं छित्त्वा। मर्त्तुमुद्यत इत्यर्थः। एवं वक्ष्यमाणरूपम् उक्तः अहमिति शेषः साहसस्य शस्त्रिकाप्रयोगेण स्वेच्छया प्राणविसर्ज्जनरूपस्य निर्व्विवेककर्म्मणः मूलं वीजभूतं कारणं किम्? नहि साधारणेन कारणेन जीवाः प्राणेषु निस्पृहा भवन्तीति भावः। अवज्ञायाः लोकानां घृणायाः सोदर्य्यम् एकस्थानभवं दारिद्र्यं दीनता तदेव मे साहसस्य मूलमिति भावः। तथाहि यत्र दारिद्र्यं तत्र एव लोकानामवज्ञा इति व्याप्तिः सिद्धा, तेनैव अर्थाभावात् सम्प्रति मयि लोका अवज्ञामुपदर्शयन्ति इति लोकैरवज्ञातं जीवनं परिहातुमुद्यतः अस्मीति तात्पर्य्यम्।

করিয়া আমাদের কৃতকার্য্যে ভীতিবশতঃ ব্যাকুলতাপূর্ণ পুরে বিচরণ করিতে করিতে বরবধূগৃহে কোলাহল শুনিতে পাইলাম। পরে অর্থপতি অর্থদ্বারা কুবেরদত্তকে আশ্বস্ত করিয়া কুলপালিকার বিবাহ এক মাস পরে নির্দ্দিষ্ট করিলেন। গোপনে আমি ধনমিত্রকে আবার শিক্ষা দিলাম "এই চর্ম্মরত্নভস্ত্রিকা অঙ্গরাজকে পুরস্কার দিয়া বল—মহারাজ জানেন যে আমি কোটি ধনশালী বসুমিত্রের একমাত্র পুত্র ধনমিত্র; আমি অর্থিবর্গেকে সমস্ত ধন দান করিয়া সম্পূর্ণ নিঃস্ব হইয়া পড়ায় লোকের অবজ্ঞার পাত্র হইয়াছি। কুবেরদত্ত কুলপালিকাকে আমার নিকট দান

रेवं कृपालुरन्वग्रहीत्—"तात! मूढोऽसि, नान्यत् पापिष्ठतममात्मत्यागात्। आत्मानमात्मनाऽनवसादैवोद्धरन्ति सन्तः। सन्त्युपाया धनार्जनस्य बहवः, नैकोऽपि छिन्नकण्ठप्रतिसन्धानपूर्व्वस्य प्राणलाभस्य। किमनेन? सोऽस्म्यहं मन्त्रसिद्धः। साधि-

(क) सः जटाधरः कृपालुः दयापरः सन् एवं वक्ष्यमाणरूपेण अन्वग्रहीत् अनुगृहीतवान् मामिति शेषः। तात वत्स! मूढः कर्त्तव्यज्ञानशून्यः, असीति क्रियापदम्, त्वमित्यर्थे अव्ययं वा। आत्मत्यागात् स्वेच्छया देहविसर्ज्जनात् आत्महत्याकार्य्यात् अन्यत् अपरं किमपि कृत्यं न पापिष्ठतमं प्रचुरपापजुष्टम्। तथाहि आत्महत्याजनितं पापमेव सर्वेभ्यः पापेभ्यः समुत्कटतरम् अतएव विरम्यतामस्मादात्मत्यागादिति भावः। सन्तः साधवः आत्मना स्वयम् आत्मानं स्वम् अनवसाद्य विक्षोभमनीत्वा एव न तु अवसाद्यापि इत्येवशब्दव्यवच्छेद्यम्। उद्धरन्ति उन्नमयन्ति विपद्भ्यस्त्रायन्त इत्यर्थः। धनार्ज्जनस्य अर्थोपार्ज्जनस्य बहवः नानाविधाः उपायाः गतयः सन्ति, छिन्नः कर्त्तितः यः कण्ठः तस्य प्रतिसन्धानं पुनः सम्मेलनं तदेव पूर्व्वं यस्य तथाभूतस्य प्राणलाभस्य जीवनप्राप्तेः एकः अपि उपायः न अस्तीति शेषः। तथाहि यदि प्राणास्तिष्ठेयुः तदा कदाचित् कथञ्चित् अर्थः प्राप्तव्यः जीवनत्यागे तु न पुनर्ज्जीवनमिति महानयं प्रभेद इति

করিবেন বলিয়া এযাবৎ তাহাকে বঞ্চিত করিয়াছেন, পরে আমার দারিদ্র্য উপস্থিত হওয়ায় ধনী অর্থপতির নিকট তাহাকে দান করিতে ইচ্ছা করিলেন, আমি দুঃখবশতঃ প্রাণপরিত্যাগ করিবার জন্য নগরোপান্তে স্থিত জীর্ণোদ্যানে প্রবেশ করিয়া কণ্ঠে ছুরিকা স্থাপন করিলে এক জটাধারী পুরুষ আমাকে বারণ করিয়া বলিলেন,—'তোমার এ সাহসের কারণ কি?' আমি বলিলাম,—'অবজ্ঞার সহজাত দারিদ্র্যই ইহার মূল।'

तेयं लक्षग्राहिणी चर्म्मरत्नभस्त्रिका, चिरमहमस्याः प्रसादात् कामरूपेषु कामप्रदः प्रजानामवात्सम्। मत्सरिण्यां जरसि भूमिस्वर्गमत्रोद्देशे प्रवेक्ष्यन्नागतः। तामिमां गृहाण (भ)। मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे, इति हि तद्गता प्रतीतिः। किन्तु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयं न्यायार्जितन्तु देवब्राह्मणेभ्यस्त्याज्यम्। अथेयं देवतेव

अतः विरम्यतां प्राणपरित्यागादिति प्राह—किमनेनेत्यादि। अनेन कण्ठच्छेदनेन किम् अलं जीवनत्यागेन इति भावः। मन्त्रसिद्धः सिद्धमन्त्रः एतेन अशक्यसाधनक्षमता आत्मनो दर्शिता। लक्षग्राहिणी प्रतिदिनं लक्षमुद्राप्रतिपादिका, चर्म्मरत्नभस्त्रिका साधिता तपःसिद्धिवशादुपार्ज्जिता। तस्याः मन्त्रसिद्धिवशात् लब्धायाः चर्म्मभस्त्रिकायाः प्रसादात् अनुग्रहात्। कामरूपेषु तदाख्यप्रदेशे "बहुत्ववदस्वादे"रिति कामरूपशब्दाद्बहुवचनम्। प्रजानां तत्रत्यानां जनानां कामप्रदः यथाभिलषितविषयनिष्पादकः। मत्सरिण्यां विषयभोगमसहमानायां जरसि वार्द्धक्ये अत्र उद्देशे, एतस्मिन् देशे, भूमिस्वर्गं मर्त्त्यभूमौ स्वर्गतुल्यम् एतन्नगरं प्रवेक्ष्यन् प्राप्तुमिच्छन्, तां प्रत्यहं लक्षमुद्रानिष्पादिकाम् इमां चर्म्मभस्त्रिकां गृहाण त्वमिति शेषः। एतयैव तव दारिद्र्यम् अपगमिष्यति, तत् किमपि व्यर्थमेव दारिद्र्यकष्टात् आत्महत्यारतिं धत्से इति भावः।

(भ) मदन्यत्र मत्तः अपरत्र च इयं चर्म्मरत्नभस्त्रिका वणिग्भ्यः व्यवसायिभ्यः, वारमुख्याभ्यः प्रधानगणिकाभ्यो वा दुग्धे स्वयं प्रसूते धनराशिम् आत्मनैव निष्पा-

সেই কৃপালু অনুগ্রহপূর্ব্বক আবার বলিলেন—'বৎস! তুমি অত্যন্ত মূঢ়' আত্মহত্যা হইতে আর উৎকট পাপ নাই। বুদ্ধিমান্ ব্যক্তি আপনাকে ক্লেশ না দিয়া আপনা হইতে আপনাকে উদ্ধার করেন। ধন উপার্জ্জন

शुचौ देशे निवेश्याच्च्र्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते, स एष कल्पः" इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि ग्रावच्छिद्रं प्राविशत्। इयञ्च रत्नभूता चर्म्मभस्त्रिका देवायानिवेद्य नोपजीव्या इत्यानीता, परन्तु देवः प्रमाणम्" इति (ज)।

दयतीत्यर्थः, इति हि एवंरूपा तद्गता चर्म्मरत्नभस्त्रिकासम्बन्धिनी प्रतीतिः प्रत्ययः। यस्य सकाशात् समीपात् अन्यायेन अनियमेन प्रवञ्चनादिना इत्यर्थः। अपहृतम् आसादितं, तत् वस्तु तस्मै तद्वस्तुनः पूर्व्वस्वामिने प्रत्यर्पणीयं प्रतिपादनीयम्। न्यायेन सद्भावेन अर्ज्जितं लब्धं वस्तु देवब्राह्मणेभ्यः तदुद्देशेन त्याज्यं तेभ्यो देयमित्यर्थः। इयं भस्त्रिका, देवतेव देवतातुल्या, शुचौ शुद्धियुक्तदेशे स्थाने निवेश्य संस्थाप्य, कल्पः प्रकारः, एवं वृत्तान्तोऽस्या भस्त्रिकाया इति भावः। इति एवम् उक्त्वा बद्धाञ्जलये कृताञ्जलये। ग्रावणः प्रस्तरखण्डस्य छिद्रं रन्ध्रं द्विधाविभक्तस्य पाषाणस्य रन्ध्रं काञ्चित् शैलगुहां वा प्राविशत् प्रविष्टवान्, अत अदृश्यो जात इति भावः। एतदप्यस्य महात्मनः तपःसिद्धमेव प्रचुरां व्यनक्ति इति मन्तव्यम्। इयं दृश्यमाना रत्नभूता रत्नस्वरूपा उत्कृष्टतमा इत्यर्थः। अथवा रत्नानि भूता प्राप्ता निष्पाद्यतया बहुरत्नयुक्ता इत्यर्थः। देवाय महाराजाय अनिवेद्य अविज्ञाप्य न उपजीव्या उपजीविकासाधकतया व्यवहार्य्या इति हेतोः आनीता भवत्समीपमिति शेषः। परम् एतदनन्तरं देवः प्रमाणं कर्त्तव्याकर्त्तव्यनिर्देशे प्रभुरित्यर्थः।

করিবার বহু উপায় আছে, ছিন্নকণ্ঠের সংযোজনপূর্ব্বক প্রাণলাভের একটিও উপায় নাই। আর ইহাতে প্রয়োজন কি? আমি মন্ত্রসিদ্ধ। আমি লক্ষ মুদ্রাদায়ক চর্ম্মরত্নভস্ত্রিকা (থলে') সাধন করিয়াছি, আমি ইহার অনুগ্রহে কামরূপে বহুকাল যাবৎ প্রজাগণের কামনাফল প্রদান করিয়া বাস করিয়াছি, ভোগপ্রতিবন্ধক জরাবস্থায় ভূমিস্বর্গসদৃশ এই

राजा च नियतमेव वक्ष्यति—"भद्र! प्रीतोऽस्मि, गच्छ, यथेष्टमेनामुपभुङ्क्ष्व" इति। भूयश्च ब्रूहि—"यथा न कश्चिदेनां मुष्णाति, तथानुगृह्यताम्" इति। तदप्यवश्यमसावभ्युपेष्यति। ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्नक्तमापूर्य्य प्राह्ने लोकाय दर्शयिष्यसि। ततः कुवेरदत्तस्तृणाय मत्वार्थपतिमर्थलुब्धः कन्यया स्वयमेव त्वामुपस्थास्यते (ट)। अथ कुपितोऽर्थपतिर्व्यवहर्त्तु-

(ट) राजा अङ्गराजः, नियतं निश्चितमेव वक्ष्यति कथयिष्यति वक्ष्यमाणमिति शेषः। प्रीतोऽस्मि तव अनेन धनार्ज्जनोपायलाभेन, तस्य च मयि निवेदनेव भोगकामनया इति भावः। एनां भस्त्रिकां यथेष्टं स्वच्छन्दं उपभुङ्क्ष्व उपभोगं कुरु, एतस्या लब्धैर्धनैः आत्मभरणकर्म्मादि सम्पादय इति भावः। मुष्णाति चोरयति तदपि अस्या अन्येन मोषणवारणरूपं कर्म्म, असौ राजा अभ्युपेष्यति स्वीकरिष्यति, यथोक्तं यथाकथितम् अर्थानां धनानां त्यागं देवब्राह्मणेभ्यो दानं, वरिवस्यमानाम् अर्च्च्यमानां शुश्रूष्यमाणामित्यर्थः। "वरिवस्या तु शुश्रूषा" इत्यमरः। स्तेयेन चौर्य्येण लब्धैः प्राप्तैः, नक्तं रात्रौ, आपूर्य्य परिपूर्णां कृत्वा, प्राह्णे प्रभाते, लोकाय साधारणजनाय दर्शयिष्यसि, अर्थलुब्धः धनलोभी कुवेरदत्तः कुलपालिकाया जनकः अर्थपतिं स्वेन इदानीम् अभीष्टमपि त्वद्विरोधिनं तदाख्यं जनम्। तृणाय मत्वा तृणतुल्यं लघु विभाव्य, त्वदर्थदर्शनात् त्वामेव च तस्मात् अधिकधनं मत्वा इत्यर्थः। उपस्थास्यते आराधयिष्यति, कन्यां दत्त्वा त्वां तोषयिष्यतीति शेषः।

নগরে প্রবেশ করিবার জন্য আসিয়াছি, সেই চর্ম্মরত্নভস্ত্রিকা এই গ্রহণ কর। (ছ-জ-ঝ)

আমা অপেক্ষা অন্য ব্যক্তির কাছে ধন দান করিতে হইলে বণিক্ বা

